वेदनिघण्टुः (समाम्नायः)
(मालजितो) वेदाङ्गरायस्य पारसीप्रकाशः p. l
वेदान्तरत्नकोशः
वेदार्थनिघण्टुः
वैजयन्ती यादवप्रकाशस्य p xxvif
वैद्यकनिघण्टुः
वैभाषिककोशः p. xlviii
वोपालितसिंहस्य कोशः p. xxxv
व्याडिकोशः p. xii
शब्दकल्पद्रुः केशवस्य
शब्दकल्पद्रुमो राधाकान्तदेवस्य p. xlvf
शब्दकोशः
शब्दचन्द्रिका चक्रपाणिदत्तस्य p l
शब्दचिन्तामणिर्व्यासविठ्ठलाचार्यस्य
शब्दतरङ्गिणी
शब्दप्रकाशः
,, अप्पयदीक्षितस्य
,, शिवदीनस्य
शब्दप्रभेदनाममाला (शब्दभेदप्रकाशः)
शब्दभेदः
शब्दभेदनिर्देशः
शब्दभेदप्रकाशः p. xxxviii
शब्दभेदज्ञानं विमलगणेः
शब्दमाला
,, रामेश्वरशर्मणः
शब्दमुक्तामहार्णवस्तारामणेः (Dict. for Colebrooke)
शब्दरत्नकोशः
शब्दरत्नसमन्वयः शाहजीराजस्य
शब्दरत्नाकरः
,, महीपस्य p. xli
,, वामनभट्टस्य p. xlii
श्री ,, साधुसुन्दरगणेः p xlviii
शब्दरत्नावली मथुरेशस्य p. xliv
शब्दलिङ्गार्थचन्द्रिका सुजनस्य p. xliv
शब्दशब्दार्थमञ्जूषा p. xliv
शब्दसंग्रहनिघण्टुरगस्त्यस्य (अगस्त्यव्याकरणोक्तशब्दकोशः)
शब्दसंदर्भसिन्धुः काशीनाथभट्टाचार्यस्य (for Sir W. Jones)
शब्दसारनिघण्टुः
शब्दस्तोममहानिधिर्वाचस्पत्यसंक्षेपः
शब्दाब्धितरिः रामगोविन्दस्योणादिकोशः p xlviii
शब्दाब्धिः प्राणकृष्णाज्ञया संगृहीतः
शब्दार्णवः p xvf
शब्दार्णवाभिधानं (शब्दसंदर्भसिन्धुः)
शर्मण्यकोशः (Roth, Bohtingk, and Schmidt)
शाकनिघण्टुः सीतारामशास्त्रिणः ।
शाश्वतस्यानेकार्थसमुच्चयः p. xxxlvf
शिवकोशः शिवदत्तस्य p l
शिवदीनस्य शब्दप्रभेदकोशः
शेषसंग्रहनाममाला हेमचन्द्रस्य p. xxvii
तट्टीका वल्लभगणिकृता
शेषसंग्रहसारोद्धारो हेमचन्द्रकृतः
श्रीधरकोशः
श्रीशब्दरत्नाकरः साधुसुन्दरगणेः p. xlviii
श्रीहर्षकवेः अमरखण्डनम्
,, द्विरूपकोशः p. xlvii
,, श्लेषार्थपदसंग्रहः
श्रौतपदार्थनिर्वचनम्
षडर्थनिर्णयः कविराक्षसस्य
षड्दर्शननिघण्टुः
षड्रसनिघण्टुः p xlix
षण्मुखवृत्तिनिघण्टुः
संसारावर्त्तः p xi
सकारभेदः पुरुषोत्तमस्य
सगुणावतीवर्णबीजकोषः
संख्यारत्नकोशः
सज्जनकोशः
संजीवनी कोषः
सरस्वतीविलासो नाम द्विरूपकोषः सरिद्वल्लभमिश्रस्य p. xlviii
साध्यकोषः
सारसंग्रहनिघण्टुः
सिद्धमूलिकानिघण्टुः

# विषयानुक्रमणिका ।

पत्र-सङ्ख्या ।

## १ भूमिस्कन्धः ।

पत्र-सङ्ख्या।

## २ भुवःस्कन्धः।



## ३ स्वर्गस्कन्धः।

# केशवकृतः कल्पद्रुकोशः

गुरुं श्रीदक्षिणामूर्त्तिं विभुं विश्वेश्वरं परम् ।
सर्वज्ञं तमनाद्यन्तं रात्रिंदिवमुपास्महे ॥१॥
कात्यवाचस्पतिव्याडिभागुर्यमरमङ्गलाः ।
साहसाङ्कमहेशाद्या विजयन्ते जिनान्तिमाः* ॥२॥
समालोक्य मतान्येषां कल्पद्रुरखिलार्थदः ।
क्रियते केशवेनायं नामप्रकृतिबोधनः ॥३॥
रूपोक्तथा साहचर्याद्वा विशेषविधितः क्वचित् ।
स्त्रीपुंक्लीबप्रकृतयो ज्ञेयास्तत्र स्त्रियां स्त्रियि ॥४॥
स्त्री पुंसि ना नरि पुमान् पुं क्लीबे षण् नपुंसकम् ।
युग्मे द्वयोस्त्रिप्रकृतौ त्रिषु, शेषार्थवाचकम् ॥५॥
निषेधेत्वादिमग्राहि स्वार्थानामन्तगामिनाम् ।
अ'थारम्भेथ पर्यायपरिवृत्तिप्रसङ्गतः ॥६॥
प्रत्ययार्थैः प्रकृतयस्तदुत्पत्तिप्रसङ्गतः ।
पर्यायिपदमारभ्य ज्ञेयं नामात्र सर्वतः ॥७॥
समस्तपदपर्यायपरिवर्त्तनमत्र तु ।
आलंकारिकसिद्धान्तासह्यत्वेऽपि विलोक्यताम् ॥८॥

---

टिप्पणानि

* जिनोऽत्रहेमचन्द्रोऽभिप्रेत इति प्रतिभाति । वैजयन्तीकृतो यादवस्य नाम कथं न गृहीतं केशवेनेति न विद्मः ॥

येषां नातिप्रसिद्धानां शब्दानामिह संग्रहः ।
तेषां महाकविग्रन्थैः संवादोऽनुविधीयताम् ॥९॥

---

विनायकः पृश्निशृङ्गो गत्रिधातुश्च तुन्दिलः ।
द्वैमातुरः स्याद्धेरम्बो विघ्नो लम्बोदरार्थकः ॥१०॥
एकार्थद्रदपर्याय ईशार्थो गणविघ्नयोः ।
मूषवाहनपर्यायो हस्तिनोर्थान्मुखार्थकः ॥११॥
अपि वल्लभपर्यायः सिन्दूरमोदकार्थयोः ।
वक्रपर्यायशुण्डार्थः षण्मुखार्थाग्रजार्थकः ॥१२॥
वक्रार्थात्पादभुजयोः पर्यायश्च सदामदः ।
शिवपर्यायपुत्रार्थश्चतुःपञ्चभुजार्थकः ॥१३॥
स्त्रियां गौर्धरणी[1] धात्री भूर्धरेडावनी स्थिरा ।
धरित्री भूतधात्र्युर्वी क्ष्मावनिर्ज्या मही क्षमा ॥१४॥
धारणी काश्यपीरा कुर्मेदिनी वसुधा पुनः ।
रत्नपर्यायगर्भार्थाऽचलानन्तापि च क्षितिः ॥१५॥
विश्वंभराद्या जगती गोत्रा पृथ्वीरसा पुनः ।
क्षोणी सर्वसहा क्षोणिः कुम्भिन्यपि च निर्ऋतिः ॥१६॥
वसुंधरा वसुमती ग्मा ज्या भूमिश्च माधवी ।
स्त्रियां पूषा क्रोडकान्ता पृथिवी महिरित्यपि ॥१७॥

---

१ धिर्धा[B]

ह्वाऽदितिर्निश्चला स्याद्वीजपर्यायसूरपि ।
अब्धिपर्यायवस्त्रार्था श्यामा भूतार्थमातृका ॥१८॥
भूरलिङ्गं च पृथिवी भूमी स्याद्वसुधारिणी ।
शैलाधारा गन्धमाता सुधा विश्वा च गह्वरी ॥१९॥
स्यादिला पर्वतार्थेभ्यः कीलार्था गातुरित्यपि ।
उर्वरा सर्वसस्याढ्या मृदा मृन्मृत्तिका समा ॥२०॥
मृत्स्ना मृत्सा प्रशस्ता स्यात्पुंस्युषः[1] क्षारमृत्तिका ।
स्त्र्युषाप्यथ भुवः सान्तमव्ययं द्योदिवौ स्त्रियौ ॥२१॥
पुंस्याकाशः क्लीबपुंसोर्विहायाः षण्नभोम्बरम् ।
पुष्करं व्योम गगनमनन्तं खं दिवं वियत् ॥२२॥
अन्तरिक्षं चान्तरीक्षं स्याद्विष्णवर्थपदार्थकम् ।
देवपत्नीषुवाय्वर्कचन्द्रनक्षत्रयोगिनाम् ॥२३॥
पर्यायान्मार्गपर्यायि[2] दिगवस्थानमित्यपि ।
सुरपर्यायलोकार्थो नाकः स्वर्गः स्वरव्यम् ॥२४॥
देवपर्यायसद्मार्थं द्योदिवौ द्वे स्त्रियाविमे ।
त्रिदिवोऽपि च मेर्वर्थाच्छृङ्गार्थं षण्त्रिविष्टपम् ॥२५॥
स्त्रियां बृहत्यौ रोदस्यौ बृहती रोदसी च ते ।
घृतवत्यौ च रोधस्यावपारे रोधसी अपि ॥२६॥

---

द्यावाभूमी घृतवती द्यावापृथिवी इत्यपि ।
दिवस्पृथिव्यौ च द्यावापृथिव्यावेकवाक्यतः ॥२७॥
स्यात्त्रियां जगती क्लीबे जगद्विष्टपपिष्टपौ ।
अस्त्रियौ भुवनं क्लीबे लोकः स्यात्पुंसि चाप्यथ ॥२८॥
कल्पद्रौ केशवकृते भूमिस्कन्धे शुभोत्तरे ।
इत्ययं प्रथमो वृत्तः कल्पद्रोरङ्कुरोद्गमः ॥२९॥
भूर्भुवःस्वरङ्कुरोद्भेदः ।

---

नीवृज्जनपदो जानपदश्च विषयः पुमान् ।
देशः प्रदेशोऽस्त्री राष्ट्रं स्त्री स्थितिश्चावकाशकः ॥१॥
पदोपवर्तने स्थानं षण्णयं त्रिविधः क्रमात् ।
नानाद्रुमलतावीरुन्निर्झरप्रान्तशीतलैः ॥२॥
सुमृगैः कुरराद्यैश्च पक्षिव्रातसमन्वितैः ।
वनैर्व्याप्तं ताम्रभुवं सस्यैर्व्रीहियवादिभिः ॥३॥
क्लीबेऽनूपं पुंसि कच्छः स्यादथास्य विपर्यये[1] ।
नवैरल्पतृणैर्व्याप्ता धूसरा भूः फलाधिका ॥४॥
यत्र प्रदीप्तार्ककरैर्गावोजाभूरिदुग्धदाः ।
नीरुजः प्राणिनः कूपजलपाजाङ्गलः स च ॥५॥

यत्र युक्तं द्वयोर्लक्ष्म गोधूमचणकावृतम् ।
यावनाला[1]माषयवैर्व्याप्तं साधारणं त्रिषु ॥६॥
देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः ।
हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि ॥७॥
प्रत्यगेव प्रयागाच्च मध्यदेशः स मध्यमः ।
प्रत्यन्तोनार्यदेशः स्यान्मध्यं विन्ध्यहिमागयोः[2] ॥८॥
पूर्वपाश्चात्ययोरब्ध्योर्नदी यावच्छरावती ।
आर्यपर्यायतः स्थानमाव[3]र्त्तमपि वाच्यवत् ॥९॥
स्त्रियामाचारवेदी स्यात्सर्वधर्मपुरस्कृतम्[4] ।
गङ्गायमुनयोर्मध्यमन्तर्वेदिः[5] शमस्थली ॥१०॥
ब्रह्मावर्त्तः सरस्वत्या दृषद्वत्याश्च मध्यभूः ।
ब्रह्मवेदिः कुरुक्षेत्रं पञ्चरामहृदान्तरा[6] ॥११॥
धर्मक्षेत्रं विशसनं कुरुजाङ्गलमित्यपि ।
पाण्डूदकृष्णतोभूमः पाण्डूदकृष्णभूमिके[7] ॥१२॥
कुमुद्वान्कुमुदप्रायो वेतस्वान्बहुवेतसः ।
नडकीयो नडप्रायः स्यान्नड्वान्नड्वलश्च सः ॥१३॥
शाद्वलः शादहरितः सजम्बालोतिपङ्किलः ।
अपि नद्यम्बुवृष्टम्बुसंपन्नव्रीहिपालितः ॥१४॥

---

१ लैर्माष[B] २ ल[B] ३ वर्तः श्रम. ४ परिष्कृ[B] ५ समस्थली हे ६ दं तथा[B]

नदीदेवार्थयोर्मातृकार्थकः स्यादनुक्रमात् ।
नदीवृष्ट्यम्बुजैः सस्यैर्युक्तो द्वैमातृकश्च[1] सः ॥१५॥
ऊषरस्तूषवानूषो ह्रस्वादिरपि कीर्त्तितः ।
स्त्री शर्करा तु वा भूम्नि देशे शार्करिलस्त्रिषु ॥१६॥
शार्करः शर्करावांश्च देशे चान्यत्र च त्रिषु ।
सिकता स्त्री बहुत्वे वा देशे सिकतिलस्त्रिषु ॥१७॥
सैकतः सिकतावांश्च देशे चान्यत्र च त्रिषु ।
स्त्रियां वा भूम्नि सिकता-वालुका वालिकापि च ॥१८॥
पांगडुभूमप्रभृतयश्चान्यलिङ्गाः स्थली न ना ।
सुराज्ञि देशे राजन्वान् कुराजनि तु राजवान् ॥१९॥
कुमुद्वदाद्यास्त्रिष्वेत इतः पुंभूम्नि चैकवत् ।
स्या[2]द्वह्लिकस्तु[3]वह्लीको[4]वाह्लीको[5]वाह्लिकोपि च ॥२०॥
चोलश्चोडोथ यवनो जवनः पारसीककः ।
स च पारसिकोपि स्यात् वाना[6]युस्तु वना[7]युकः ॥२१॥
दरत्स्त्रियां च दरदा कन्यकुब्जः कुशस्थलम् ।
कन्याकुब्जः कान्यकुब्जः कोशलः कोसलोपि च ॥२२॥
तीरभुक्तिस्तीरभुक्तो विदेहो मिथिलः समाः ।
[8]चेदिश्चैद्योडह्वालस्तु डाह्वालो डाहलश्च सः ॥२३॥

---

१ मातुर[B] २ द्व[B] ३ ब[B] ४ बा[B] ५ बा[B] ६ यु[KC] ७ युव[B] ८ चेदि-

देशे तु पुंसि काशिःस्याद्वाराणसवराणसौ ।
शुक्तिकः सुक्तिकस्तुल्यौ समौ कौंकणकोंकणौ ॥२४॥
कंपिल्लो[1]पिचकांपिल्लः कांपि[2]ल्ल्योपि निगद्यते ।
आपिकौपिल्लकौ पिल्ल्यौ[3] कामरूपस्तु कामरूः ॥२५॥
श्रीह[4]ट्टो हरिकेलिः स्या[5]च्छ्रीहट्टोपि कचिद्भवेत् ।
ब्राह्मं चात्रं च वैशेयं शौद्रं चेत्रं चतुर्विधम् ॥२६॥
चेत्रं ब्राह्मं जलकुशमृगपक्षिगणावृतम् ।
सद्वृक्षैः फलदैर्युक्तं श्वेतमृद्बैधमित्यथ ॥२७॥
चात्रं क्रूरमृगव्यालघोरघोषिगणावृतम् ।
आरक्तभूमिकं वृक्षैः कण्टकाढ्यैर्विराजितम् ॥२८॥
तच्छात्रकतवं चाथ वैशेयं तु निधानवत् ।
सिद्धकिन्नरगंधर्वदैवतौघविराजितम् ॥२९॥
कौबेरं पीतमृत्कंतदथ शौद्रं तु कृष्णमृत् ।
सर्व[6]कृषु[7]कलोद्वानां कर्षकं बहुसस्यदम् ॥३०॥
क्रूराक्रूरमृगोपेतं बबू[8]रखदिरावृतम् ।
तच्छौमं स्यादथ क्षेत्रे तत्तद्वस्तूद्भवोचिते ॥३१॥
यव्यं यवक्यं यावेयं षाष्टिकं त्रैहिकं च तत् ।
त्रैहेयमाणवीनं स्यादाणवं शाकशाकटम् ॥३२॥

शाकशाकटिनं तिल्यं तैलीनं माष्यमित्यपि ।
माषी[1]न[2]मुम्यमौमीनमौमं मौद्गीनमित्यपि ॥३३॥
मौद्गं भङ्ग्यं च भाङ्गीनं भाङ्गं स्यात्कोद्रवीणकम्[3] ।
बीजाकृतं तूप्तकृष्टंसीतं[4] हल्यं ह[5]ले कृतम् ॥३४॥
त्रिगुणाकृतं त्रिहल्यं त्रिसीत्यं द्विगुणाकृतम् ।
दिहल्यं चैकहल्यादि ज्ञेयं शम्बाकृतं च तत् ॥३५॥
द्रोणकाढकवापादौ द्रौणिकाढकिका[6]दिकम् ।
खारीवापे तु खारीकमस्त्रियां वप्रइत्यपि ॥३६॥
केदारश्च पुनर्वाट एषां कैदारिकं गणे ।
एपूद्भूतं वस्तुजातं त्रिषु स्यादकृते खिलम् ॥३७॥
तथाचाप्रहृतं क्लीबे मरुर्धन्वा[7]नुभौ नरि ।
गोष्ठं गोस्थानकं क्लीबे गौष्ठीनं भूतपूर्वकम् ॥३८॥
तदाशितंगवीनं[8] स्याद्गावो यत्राशिताः पुरा ।
कल्पद्रौ केशवकृते भूमिस्कन्धप्ररोहके ।
देशप्रकाण्डः प्रथमः साङ्गोऽयं सिद्धिमागतः ॥३९॥

---

क्लीबेतिलम्बे स्थानीयं मुद्रङ्गो विवशः पुमान् ।
नमं हैं (८५०) ग्रामभि[9]द्रोणमुखं कर्वटखर्वटौ ॥१॥

---

१ न KCB २ मुद्गयमौद्गीनमौद्गं मौद्गान B ३ त्कौ B ४ सीत्यं अमरपाठः
५ लैः B ६ दयः B ७ मरुधन्वावुभौ K मरुधन्वा उभौ B ८ य B

अस्त्रियां नर्मघे (४५०) आपि नर्मखेः २५० पुरमस्त्रियाम्।
तदर्द्धमस्त्रियां खेटस्तस्यार्द्धं पत्तनोऽस्त्रियाम् ॥२॥
तदर्द्धं निगमः पुंसि तदर्द्धं तु निवेशनम् ।
स्त्रियां पुरीपूःपुर्यः पुरं वा नगरं च वा ॥३॥
वा मन्दिरं पत्तनं स्यात्पट्टनं कटकोऽस्त्रियाम् ।
स्यादभिष्य[1]न्दिवमनमुपपर्यायतः पुरम् ॥४॥
शाखानगरपर्यायं ग्रामः कर्षुकवासभूः[2] ।
अथावसंनिपर्युपेभ्यः परः स्याद्वसथः पुमान् ॥५॥
जन्यं तु ग्रामपर्यायमुखपर्यायमित्यपि ।
पाटकस्तु[3] तद्बहिः[4] स्यादाघाटस्तु घटोवधिः ॥६॥
अन्तोवसानं स्त्री सीमा मर्यादापि च सीमनि ।
ग्रामसीमा तूपशल्यं ना कठः[5] कण्ठकश्च[6] सः ॥७॥
पुंसि क्लीबे तु मालः स्याद् ग्रामग्रामान्तराटवी ।
पर्यन्तभूः परिसरः स्यात्कर्मान्तस्तु कर्मभूः ॥८॥
आभीरपल्ली घोषः स्या[7]द्व्रजोनीशोवनांतरा ।
वाटोल्पके तु पल्ली स्त्री पल्लिरप्यथ न स्त्रियाम् ॥९॥
पक्कणः[8] शबरावासे वेश्याजनसमाश्रये ।
वेशः पुंसि स्त्रियां वेश्याप्यथ पुंसि द्विजन्मनाम् ॥१०॥

---

१ न्द Ragh २ कषुक [K] ३ ठ [KL] ४ हद्धिः [B] ५ [C] ६ नाटकः कण्ट-

अग्रहारोऽप्यथ ग्रामेल्पके ग्रामटिका[1] स्त्रियाम् ।
एको ग्रामपतिर्यत्र सभृत्यपरिचारकः[2] ॥११॥
कुटिका सैकभोगोऽसावप्यथो विपणिः स्त्रियाम् ।
पण्यवीथी च वीथ्यर्था चतुर्हट्टश्च[3] न स्त्रियाम् ॥१२॥
शूद्रस्य शासनं कृत[4]कीला पट्टो[5]लिकापि च ।
शासनं नैव कस्यापि[6] पांसुकीलाथ पूर्गणः ॥१३॥
गजाह्वयं हस्तिपुरं गजाह्वं गजसाह्वयम् ।
हस्तिनं हास्तिनपुरं हस्तिनापुरमित्यपि ॥१४॥
एकचक्रं हरिगृहं शंभुपर्यायवार्त्तनिः ।
शाकेतं चापि साकेतमयोध्योत्तरकोशला ॥१५॥
कोशलाथो कन्यकन्या-कान्येभ्यः कुब्जमित्यपि ।
महोदयं गाधिपुरं कौशं द्वारवतीत्यपि ॥१६॥
द्वारावती द्वारकापि द्वारिका च कुशस्थली ॥१७॥
वनमालिन्यथो पुष्पपुरं पाटलिपुत्रकम् ।
विदेहा मिथिला तुल्ये वेदिपर्यायपूरथ ॥१८॥
त्रिपुरी चेदिनगरी कौशाम्बी वत्सपत्तनम् ।
प्राजापत्यः प्रयागः स्यादग्निहोत्रगृहार्थकम्[7] ॥१९॥
मथुरा तु मधूपघ्नं मधुरा शिवपूरथ[8] ।
पुरीश्रेष्ठा तीर्थराजी जित्वरी च तपःस्थली ॥२०॥

---

१ ठि [K] २ वारि कः [B] ३ ह्र not in [KU] ४ [B] कृत्ता ५ पटो [B]
६ पांशू [K] पार्शू ७ प्रहार्थकम् [C] ८ शपि ?

काशी वाराणसी काशिर्वरणासी वराणसी ।
महाश्मशानमानन्दवनं क्लीबेऽविमुक्तकम् ॥२१॥
शिवपर्यायलिङ्गार्थमथस्यादुज्जयन्यपि ।
विशालोज्जयिनी पुष्पकरण्डिन्यप्यवन्तिका ॥२२॥
तदुद्यानं समाख्यातं क्लीबे पुष्पकरण्डकम् ।
देवीकोट्टो [1]वाणपुरं कोटीवर्षमुमावनम् ॥२३॥
स्याच्छोणितपुरं चाथ चमत्कारपुरार्थकम् ।
नगरं वृद्धनगरमथ सिद्धपुरं पुनः ॥२४॥
सारस्वतं हैहयपूर्माहिष्मत्यपि चोच्यते ।
[2]इन्दुपर्यायतः प्रस्थं योगिनीतः पुरार्थकम् ॥२५॥
पुरी नलस्य निषधा गयराजर्षिपूर्गया ।
पितृतीर्थं[3] राजगृहं जरासंधपुरं हि तत् ॥२६॥
चम्पा तु मालिनी कर्णलोमपादपुरीत्यपि ॥२७॥
स्त्रियां क्लीबे [4]तामलिप्तं दामलिप्तं तमालिनी ।
वेलाकूलं[5] स्तम्बपुरं विष्णुपर्यायपूरपि ॥२८॥
अथ वैदर्भपर्यायं कुण्डिनं कुण्डिनापुरम् ।
रथ्या प्रतोली[6] विशिखा नगराभ्यन्तरायनम् ॥२९॥
कोटो वप्रोऽस्त्रियां सालः प्राकारो वरणः पुमान् ।
अस्त्री दुर्गोच्चयं[7] क्लीबे पुनरावेष्टकः पुमान् ॥३०॥

कम्पावारोऽपि तद्वत्स्युस्तस्य भेदा अनेकशः ।
प्राकाराग्रं कपिकोटक्रमेभ्यः शिरसोऽर्थकम् ॥३१॥
प्राकारभित्तिमूले स्यात् स्त्रियां नेमिरतः पुनः ।
प्राचीनं[1] परिवारः स्याद्द्रुमादौ प्रान्ततो[2] वृतिः ॥३२॥
कुड्यमस्त्री स्त्रियां भित्तिः करभः पुंस्यथास्त्रियाम् ।
यदन्तर्न्यस्तमृतकदेहं प्रायोर्द्धकुड्यकम् ॥३३॥
एडूकमेडुकं न स्त्री स्यातामथ निवेशनम् ।
सदनं सादनं वेश्म भवनं मन्दिरं विटम्[3] ॥३४॥
निशान्तं धाम शरणं कुलं गेहं निकेतनम् ।
अगारं चोदवसितमागारं चाधिवासनम्[4] ॥३५॥
शिविरं विशयं पस्त्यमोको वस्त्यमिमानि षण् ।
शाला सभा च वसतिर्वसती च स्त्रियामिमाः ॥३६॥
गृहं निकेतं निलयमालयं पुन्नपुंसकम् ।
द्वयोः कुटी कुटीरो ना वेश[5] आवसथः क्षयः ॥३७॥
अध्यानिसंभ्यो वासः स्याद्विश्रामोवसथाश्रयौ ।
आवसथ्यो[6]ऽपि संस्त्यायो गृहाः पुंसि च भूम्न्यपि ॥३८॥
अलिन्दभेदैरेवं स्युर्गृहभेदाश्च षोडश ।
ध्रुवं हीनमलिन्देन धन्यं स्यात्प्रागलिन्दकम् ॥३९॥

---

१ रं[B] २ रं[B] ३ विढम् ? ४ सता[K] सितम्[C] ५ केश[C] ६ थ्या

जयं [1]स्याद्दक्षिणालिन्दमथालिन्दद्वयान्विते ।
पूर्वदक्षिणतो नन्दं कान्तं पश्चिमपूर्वतः ॥४०॥
मनोरमं च तत्प्रत्यग्दक्षिणालिन्दमुत्तमम् ।
क्रूरं पूर्वोत्तरालिन्दं दक्षिणोदक् सुपक्षकम् ॥४१॥
उदक् पश्चिमगालिन्दं क्षयं चाथ त्र्यलिन्दके ।
उत्तरालिन्दशून्यं[2] च सुमुखं परिकीर्त्तितम् ॥४२॥
पश्चिमालिन्दशून्येऽपि धनदं दक्षिणा हि च ।
अलिन्दहीनमानन्दं पूर्वालिन्दविवर्जितम् ॥४३॥
विपुलं सर्वतोलिन्दसंयुक्तं विजयं मतम् ।
हीनस्तम्भमलिन्दं[3] स्याच्छाला स्तम्भैः समावृता ॥४४॥
प्रघानः प्रघनस्तुल्यौ प्रघाणः प्रघणः स च ।
संजवनं संयमनं चतुःशालं स्त्रियां च षण् ॥४५॥
अस्त्रियामुटजः पर्णोटजोप्यथ नपुंसके ।
चैत्यमायतनं देवपर्यायेभ्यो गृहार्थकम् ॥४६॥
प्रासादः पुंस्यथाढ्यस्य गृहे हर्म्यं नपुंसकम् ।
हस्तिशाला तु चतुरं वाजिनां मन्दुरानना ॥४७॥
गवां संदानिनी चाथावेशनं शिल्पिनां च षण् ।
स्यान्मार्गे जलपानस्य [4]प्रपा सत्री प्रतिश्रयः ॥४८॥

---

संन्यासिनां च च्छात्राणां निलये स्यान्मठोऽस्त्रियाम् ।
चित्रशाला जालिनी स्यादथ तैलार्थशालिका ॥४९॥
यन्त्रसद्मार्थकं तन्तुवायशाला तु गर्त्तकी ।
कुशाला पक्षिशालायां शिल्पा खरकुटीत्यपि ॥५०॥
उपनी नापितगृहमास्थानं गृहभद्रकम् ।
कुम्भकारस्य शाला तु बुधैः पाकपुटीरिता ॥५१॥
खल्लूरिका तु मल्लानां श्रमस्य स्थानभूरथ ।
आथर्वणं शान्तिगृहं शान्तीगृहकमित्यपि ॥५२॥
कुट्टिमोऽस्त्री निबंद्धा भूश्चन्द्रशाला शिरोगृहम् ।
भाण्डागारे कोशकोषावस्त्रियां गञ्ज इत्यपि ॥५३॥
सुरागृहे स्त्रियां गञ्जा गुञ्जाथो सूतिकागृहम् ।
अरिष्टं सूतकगृहं वेशो वेश्यागृहे पुमान् ॥५४॥
वेश्यमप्यथ संधानी स्यात्स्त्रियां कुप्यशालिका ।
भौरिकी नैष्किकी टङ्कशाला लक्ष्मीगृहार्थकम् ॥५५॥
अस्त्री महानसं पाकशाला रसवती स्त्रियाम् ।
लेख्यस्थानं[1]ग्रन्थकुटी कारा स्याद्बन्दिशालिका ॥५६॥
स्याद्भोगगर्भवासार्थाद्गृहपर्यायमित्यपि ।
पुंसि क्लीबे ऽपवरकं शयनादास्पदार्थकम् ॥५७॥

निशागृहं तु गोजारिः स्त्रियां गुप्तगृहं च तत् ।
वारित्रापि च कारावी[1] भ्रमजङ्गमतः कुटी ॥५८॥
[2]मूर्द्धखोलं खपरिका क्लीबे पत्रपिशाचिका ।
कायमानं ननोशीरसुगन्धतृणनिर्मितम् ॥५९॥
स्यादस्त्रियां वास्तुगृहं गृहपोतक इत्यपि ।
क्लीबे वधूटी[3] शयनं वातायनं गवाक्षकः ॥६०॥
गृहाक्तो मण्डपो ऽस्त्रीस्याज्जनपर्यायसंश्रयः ।
बहुमानुषसंकीर्णं निर्मुटं च करागलम् ॥६१॥
हर्म्यादि धनिनां वासः प्रासादस्तु प्रसाद[4]वत्
देवभूमीशपर्यायात्सद्मार्थो थोपकारिका ॥६२॥
उपकार्याथ सौधोऽस्त्री सद्म· धामापि राजतः ।
चन्द्रशाला तु वलभिर्वलभी चन्द्रशालिका ॥६३॥
वडभिर्वडभी चूडा चूला च स्युस्त्रियामिमाः ।
विमानमथ तद्भेदास्तत्र विच्छन्दकोऽस्त्रियाम् ॥६४॥
विच्छर्दकोऽपि वा क्लीबे नन्दावर्त्तश्च न स्त्रियाम् ।
नन्द्यावर्त्तोऽपि वा क्लीबे सर्वतोभद्र इत्यपि ॥६५॥
वा पुंसि वर्द्धमानोऽस्त्री रुचकस्वस्तिकौ समौ ।
सिंहार्थाद्द्वारपर्यायं तत्रैव स्या[5]त्प्रवेशनम् ॥६६॥

स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् ।
अवरोधोऽपि शुद्धान्तनना स्थानं च भद्रकम्[1] ॥६७॥
जिनस्थाने चैत्यमस्त्री विहारोऽसावपाश्रयः ।
मत्तालम्बश्चपग्रीवो न स्त्रियां मत्तवारणम् ॥६८॥
समुद्रपर्यायगृहं जलयन्त्रनिकेतनम् ।
शिवस्य वृषमण्डप्यां बुधैर्गोपुटिकं स्मृतम् ॥६९॥
स्थूणास्तम्भः पुमान्नासादारु द्वारोपरि स्थितम् ।
चौमं वा पुंसि चाट्टालो गृहस्योपरिभूमिकम् ॥७०॥
गृह्वेश्माथावग्रहणी देहल्युम्बर इत्यपि ।
उदुम्बरश्चाथ शिली शिला चापि शिलिः पुनः ॥७१॥
अधस्तादारुणि शिला सैव स्याद्द्वारपिण्डिका ।
प्रच्छन्नमन्तर्द्वारं स्यात्पक्षद्वारं तु पक्षकः ॥७२॥
वलीकमस्त्रियां क्लीबे[2] नीव्रं नीध्रं च नीद्रकम् ।
पटलान्तेथ तत्प्रान्त इन्द्रकोश[3]स्तमङ्गकः ॥७३॥
पुंसिच्छदिः स्त्री पटलं त्रिषु स्याद्वलभी स्त्रियाम् ।
गोपानसी स्यादाधार[4]च्छादने वक्रदारुणि ॥७४॥
प्रासादमण्डपे चूडा दन्तास्ते नागदन्तकाः ।
मत्तवारणमिच्छन्ति प्रग्रीवं पुंनपुंसकम् ॥७५॥

स्त्रियां कपोतपाली[1]स्याद्विटङ्कं पुंनपुंसकम् ।
स्त्री द्वार्द्वारं प्रतीहारः[2] स्याद्वितर्दिस्तु वेदिका ॥७६॥
वातर्दिश्चापि वातर्दी विज्ञेयाः[3] स्युः स्त्रियामिमाः ।
तोरणोऽस्त्री बहिर्द्वारं पुरद्वारं तु गोपुरम् ॥७७॥
तिर्यगायतवंशादि श्लक्ष्णेषीकादिनिर्मिते ।
द्वाराद्यावरणे जालमालाभिव्यञ्जके बहिः ॥७८॥
तोरणोपरि मङ्गल्यं दाम वन्दनमालिका ।
वर्द्धमानं[4] तु तद्द्वारं येन वध्योपनीयते ॥७९॥
अमार्गे रचितं द्वारमपद्वारं च मोरिका ।
अथ हस्तिनखः कूटं पूर्द्वारोपरिकूटकम् ॥८०॥
स्त्रियां द्वाः स्यात्कपाटं च[5] कवाटं च कुवाटकम् ।
त्रिष्वेते चाररिरपि ननाऽररमथ त्रिषु ॥८१॥
स्यादर्गलं तु परिघः पुमान्स्यादथ सूचिका ।
अलिपका चेदर्गलिका कूचिका कुञ्चिकापि च ॥८२॥
पुंस्यङ्कुशो निकुञ्चः स्याद्धारणी स्यात्स्त्रियामथ ।
अर्गल्यादेरधिष्ठाने शृंखला वलगनी[6] स्त्रियौ ॥८३॥
द्वारयन्त्रं तु तालं स्यादस्योद्घाटनयन्त्रकम् ।
प्रतिताल्यपि ताली[7]स्याद्बहुभेदान्यमून्यपि ॥८४॥

---

१ लिः[B] २ प्रति[B] ३ यास्तु[B] ४ वर्ध[B] ५[B] का[K] ६ वलिनी[B] ७ तालिः[B]

आरोहणं स्थात्सोपानं पाषाणेष्ट्यादिनिर्मिते[1] ।
काष्ठादिनिर्मिता सा स्यान्निःश्रेणिरधिरोहिणी ॥ ८५ ॥
निः[2]श्रयण्यपि निःश्रेणी ऊह्[3]नी तु समूहिनी ।
समूहनिर्बहुकरा शोधनी व्यवहारिका ॥ ८६ ॥
संमार्जनी वर्द्धनी स्यात्सैवोक्ता तृणकूचिका ।
पुंविमार्गः[4] सुहरिणी[5] सैवार्द्धेन्दुसमालिपका ॥ ८७ ॥
क्लीबे सुहरणं[6] तत्स्यात्सा समा काष्ठकीलकैः ।
खचिता पभ्रूटी ज्ञेया यष्ट्या[7]ढ्याथ निघर्षणम् ॥ ८८ ॥
संस्थानं चाथावकरः संकरः क्षिप्तके मुखम् ।
स्यान्निःसरणमाघाटो मर्यादाप्यवहारकः ॥८९॥
पत्तनादिपरिच्छेदे संनिवेशो निकर्षणम् ।
प्रतिहारः प्रतीहारो वातप्रञ्चक इत्यपि ॥ ९० ॥
इंद्रकोशस्तदुपरि दारु तिर्यक् स्थितं हि यत् ।
उत्तरङ्गोथकाष्ठादिनिर्मिता शालभञ्जिका ॥ ९१ ॥
पाञ्चालिका पुत्रिका स्यादथ[8] लेपमयी तु या ।
संपादिता शिल्पिवरैः सा स्यादञ्जलिकारिका ॥ ९२ ॥
मार्गोऽध्वा निगमः पन्था विवधः पुंसि वीवधः ।
अपि द्वयोः स्यात्पदवी सरणिः सरणी स्रुतिः ॥ ९३ ॥

---

१ ता[C] २ श्रे[KC] ३ ऊहि[K] ४ मार्गः सु[K] मार्गस्तु[B] ५ सू[C] ६ सु[C] ष[KC]
लेप्य

पदविः स्त्री पुंसि वाटः पथः पेंडः पुमानयम् ।
वर्त्तन्येकपदी पथ्या वर्त्तनिः पद्धतिः स्त्रियाम् ॥ ९४ ॥
अयनं[1] वर्त्तनं वर्त्म क्लीबे स्याच्छरणिर्द्वयोः ।
अथाचारो वहो माथोऽपथं क्लीबेऽपथोऽपि वा ॥ ९५ ॥
व्यध्वो दुरध्वो विपथः कदध्वा कापथोऽस्त्रियः ।
हस्त्यश्वरथपादातगमनोऽध्वा तु संकुलः ॥ ९६ ॥
द्विमार्गो[2] द्विपथं चारपथोऽथ त्रिपथे त्रिकम् ।
चतुष्पथे चतुष्कं स्यात्संस्थानं बहुमार्गके ॥ ९७ ॥
चत्वरं[3]चाथ शृङ्गाटं त्रिमार्ग्या यत्र संगमः ।
प्रान्तरं दूरशून्योध्वाप्यथ वर्त्मनि दुर्गमे ॥ ९७ ॥
कान्तारमस्त्रियां च स्याद्दुर्गमार्गोऽपि दुर्गमः ।
संधिला तु सुरङ्गा स्याद्गूढमार्गो भुवोन्तरा ॥ ९९ ॥
घण्टापथः संसरणं श्रीपथः स्यान्महापथः ।
राजपर्यायमार्गार्थः स पुरस्योपनिष्करम् ॥ १०० ॥
उपनिष्क्रमणं पर्व मध्यमाङ्गुलिमध्यमम्[4] ।
स्यादङ्गुलं तैर्द्वादशभिर्वितस्तिस्तद्युगेन च ॥ १०१ ॥
हस्तो हस्तैश्चतुर्भिः स्याद्धनुर्दण्डश्च तैः पुनः ।
द्विसहस्रमितैः क्रोशः क्रोशाभ्यां गोरुतं पुनः ॥१०२॥

---

१ आपणं आयणं    २ र्गौ B    ३ चात्वार B    ४ तः B

गव्यूतं[1] च स्त्रियां गव्या द्वयोर्गव्यूतिरित्यपि ।
कल्पद्रौ केशवकृते भूमिस्कन्धे गुणाङ्कुते ।
[2]पूःप्रकाण्डो द्वितीयोऽयं साङ्गः[3]प्रत्यक्षतां गतः ।

---

भूपर्यायस्पृशो मर्त्या मानवा मनुजा विशः ।
मनुष्याः पूरुषा मर्ताः क्षितयो मानुषा अपि ॥ १ ॥
[4]अण्डीरा जगतः पञ्चजनाश्चर्षणयः पुनः ।
मन्तवो भूतलस्थाना द्विपदाश्चेतना जनाः ॥ २ ॥
मनूंषि मनुषा जानपदा जनपदाः प्रजाः ।
स्त्री भूम्न्ये[5]धतवश्चैषां विशेषाः पुरुषा नराः ॥ ३ ॥
नरः पुमांसः पुरुषा अस्त्रियां तु नपुंसकम् ।
पुंसि क्लीबे षण्डषण्डषाण्डाः षाण्डः पुनः स्त्रियाम् ॥ ४ ॥
तृतीयप्रकृतिश्चाथ नारी योषा च योषिता ।
प्रतीपदर्शिनी योषिद्वनिता महिलापि च ॥ ५ ॥
रामाऽबला महेला स्त्री सीमन्तिन्यपि मेहली ।
मेहला मेहिला चापि महिली[6] महिलापि च ॥ ६ ॥
जोषिज्जोषा महेली च यामिर्यामी च जादिमे ।
स्त्रीपर्यायजनार्थो ना मण्डयन्तश्च सुन्दरी ॥ ७ ॥

---

१ चा[B] २ पूः प्रकाण्डस्तृतीयोऽयं[KC] ३ संपूर्तिमागतः
४ अपिङ[KC] ५ दृधव[B] ६ महीली[B]

रमणी कामिनी कान्ता कोपना मत्तकाशिनी ।
अङ्गना ललना भीरुर्भामिनी युवतिश्वरी ॥८॥
नितम्बिनी च प्रमदा वामा तदनुवासिता ।
वरारोहा सुंदराङ्गी रत्नभूतोत्तमा च सा ॥९॥
सुखोष्णशीता तुहिनग्रीष्मयोर्वरवर्णिनी ।
स्वगुणेनोपमानेन मनोज्ञादिपदेन च ॥१०॥
विशेषिताङ्गकर्मा स्त्री यथा तरललोचना ।
मत्तेभगमना चापि स्यान्मृगाद्यलसेक्षणा ॥११॥
वामाक्षी सुस्मितास्याः स्वं मानलीलास्मितादयः[१] ।
लीला विलासो विच्छित्तिर्विब्वोकः किलकिञ्चितम् ॥१२॥
मोट्टायितं कुट्टमितं ललितं विहृतं तथा ।
विभ्रमश्चेत्यलंकाराः स्त्रीणां स्वाभाविका दश ॥१३॥
प्रागल्भ्यौदार्यमाधुर्यशोभाधीरत्वकान्तयः ।
दीप्तिश्चायत्नजाभावहावहेलास्त्रयोऽङ्गजाः ॥१४॥
सारङ्गगद्गदासास्याद्यात्यर्थं मधुरस्वरा ।
अथ साध्वी सुशीला स्यादेकपत्नी पतिव्रता ॥१५॥
सत्पथाथ कुलस्त्री स्यान्मालिका पालिका कुलात् ।
सुकुला पतिंवरा तु खरु[२]र्वर्या स्वयंवरा ॥१६॥

कन्या कुमारी कन्याका कन्यिका बालिका[1] च सा ।
स्याद्गौरी चाप्यथ पुनर्नग्निकाऽनागतार्त्तवा ॥१७॥
कुमारी पुंप्रसङ्गोत्थरजा गुप्तरजस्वला ।
राका नवफलार्थाः[2] साप्यचिरोढा वधूर्नवा ॥१८॥
सार्वाक् प्रसूतितः श्यामा दिक्करी नवयौवना ।
वयः संधिमती चाथ दृष्टपुष्पा तु धेनुका ॥१९॥
यदृतुप्रथमस्नाने मङ्गल्यं ध्रियतेम्बरम् ।
स आनन्दप्रटस्तत्र मैथुनं नवरङ्गकम् ॥२०॥
अथ यूनी तु युवती तरुणी तलुनीति च ।
युवतिर्यौवनाढ्या च कलाव[3]त्यथ कामुकी ॥२१॥
वृषस्यन्ती कामुकाथ प्रज्ञा प्राज्ञी च धीमती ।
कात्यायन्यर्द्धवृद्धा स्याद्विश्वस्ताविधवे समे ॥२२॥
काषायवसना रण्डा विशस्ता मुण्डमुण्डिता ।
वृद्धा पलिक्नी पलिता वशा वश्या च जर्जरा ॥२३॥
स्यात्सध्रीची वयस्यालिः सखी च सहचारिणी ।
सदाचारा कर्मकरा प्रेष्यान्तःपुरचारिणी ॥२४॥
सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका ।
सरस्वती[4] च वलजा[5] रोचना हारिणी[6]ति च ॥२५॥

१ पि च[B] २ र्थायया[B] ३ कलव[CK] ४ ज[B] ५ नो[B] ६ हृ[B]

स्यात्संदेशहरा दूती घटका वाक्यहारिणी ।
भिक्षुकी श्रमणा मुण्डा विवृक्ता दुर्भगा च सा ॥२६॥
गतार्त्तवा निःकला[1] स्याद्विन्दुर्नश्यत्प्रसूतिका ।
अवीरा निःपतिसुता[2] स्यादशिश्वी शिशुं विना ॥२७॥
जीवतोका जीवसूः स्यात्कुमिलातु बहुप्रसूः ।
सप्तपुत्रप्रसूर्या स्त्री सैवोक्ता सुतवस्करा[3] ॥२८॥
स्यात्पत्नीमातृपर्याया वीरात्तद्गुणसंयुता ।
प्रजावती जाततोका प्रजाता च प्रसूतिका ॥२९॥
संकेतं याति पत्यर्था[4] सा तु प्रोक्ताभिसारिका ।
या संकेतगृहं याता पतिं[5] तत्र न विन्दति ॥३०॥
सोक्ताद्रिका[6] विदेशस्थे पत्यौ प्रोषितभर्त्तृका ।
स्यात्प्रोष्यत्पतिका पत्यौ[7] विदेशगमनोत्सुके ॥३१॥
अन्योपभुक्तपतिका खण्डितेति निगद्यते ।
अश्लीलदृढरूपा सा या लावण्यविवर्जिता ॥३२॥
श्लाघ्यावयवसंस्थाना रूपसौन्दर्यवत्यपि ।
जीवत्पतिर्जीवपत्नी पतिवत्नी सभर्त्तृका ॥३३॥
पतित्यक्ता सुकुलजा सा स्यात्पतिवतीति च ।
कुलकूणी तु कुलटा पांसुला घर्षिणीत्वरी[8] ॥३४॥

---

१ निष्कला[KC] २ निष्पति[KC] ३ सप्तवस्करी[K] सप्तवस्तुरी[C] ४ पत्यर्थं[K] ५ प्रियं[BC]
६ सोक्तोद्रिता[K] सैवोद्रिता[B] ७ स्यात्पत्यौदेशगमनोद्युक्तेप्रोष्यत्पतिश्रवसा [B] ८ चरी[B]

बन्धकी लाञ्छवी[1] खण्डशीला मदननालिका ।
धर्षणिर्वर्षणिश्चापि लाञ्छिका चर्षणीति[2] च ॥३५॥
चर्षणिर्वर्षणी रण्डा पांशुलापि निगद्यते ।
दुःशृङ्गी पुंश्चली बंधुरा[3] स्वैरिण्यसतीत्यथ[4] ॥३६॥
वारपण्यपणादीनामर्थेभ्यो योषिदर्थकाः ।
कञ्जिनी लञ्जिका वेश्या बन्दी[5] शूला च झर्झरा ॥३७॥
रूपाजीवा वारवाणिः कामलेखावगालिका ।
क्षुद्राजिना कालकूची कुट्टकी[6] सम्भली समे[7] ॥३८॥
सनाली कुञ्चिका भोज्या चोटा कुहककारिका ।
चेटी दासी कुम्भदासी नागरैः सत्कृतातु या ॥३९॥
मलिष्ठा मलिना म्लाना ऋतुपुष्पार्थतोवती[8] ।
पर्यायाः पांशुलोदक्यात्रेय्यविश्च रजस्वला ॥४०॥
स्त्रीपर्यायेभ्यो धर्मिणी स्यात्सैवोक्ता व्युषिताप्यथ ।
हीना पितृभ्यां छेमुण्डा रोषमूका खलुङ्किका[10] ॥४१॥
वन्ध्या तु केशिनी शून्या मोघपुष्पा वृथार्त्तवा ।
भोण्डा[11] वृषल्करिः[12] सा स्याल्लोकाचारं न या चरेत् ॥४२॥
उच्चभाला मरुण्डा स्यात्षण्रजः पुष्पमार्त्तवम् ।
स्त्रीधर्मो ना रजोऽपि स्यादथ जाया कुटुम्बिनी ॥४३॥

---

१ स्त्री^C २ व^KC ३ बन्धुदा^K बन्धूदा^B ४ पि^B ५ बन्दि^C बद्री^B ६ नी^B श^KB
८ रती^KC ९ पूर्व^K सु^B १० खु^KB ११ डा^B १२ टिः^B

भार्या दाराः पुंसि भूम्नि स्यादेकत्वे स्त्रियामियम्[1] ।
पत्नी पाणिगृहीती च पुरन्ध्रिश्च पुरन्ध्र्यपि[2] ।
अन्या पाणिगृहीता[3] स्यात् द्वितीया सहधर्मिणी ॥४४॥

गर्भिण्यापन्नसत्त्वा स्यादन्तर्वत्न्युदरिण्यपि ।
अस्त्रियां दोहदं क्लीबे दौहृदं लालसा स्त्रियाम् ॥४५॥

श्रद्धालुर्दौहृदवती स्त्रियां गर्भाशयस्तु ना ।
जरायुर्ना चास्त्रियां द्वे कललोल्वेऽपरामरे ॥४६॥

स्त्रियां क्लीबे जरायुः स्यात्सान्तमेवाथ वै पुनः ।
गर्भस्यैवाष्टमो मासो देवमासोप्यथ[4] स्त्रियाम् ॥४७॥

कुमारभृत्या सा बाल तन्त्रं गर्भिण्यवेक्षणम् ।
क्लीबे विजननं गर्भो गरभोचूड[5] इत्यपि ॥४८॥

प्रसवोऽपि प्रसूति स्त्री नग्निका कोटवीत्यपि ।
धात्री स्यादुपमातर्था भर्त्तुः पत्न्यः परस्परम् ॥४९॥

एकपत्न्यः सपत्न्यः स्युर्गणिकादेर्गणे तु षण् ।
गाणिक्यं यौवतं पौंस्नं स्त्रैणं गार्भिण्यमित्यपि ॥५०॥

पूर्वोढा त्वधिविन्ना स्यात् पश्चादूढाधिवेदिनी ।
ज्येष्ठायामप्यनूढायामूढा या स्यात्कनीयसी ॥५१॥

---

१ म[KC] २ न्ध्य[B] ३ च...ला ४ था[B] ५ चूण[K] चूश्च[B] (भ्रूण[R])

दिधीषुर्दिधिषुर्ज्येष्ठा स्यादग्रेदिधिषुः पुनः ।
पुंस्येतासां धवा एते दीर्घान्ताः स्युः पुनश्च षट् ॥५२॥
धीपर्यायमतो प्रज्ञा प्राज्ञा प्राज्ञी ततः पुनः ।
शूद्रस्य भार्या शूद्री स्याच्छूद्रा तज्जातिरङ्गना ॥५३॥
आभीरी तु महाशूद्री जातिपुंयोगयोः समा ।
आर्याणी स्वयमर्या स्यात् क्षत्रिया क्षत्रियाण्यपि ॥५४॥
उपाध्यायाप्युपाध्यायी स्यादाचार्यापि च स्वतः ।
आचार्याणी[1] तु पुंयोगे स्यादार्यी क्षत्रियीति च ॥५५॥
उपाध्यायान्युपाध्यायी सश्मश्रुर्नरमालिनी ।
नरपालिनी सा च स्यान्नरनारीविलक्षणा ॥५६॥
पेटा तु सैव पोढा[2] तु वोढा[3] कुहककारिका ।
कानीनः स्यात्तु कन्याजे सुभगायाः सुते त्रिषु ॥५७॥
सौभागिनेयः स्यात्पारस्त्रैणेयश्च परस्त्रियाः ।
भार्योरू[4]रन्यभार्यायां पुत्रस्योत्पत्तिकारिणि ॥५८॥
भार्याजितः[5] काकरूकः स्त्रीजितः स्त्रीवशोऽपि च ।
अथ धामिश्च[6] धामी च जामिश्चैव सहोदरा[7] ॥५९॥
सोदरा भगिनी भग्नी स्वसा जामिश्च[8] सा पुनः ।
ज्येष्ठा चाथ[9] कनिष्ठा स्यादम्बिका तत्तनूद्भवे ॥६०॥

---

१ नी सि० कौ ( आचार्यादृणत्वं च ) २ ठा^BK ३ ठा^K ४ रु^BK ५ द्विकः^KC
६ रा^K ७ राः^BC ८ स्व^B ९ वा^K

जामेयो भागिनेयः स्यात्स्वस्रीयः कुतपोद्वयोः ।
स कष्टभागिनेयो यः सपत्नीतनयः स्वसुः ॥६१॥
नप्ता पौत्रः पुत्रपुत्रपर्यायस्तस्य चात्मजः ।
प्रतिनप्ता[1] प्रपौत्रः स्यात्षष्ठस्तु स्यात्परंपरः ॥६२॥
पत्युः स्वसा ननन्दा स्यान्ननान्दा नन्दिनीति च ।
प्रजावती भ्रातृजाया मातुलानी तु मातुली ॥६३॥
दम्पत्योर्भ्रातृवर्गस्य भार्यास्तुल्याः परस्परम् ।
यातरश्चाथ दंपत्योः पितरौ श्वशुरौ च तौ ॥६४॥
जरन्तकः शतानीकस्ते श्वश्र्वौ मातरौ तयोः ।
स्त्रीभ्राता देवरः शालः संयुक्तो वारकीति च[2] ॥६५॥
वार्गरोथ[3] कुली श्वश्रूर्ज्येष्ठा स्त्रीभगिनी च[4] सा ।
कनीयसी तु शाली स्यात्सैवोक्ता केलिकूचिका ॥६६॥
तद्भर्त्तरि तु शाल्यूढा[5] शाल्यूढोऽपि सखाप्यथ[6] ।
भर्त्तुर्भर्त्ता लघुर्देवा देवरो दिविरोग्रजे ॥६७॥
भावुकः श्वशुरो[7] ज्येष्ठो जामाता जन्य इत्यपि ।
पुत्र्यर्थेभ्यः पतिरथ दुहित्रर्थात्सुतार्थकः ॥६८॥
दौहित्रः समदूर्नप्ता द्वितीयकुलधारकः ।
षाण्मातुरः स्यात्षण्मातृ जातेऽपि स्यादथोत्तरे[8] ॥६९॥

१ प्रणप्तापि[K] २ वारकीलकः[B] ३ वागारो[B] ४ स्व[B] ५ भूढा[K] ६ यथ ७ भ्रातृ-श्वशुरः भ्रातृश्वशुरश्च ८ द्वयोन्नेर[K] ?

एवं द्वैमातुरेऽपि स्याद्व्याप्यस्तु[1] पितुरग्रजे ।
तत्कनिष्ठे तु कर्कः स्यात्तौ तु स्यातां पितृव्यकौ ॥७०॥
मातुर्भ्राता मातुलः स्यान्मामको मातृकेशरः ।
सकष्टमातुलो मातुः सपत्न्यास्तु सहोदरे ॥७१॥
पितृष्वसुस्तुक्पर्यायः पैतृष्वस्रेय इत्यपि ।
मातृष्वसुः सुते मातृष्वस्रेयो मातुलात्मजे ॥७२॥
मातुलेयोऽथ सापत्नो वैमात्रेयो विमातृजः ।
मातुः सपत्नीतनयेऽथासतीजे तु बन्धुलः ॥७३॥
अथ बान्धकिनेयः स्याद्भिक्षुकी त्वसती[2] यदि ।
विद्धप्रजननः स स्याद्धः स्वयं चण्डिलो भवेत् ॥७४॥
दासीसुते तु दासीरदासेयौ कुलटात्मजे ।
कौलटेरः कौलटेयः कौलटिनेय इत्यपि ॥७५॥
काणीपुत्रस्तु काणेयो नाटेयस्तु नटीसुते ।
द्वितीयस्य पितुर्योन्नं भुक्त्वा परिणतो द्विजः ॥७६॥
अवटेट[3] इति ख्यातो ज्येष्ठाजो ज्यैष्ठिनेयकः[4] ।
मुञ्जकेशो गुडाकेश[5] उभौ वर्वरकेशिनि ॥७७॥
खलतिः खल्लतिर्बभ्रुर्ल्लीर[6]श्चेन्द्रलुप्तिकः ।
शिपिविष्टोपि [7]खल्वाटः खल्लकश्चन्द्रिकान्वितः ॥७८॥

---

१ पि[B] २ त्रु[B] ३ ठ[B] ४ ज्ये[B] ५ गुडाकायानिद्रायाईश इति केचित् ६ लं[B] ७ स्वस्तु[B]

चण्डो[1] द्विनग्नोऽथ पुनश्चण्डिको[2]ऽप्यथ[3] संततिः ।
स्त्रियां सूनुः पुमान्पुत्र आत्मजस्तनयोऽपि च ॥ ७९ ॥
आत्मनीनः सुतोऽपि स्यादुद्वहो नन्दनोऽपि च ।
दायादः पिण्डदश्च स्यादङ्गभूर्यस्तु पञ्चमः[4] ॥ ८० ॥
परंपरः पल्ययनः[5] षष्ठस्त्वपि परंपरः ।
पुत्रपौत्रान्पश्यति यः पुत्रपौत्रीण एष च[6] ॥ ८१ ॥
परंपरीणो यः षष्ठं पञ्चमं चापि पश्यति ।
परोवरीणोऽनुभवन्परानप्यवरानपि ॥ ८२ ॥
बीजी तु सप्तमः पूर्वं पुमान्या[7]भिरथाप्यमी ।
पुत्रादयः स्त्रियामाहुर्दुहिताथ प्रजा[8] स्त्रियाम् ॥ ८३ ॥
क्लीबे बीजं स्यादपत्यं तोकं तुगपि चास्त्रियाम् ।
त्रिष्वालघ्वौरसौ रस्यौ धर्मपत्नीसमुद्भवे ॥ ८४ ॥
मृते जारोद्भवो गोलः कुण्डो जारोद्भवोऽमृते ।
दत्तको दत्रिमः पुत्रः पौत्रिकेयोऽभिसंधितः ॥ ८५ ॥
समानोदर्यसोदर्यसगर्भ्यसहजाः[9] समाः ।
सहोदरः सोदरोऽपि तस्मिञ्ज्येष्ठे तु पूर्वजः ॥ ८६ ॥
ज्यायानप्यग्रजोऽग्र्यः स्यादग्रीयोऽथ[10] जघन्यजः ।
कनिष्ठश्च यविष्ठश्च कनीयाननुजो लघुः ॥ ८७ ॥

---

१ थंगो^B २ ण्डस्तु च^B ३ लो^K ४ कः^B ५ तः^KC ६ वा^KD ७ त्राभि ? रा
८ प्रजाः^K ९ र्भ^BC १० अग्रियोपि रा

यौवनं न स्त्रियां क्लीबे तारुण्यं यौवनी स्त्रियाम् ।
वृद्धत्वं स्थाविरं क्लीबे वार्द्धकं वृद्धसंघके ॥
वलितः पलितोऽपिऽस्या त्रिष्वथो पलितं तु षण् ॥८८॥

पलितं[1] जरसा शौक्ल्यं केशादिषु वली[2] स्त्रियाम् ।
त्वचोर्थाद्रूर्मिपर्यायास्त्वक्तरङ्गः पुमानथम् ॥८९॥

अस्थ्नस्त्वक्[3] स्नायुशैथिल्यमथोत्तानशयास्त्रिषु[4] ।
पाकोऽर्भकः शिशुः शावः पृथुको डिम्भ इत्यपि ॥९०॥

स्यात्पोतो हितपर्यायो गर्भोऽपि गरभः[5] पुनः ।
बालो वटुर्माणवकः क्षीरकण्ठः स्तनंधयः ॥९१॥

स्यादुत्तानशयश्चापि[6] दारकोप्यथ तद्भिदः ।
जातमात्रो जातकः स्यादेकादशदिनावधि ॥९२॥

ततः षण्मासपर्यन्तं शिशुः संवत्सरावधि ।
पृथुकोथा त्रिवर्षात्तु वटुरब्दाच्च सप्तमात् ॥९३॥

सुकुमारो माणवकः, पौगण्डस्तु दशावधि ।
कैशोर आपञ्चदशाद्युवा तु त्रिंशदब्दकः ॥९४॥

आपञ्चाशदब्दं मध्यो वृद्धोऽशीत्यवधिस्ततः ।
आसन्नार्स्तमयस्तत्र वर्षीयानुपधूपितः ॥९५॥

---

१ वलितं^BK २ वलि^B ३ अस्न^CB ४ या^KCB ५ गभर:^B ६ या^K

तरुणस्तु वयस्थः स्याद्युवोत्पन्नवया अथ ।
प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि ॥९६॥
झर्झरोऽपि च यामः स्याद्वर्षीयान्दशमीत्यपि ।
पितामहाः पितुर्वंश्या मातुर्मातामहाश्च ते ॥९७॥
सर्वेऽमी पितरः पूर्वे पूर्वजा अथ बान्धवाः ।
सगोत्रः स्वजनो ज्ञातिः सगन्धो बन्धुरित्यपि ॥९८॥
सपिण्डश्चापि दायादः सनाभिः स्वेप्यथ स्त्रियाम् ।
ज्ञातिता बन्धुता पुंसि ज्ञातिभावो नपुंसकम्[1] ॥९९॥
ज्ञातेयं देहकर्त्ता तु तातो जनयिता पिता ।
जन्यो[2] वप्रश्च सविता वप्ता जन्मार्थकारकः ॥१००॥
पितुः पर्यायशब्देभ्यः पित्रर्थः स्यात्पितामहः ।
पितामहस्य च पिता प्रपितामह इत्यपि ॥१०१॥
मातुर्मातामहाद्येवं जननी तु प्रसूः शिफा[3] ।
अम्बा जनित्र्यम्बिका स्यादक्का मधुमती च सा ॥१०२॥
जनयित्र्यपि माताथ पितुर्माता पितामही ।
मातुर्मातामहीत्याद्या उन्नेयास्ताः क्रमादथ ॥१०३॥
एकयोक्तया प्रसू मातापितरौ[4] पितरौ च तौ ।
स्यातां जनयितारौ तौ मातरपितरावपि ॥१०४॥

---

१ सपिण्डः नपुंसकम्[B] २ जपो[C] ३ शिका[B] ४ मांता[B]

एकशेषाद्भ्रातरौ तौ भगिनीभ्रातरावुभौ ।
पुत्रीपुत्रावुभौ पुत्रावथ भार्यापती च तौ ॥१०५॥
दंपती जंपती जायापती अथ पुनश्च तौ ।
श्वश्रू च[1]श्वशुरौ श्वश्रू त्रिष्वितो मातृशासितात् ॥१०६॥
अमांसो दुर्बलः शातश्छातः क्षामः शितः कृशः ।
क्षीणस्तनुश्च तलिनस्तुन्दी तुन्दोऽपि चण्डिलः ॥१०७॥
मुन्दिलस्तुन्दिकश्चापि बृहत्कुक्षिश्च तुण्डिनः ।
पिचण्डिलश्चोदरिलो बलवान्मांसलोंऽसलः ॥१०८॥
निदिग्धः[2] स्यादुपचितो नःक्षुद्रः क्षुद्रनासिकः ।
अवटीटो वनाटश्चावभ्रटो नतनासिके ॥१०९॥
खरणाः स्यात्खरणस उन्नसस्तून्नसनासिकः ।
खुरणाः स्यात्खुरणसो गन्धोपादानवर्जिते ॥११०॥
विग्रो विग्रश्च विनसः पीनसी गतना विखुः[3] ।
विक्लिधो घ्राणदुर्गन्धिरथ काणस्तु काननः ॥१११॥
आणः[4] स्यादेकपर्यायनेत्रार्थोऽप्यथ वक्रदृक् ।
टेरो वलीरो वलिरः केकरः केदरोऽपि च ॥११२॥
पृश्निः पृष्णिश्चाल्पतनौ कुब्जोन्युब्जोप्यथो गडुः ।
गडुलश्चाथ कुकरे कुणिः कूणि[5]रतः पुनः ॥११३॥

---

१ श्वश्रूश्वशुरौ श्वशुरौ[S] २ निर्दग्धः[KC] ३ विखु.[B] ४ आणः[C] ५ कूर्णी[B]

बाहुकण्ठो दोर्गडुः स्यात्खर्वो ह्रस्वश्च वामनः ।
विखर्वः खट्टनः खर्वशाखो वधिर एडकः ॥११४॥
कर्णपर्यायशून्यार्थः कल्लो वर्कर इत्यथ ।
अन्धः स्यादेडमूकोऽपि दृक्पर्यायविनार्थकः ॥११५॥
विकलाङ्गस्तु पोगण्डः खोडखोरौ तु खञ्जके ।
ऊर्ध्वज्ञश्चापि चोर्ध्वज्ञुरूर्ध्वजानुक इत्यपि ॥११६॥
प्रज्ञुस्तु प्रज्ञो विरलजानुः संयुतजानुकः ।
संज्ञुः संज्ञोप्यथोदग्रदन्तो दन्तुर इत्यपि ॥११७॥
एडमूको नेडमूकः कलमूकोप्यवाक्श्रुतौ ।
जडकाण्डो नेडमूको मूके स्यादथ काहलः ॥११८॥
लोहलोस्फुटवाचि स्याज्जडे नामविवर्जितः ।
मूर्खो मन्दोऽपि तुन्दस्य पर्यायपरिमार्जकः ॥११९॥
अज्ञो जडो मातृमुखो यथाजातोऽपि बालिशः ।
जाल्मो विपर्णो देवानां पर्यायेभ्यः प्रियार्थकः ॥१२०॥
अनद्धापुरुषो माषो जडकाण्डोऽप्यनेडकः ।
शीतोलसो[1]प्यनुष्णः स्यादनेडो मातृशासितः ॥१२१॥
नासान्तराशब्दवृत्तिर्गुङ्कणो निह्वणो[2]ऽपि च ।
अथापि स्यात्प्रलम्बाण्डो मुष्करः पुंसि मुण्डितः ॥१२२॥

व्युप्तकेशस्त्रिष्वथ स्याद्भर्त्ता वरयिता वरः ।
धर्मकीलो रतगुरुः प्राणनाथः पतिः प्रियः ॥१२३॥
रमोभरुश्च यामाता जामाता[1]रमणो धवः ।
कान्तः सुखोत्सवश्चापि हृदयेशोऽथ जारके ॥१२४॥
पापार्थात्पतिपर्याय उपपत्यर्थ इत्यपि ।
भ्रातृपर्यायपुत्रार्थो भ्रातृव्यः स्वरितोऽह्वयम् ॥१२५॥
भ्रातृव्योऽपि शिलकुतमस्तस्य पुत्रः कुलर्द्धिकः ।
न द्वयोर्युगलं युग्मं द्वन्द्वं युगलमित्यपि ॥१२६॥
जटुकः[2] कालकश्चापि पिप्लुश्च तिल इत्यपि ।
क्षेत्रं कलेवरं क्लीबे पिण्डोऽस्त्री विग्रहः पुमान् ॥१२७॥
क्लीबे वपुः संहननं पुद्गलं वर्ष्म मूर्त्तिमत् ।
पुरं षडङ्गं करणं सूत्रशाखं शितं कुलम्[3] ॥१२८॥
व्याधिपर्यायस्थानार्थं स्त्रियां मूर्त्तिस्तनुस्तनूः ।
पुरी पूरस्त्रियां पुंसि पञ्जरो घन इत्यपि ॥१२९॥
अङ्गं क्लीबे तनुः सान्तं गात्रं पञ्जरमस्त्रियाम् ।
स्कन्धश्च[4] संचरो न स्त्री शरीरं कायमस्त्रियाम् ॥१३०॥
देहोऽस्त्री स्थानकं बेरं पुंस्यात्मा चाथ न द्वयोः
गात्राङ्गे पुंस्यवयवः प्रतीकोपघनोऽपि च ॥१३१॥

---

१ तो[K] २ जटुलः[B] ३ कलम्[B] ४ श्लोकार्धस्य[CB] पुस्तकयोरभावः

उत्तमाङ्गं शिरः शीर्षं कं[1] शिरं मस्तकोऽस्त्रियाम् ।
मूर्द्धा पुंसि च मुण्डोऽस्त्री[2]मस्तिकोऽपि कमव्ययम् ।१३२।
द्वयोर्मौलिः कपालं षण् केशपर्यायभूरपि ।
शिरसोरुड्रुहभवपर्यायाश्चिकुराः कचाः ॥१३३॥
द्वयोर्वाला वेल्लिताग्राः केश[3]कुन्तारकुन्तलाः ।
हस्तः पक्षः कलापश्च भार उच्चय इत्यपि ॥१३४॥
केशपर्यायतश्चैते केशभूयस्त्ववाचकाः ।
अलकोऽस्त्री कर्करालः खंखणश्चूर्णकुन्तलः[4] ॥१३५॥
भाले भ्रमरकोऽस्त्री स्यात् कुरुलो भ्रमरालकः ।
धम्मिल्लः संयताः केशाः केशवेशे[5] कवर्यपि ॥१३६॥
कवर्यथ स्त्रियां वेणिर्वेणी च विशदे कचे ।
शीर्षण्यश्च शिरस्यश्च प्रलोभ्योऽपि त्रयस्त्रिषु ॥१३७॥
केशेषूपरि भालस्थ[6] वर्त्म सीमन्तकः पुमान् ।
चूडा केशी केशपाशी[7] शिखा पुंसि शिखण्डकः ॥१३८॥
सबालानां काकपक्षः शिखण्डिकशिखाण्डकौ ।
सटा जटा सा व्रतिनो लग्नास्ते ये परस्परम् ॥१३९॥
वक्त्रास्ये वदनं तुण्डमाननं लपनं पुनः ।
वेरं घनोत्तरं स्नेहरसनं मुखमस्त्रियाम् ॥१४०॥

---

१ शीर[B] २ स्ति [KCB] ३ कुआर[KC] ४ लाः[K] ५ वेषे[K] ६ भालस्य[B] भालाभ
७ शिखापुंसि पुस्तके नास्ति[K]

दन्तपर्यायसज्ञार्थमथ स्याद्भालमस्त्रियाम् ।
महाशंखश्च शंखश्च कपालोप्यस्त्रियाममी ॥१४१॥
स्त्री गोधिरलिकालीकललाटानि श्रुतिः स्त्रियाम् ।
पिञ्जूषश्रवणावस्त्री क्लीबे श्रोत्रं श्रवः पुनः ॥१४२॥
शब्दाधिष्ठानपर्यायो ध्वनिपर्यायतो ग्रहः ।
श्रोत्रं स्यादपि च क्लीबे श्रोतः श्रवसमित्यपि ॥१४३॥
पुंसि कर्णो महानादो वेष्टेस्य कर्णशष्कुली ।
तयोः प्रान्तस्तु धारा स्त्री तन्मूले[1] शिलकं च षण् ॥१४४॥
पालिः स्त्री कर्णलतिका शंखोऽस्त्री भ्रूश्रवोन्तरा ।
विलोचनं चक्षुरक्षि लोचनं नयनाम्बके ॥१४५॥
ज्योतिश्च देवदीपो ना रूपपर्यायतो ग्रहः ।
अस्त्रियामीक्षणं नेत्रं स्त्रियां दृष्टिश्च गौरपि ॥१४६॥
दृशी दृक् स्याद्दृशिरपि स्त्रियां क्लीबे च दर्शनम् ।
तारकास्त्र्यस्त्रियां तारा बिम्बिन्यक्षणः कनीनिका ॥१४७॥
वामं सौम्यं तदित[2]रत्सौरं स्यादथ वीक्षणम् ।
निशामनं निभालनं निध्यानमवलोकनम् ॥१४८॥
दर्शनं द्योतनं निर्वर्णनं चाथार्द्धवीक्षणम् ।
उपाङ्गदर्शनं काक्षः कटाक्षोऽक्षि विकूणितम् ॥१४९॥

---

१ शी[KB] २ तदितरद्सौम्यमथ[B]

नेत्रार्थादम्बुपर्यायं बाष्पास्राव[1] श्रु रोदनम् ।
नालौ* तम स्त्रियामक्ष्णोरूर्ध्वं ये रोमपद्धती ॥१५०॥
भ्रुवौ स्त्रियां चिल्लिका स्यादस्त्रियां कूर्चकूर्पके ।
नेत्ररोमणि पक्ष्मास्त्री निमेषनिमिषौ समौ ॥१५१॥
मुद्रणेथोद्घाटने स्यादुन्मेषश्चोन्मिषश्च सः ।
घोणा विकूणिका नस्या नासिका सिङ्घिनी[2] च सा ॥१५२॥
गन्धनाडी[3] गन्धवहा गन्धज्ञा गन्धनालिका ।
विकूणिका नभाः क्लीबे घ्राणं नो नर्क[4]नर्कुटे ॥१५३॥
नासा नक्रा न[5]सापि स्यात्तज्जे नासिक्यमित्यपि ।
ओष्ठोऽधरश्च दन्तार्थाद्वस्त्रच्छ[6]दनयोरपि ॥१५४॥
पर्यायो वाचः पर्यायाद्दलपर्याय इत्यपि ।
तयोः प्रान्ते सृक्कस्तृकिसृक्काणि सृक्कणी[7]ति च ॥१५५॥
तयोरधोसिकं तस्मादधस्तु चिबुकं[8]चिबुः ।
सृक्कणस्तु परोगल्लस्तत्परः स्यात्कपोलकः ॥१५६॥
हनुर्द्वयोर्हनू स्त्रीत्वे श्मश्रु षण् व्यञ्जनं हिनुः ।
कूर्चमस्त्री पुमान्बोट आस्यलोम च भासुरी ॥१५७॥
दाढिका दंष्ट्रिका दाढा द्राढास्ताश्चर्वणार्थकाः[9] ।
दन्ता वक्त्रखुरा जम्भा ह्यालवो[10] रदना द्विजाः ॥१५८॥

---

१ वस्तु[B] २ शिङ्घिनी[S] सिङ्घणी[B] ३ मालिगन्ध[B] ४ नक्तकुटे[K] ५ नका[B]
६ च्छा[B] ७ पुनः[B] ८ चिबु[B] ९ कः[B] १० ह्यालचो[B]

* लोतः वै.

दतो रदा भक्तमल्लाः खरवोदंशका रथाः ।
पुंसि क्लीबे च दशनाश्चत्वारस्तेषु मध्य[1]गाः ॥१५९॥
राजदन्तौ श्रेणिकौ द्वावधश्चोपरितः स्थितौ ।
स्त्रियां क्लीबे च रसना रसाला रसना[2] रसा ॥१६०॥
रसिका पि च लोलार्था जिह्वाप्यमृतव[3]र्षिणी ।
रसमाता च काकु[4]स्त्री तालु क्लीबे च काकुदम् ॥१६१॥
अपि वक्त्रदलं चाथ घण्टिका गलशुण्डिका ।
सुधास्रवा लम्बिका स्यादन्याधो मूलजिह्विका ॥१६२॥
प्रत्युपाभ्यां जिह्विका[5]स्याच्छिरोधिरपि कन्धरा ।
ग्रीवापि धमनिः सा तु त्रिरेखालंकृता यदि ॥१६३॥
कम्बुपर्याय[6]ग्रीवार्था स्त्रियां घाटा कृकाटिका ।
अवटुश्चावटोपि स्यादस्त्रियां[7]च कृकः पुमान् ॥१६४॥
वीतनौ कृकपार्श्वस्थौ धमनी[8] ग्रीवयोः[9]पुरः ।
नीलः पुमांस्तयोः पश्चात् स्त्रियां मन्या कदम्बिका ॥१६५॥
अस्त्री निगरणः कण्ठो गलः स्यादथ तन्मणिः ।
अस्त्रियां काकलं चाथ क्लीबे भुजशिरः पुमान् ॥१६६॥
*[10]स्कन्धोंसोस्त्री पुमान्स्कन्धो बाह्वर्थाच्छिखरं तयोः ।
संधीउरोंसगे स्याता जत्रुणी तदधः स्त्रियाम् ॥१६७॥

---

१ माः[B] २ रशना[B] ३ वर्षणी[B] ४ काकुस्त्री[B] ५ र्था[KC] ६ ग्रीवार्था कम्बुपर्यायात्[B]
७ नाटकः[B] ८ धर्मनी[B] ९ पुनः[B] १० स्कन्दो[B]
* [K] स्कन्धांसि [K]

कक्षा क्लीबे बाहुमूलं तदधः पार्श्वमस्त्रियाम् ।
विलग्नं मध्यमं मध्यमवलग्नं च न स्त्रियाम् ॥१६८॥
दोरस्त्रियां स्त्रियां दोषा भुजापि स्याद्भुजः पुमान् ।
प्रवेष्टो नाकुलिर्बाहुर्बाहा[1] बाहू स्त्रियां पुमान् ॥१६९॥
कपोणिः कफणिः पुंसि कफणी कफणिः स्त्रियौ ।
कफोणिश्च कफा[2]णिश्च द्वावेतौ पुंस्यपि स्त्रियाम् ॥१७०॥
कूर्परं तदधः पुंसि प्रगण्डस्तदधः पुमान् ।
मणिबन्धो मणिश्चास्त्री तदधस्तु प्रकोष्ठकः ॥१७१॥
मणिबन्धादाकनिष्ठं करस्य करभो बहिः ।
पञ्चशाखः शयः पाणिः करो हस्तः शलः करिः ॥१७२॥
अङ्गुलिः करशाखा स्या[3]दङ्गुलीयाङ्गुलीत्यपि ।
अङ्गुरिः करवीरो नाप्यङ्गुष्ठोऽङ्गुल इत्यपि ॥१७३॥
प्रदेशिनी तर्जनी स्यान्मध्या ज्येष्ठा च मध्यमा ।
अनामिका स्यात्सावित्री कनिष्ठा तु कनीनिका ।१७४।
तन्मध्यसंधिर्ग्रन्थिः स्त्री क्लीबे पर्व परुः पुनः ।
यदङ्गुष्ठाङ्गुलीमध्ये तत्स्या[4]त्त्विप्रं पुनस्ततः ॥१७५॥
तले धनादिसूचिन्यो रेखाः पर्यायगोचराः ।
करस्याधः प्रपाणिर्ना तस्याधस्तु तलं च षण् ॥१७६॥

---

१ बाहु^B २ णीच^B ३ दङ्गुलित्याङ्गुलित्यपि^B ४ त्तप्र

स्यात्पाण्यङ्गुलिपर्यायजार्थः कामाङ्कुशोऽपि च ।
महाराजः कररुहः करकण्टपुनर्नवौ ॥१७७॥
कराग्रजः करशूकोनखोऽस्त्री नखरस्त्रिषु ।
संपिण्डिताङ्गुलिः पाणिर्मुष्टिर्ना मुचुटिः स्त्रियाम् ॥१७८॥
काह्निर्ना[1]मुस्तुसंग्राहौ खटकस्त्वर्धमुष्टिकः ।
प्रसृतिः कुब्जिते पाणौ चुलका[2] कुञ्चिते पुमान् ॥१७९॥
अथ सिंहतलः स स्यात्तत्र हस्तेऽर्धमुष्टिते ।
पुंस्यञ्जलिस्तु[3]प्रसृती युतेऽङ्गुष्ठे तते पुनः ॥१८०॥
प्रदेशिन्या प्रदेशोऽपि प्रादेशश्च नराविमौ ।
मध्यमावितते तालः सपादैकादशाङ्गुलः ॥१८१॥
अनामयापि गोकर्णः सपादद्वादशाङ्गुलः ।
कनिष्ठया ततेऽङ्गुष्ठे वितस्तिर्द्वादशाङ्गुलः ॥१८२॥
पुंसि स्त्रियां किष्कुरपि वितस्तिश्च पुनः स्त्रियाम् ।
तर्जन्यनामिके श्लिष्टे मध्यमा पृष्ठगा तयोः ॥१८३॥
करिहस्तो[4]थ कटिका छोटिका द्वे इमे समे ।
तर्जन्यङ्गुष्ठयोगोत्थे शब्दे स्यातामथो पुनः ॥१८४॥
विस्तृताङ्गुलिके हस्ते चपेटः स्यादपि द्वयोः ।
प्रतलश्च प्रहस्तश्च तालिका ताल इत्यपि ॥१८५॥

---

१ मुष्क[B] २ चुलुका[B] ३ प्रसृति ४ स्तस्फुकटिका[KB]

हस्ते स्यान्मुष्टिते[1]रत्निर्द्वयोरथ कनिष्ठया ।
रहिते स्यादरत्निस्तु[2]नूनाव्यामस्तु पुंस्ययम् ॥१८६॥
वियामो हस्तचापार्थो हस्तबाह्वोर्यदन्तरम् ।
तिर्यक् स्यादथ पुरुषप्रमाणे पौरुषं त्रिषु ॥१८७॥
तलाद्यावत्परीमाणे दघ्नद्वयसरूपकौ ।
जलादीनां जानु जङ्घा कण्ठादौ तद्वति त्रिषु ॥१८८॥
घटप्रस्थादिमाने तु मात्रं स्या तद्वति त्रिषु[3] ।
अष्टौ तु मुष्टयः कुञ्चिर्न द्वयोः किं[4]विरित्यपि ॥१८९॥
द्विगुणं पुष्कलं चैतद्द्विगुणं पूर्ण[5]पात्रकम् ।
द्रवद्रव्यस्य प्रसृतिश्चुलुकं षण्ढ चुलुः पुमान् ॥१९०॥
उरोहृद्धृदयक्रोडे न ना स्कन्धो भुजान्तरम् ।
गुणाधिष्ठानमसहमपि मर्मकं त्रसम् ।१९१॥
क्लीबे वत्सं च वक्षश्च स्तनाधो जठरोपरि ।
क्लीबे पृष्ठं च पृष्ठि[6]श्च पृष्ठी च द्वे इमे स्त्रियौ ॥१९२॥
वक्षःपर्यायरुहरुड्जार्थौ कूचौ कुचावपि ।
धरणौ तावुरसिजावुरोजावपि च स्तनौ ॥१९३॥
पयोधरौ पयोध्रौ च मेचकं पिप्पलं च षण् ।
स्तनार्थाच्च मुखं वृन्तं क्लीबे स्तनशिखा स्त्रियाम् ॥१९४॥

---

१ ऽरत्नि[B] २ ततोव्याम[B] ३ not in [KCS] ४ किंचि[B] ५ मा[B] ६ ष्टिश्चपृष्टी[B]

नरि वा चूचुकं[1]चाथो तुन्दिस्तुन्दा पिचण्डकः ।
स्त्रियां कुक्षी द्वयोः कुक्षिः पिचिण्डो[2] जठरोऽस्त्रियाम् ।१९५।
उदरं चापि तुन्दश्च[3] मलुकश्च पुमानयम् ।
त्रिषु लोमलताधारः कुक्षी उदरपार्श्वगे ॥१९६॥
नाभिर्द्वयोः स्त्रियां नाभी[4]तुन्तोदिर्दीदिडिः पुमान् ॥
दरोऽपि स्याच्छिरामूलं देहवृन्तार्थमित्यपि ॥१९७॥
अपि स्यादुदरावर्त्तं स्यादथो नाभिकूपिका ।
गर्भंडो नाभिगुडको नाभिस्थानान्तरागतः ॥१९८॥
अन्तोरामाशयः पुंसि पुंसि क्लीबेऽपि मध्यमम् ।
क्लीबे वलग्नं चाथ स्यात्पृष्ठग्रन्थौ[5] गुडः पुमान् ॥१९९॥
स्यात्कटिप्रान्तपर्यायः पृष्ठवंशाधरे त्रिकम् ॥
नाभेरधो मूत्रपुटं बस्तिर्मूत्राशयः पुमान् ॥२००॥
वातपर्यायशीर्षार्थैः स च पक्वाशयोन्तरा ।
गर्भस्थानं तु तत्स्त्रीणामथ काञ्चीपदं तु षण् ॥२०१॥
कलत्रं च कटीरोऽस्त्री फलको ना कटिः स्त्रियाम् ।
ककुद्मतो द्वयोः श्रोणिः[6] स्त्रियौ श्रोणिकटी कटः ॥२०२॥
अधो नितम्बः स्त्रीकट्याः पुमान्स च कटीरकः ।
तदग्राधः पुनः क्लीबे जघनं चाथ कूपकौ ॥२०३॥

---

१ चूचकं[K] २ पिचण्डो[B] ३ तुन्दं च[KB] ४ तुतोदिर्दीजिडि[B] ५ गड्डुः[K]
६ स्त्रियां श्रोणी[B]

नाषणकुन्दरे[1] फुल्लिङ्गे ते चरतावुके ।
कुकंदरेप्यथ भगो द्वयोर्योनिश्च योन्यपि ॥२०४॥
अधस्तादव्ययं चापि क्लीबे रतगृहार्थकम् ।
कलत्रं स्मरपर्यायगृहं गुह्यं वराङ्गकम् ॥२०५॥
अस्त्रियां जन्मसंसारपुष्पापत्यर्थे[2]तः पथः ।
स्मरकूपोधरः संधिरवाच्यविषयार्थकः ॥२०६॥
अधोऽव्ययं च कुहरं द्वयोः[3] स्त्रीप्रकृतिर्बुलिः ।
च्युतिर्वुरिः स्यादथ च तनीयस्तत्र मध्यगः ॥२०७॥
स्यादङ्कुशो मणिरथ लिङ्गं लाङ्गलमस्त्रियाम् ।
शेवशेपौ ध्वजोपस्थौ भगमेढ्रौ च मेहनः ॥२०८॥
पुंसि लोलः स्मरस्तम्भः कन्दर्पः शङ्कुरित्यपि ।
स्त्रियां कामलता क्लीबे शेफः[4] शेपश्च न स्त्रियाम् ॥२०९॥
शिश्नः क्लीबे व्यञ्जनं स्यान्नरपर्यायलक्ष्म च ।
अजः[5] प्रजननं गुह्यं मोहनं पुंस्युपस्थकः ॥२१०॥
अथाण्डकोशः कोशाण्डः पेलः[6] कोशक इत्यपि ।
अण्डोऽस्त्री वृषणो[7] मुष्कस्तदधः सीवनी[8] स्त्रियाम् २११॥
सार्वासूत्रं[9] पुनः क्लीबे भगः पुंसि पुरीषणः ।
उच्चारः षणधो मर्म पायुः पुंसि[10] च्युतिः स्त्रियाम् ॥२१२॥

---

१ फुल्ल^BK २ र्थकः पुमान्^KCB र्थेतःपथः Eendation by ^R. ३ स्त्रिप्रकृति^B ४ शेवःशेफ^B ५ अदः^BK ६ पेच। ७ वृषणिमुं^B ८ सिवनी^B ९ साविसूत्रं^BK १० च्युती^BK

शकृद्द्वारं गुदोऽस्त्री स्फिक् न स्त्रियामासनं च षण् ।
अपानं ना कटिप्रोथः स्त्रियामपि चुलिश्च्युतिः ॥२१३॥
ऊर्वोः संधिर्वंक्षणः[1] स्यान्मध्यं वंक्षणमुष्कयोः ।
विटपं[2] च महावीथ्यस्त्रियामूरुस्तु[3] सक्थि षण् ॥२१४॥
अस्त्र्यष्ठीवत्तस्य पर्व वारकीलोथ तस्य तु ।
पश्चाद्भागे मन्दिरः[4] स्यात्प्रत्यग्रं[5] तदधः पुनः ॥२१५॥
कपोली तदधो भागो जङ्घा प्रत्यग्रयोः पुरः ।
जङ्घापिण्डी पिचण्डी च जाघनी कुल्फगुल्फकौ ॥२१६॥
द्वयोरधस्ताद्घुटयोः पार्ष्णी पार्ष्णिरपि स्त्रियाम् ।
द्वयोर्घुटो घुण्टिकोथ पदोऽस्त्री चरणोऽपि पात् ॥२१७॥
पुमान्पादोङ्घ्रिरङ्घ्रिः[6] पत्क्रमणो विक्रमः क्रमः ।
तन्मूलं गाहिरं क्लीबे पादाग्रं प्रपदं च षण् ॥२१८॥
अथ तत्रापि च क्षिप्रमङ्गुष्ठाङ्गुलिमध्यतः ।
कूर्चमस्त्री तदुपरि स्कन्धोंह्रिशिर इत्यपि ॥२१९॥
तलं तु तलहृदयं मध्यं पादतलस्य यत् ।
पादन्यासः पदं क्लीबे क्रमः[7] क्रमणमित्यपि ॥२२०॥
रसासृग्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ।
सप्तैतेषां क्रमाद्योनी रसादिभ्योप्यथ च्छविः ॥२२१॥

---

१ वंक्षयं[B] २ पिटपं[B] ३ श्च ४ मद्रिरः[K] ५ स्प्रत्यग्रं[BKS] स्प्रत्यग्रं[C] ६ स्यात्[B]
७ क्रु[S] क्रा[K]

रसिका स्वेदमाता स्यात् षड्रसात्रेप्यसृग्धरा[*]।
स्यात्त्वचा हारतेजो[1]त्थाप्यस्रमाता वपुःस्रवः ॥२२२॥
पुंसि क्लीबे च चर्माम्भो रसो नर्यथ शोणितम् ।
आसुरं प्राणदं रक्तमाग्नेयं[2] मांसकार्यपि ॥२२३॥
स्यादस्रं रुधिरं शोणं वर्मजं लोहलोहिते ।
कीलालं क्षतजं विस्रमसृक् चर्मसमुद्भवम् ॥२२४॥
तेजस्त्वक् क्षतजन्मार्थं काश्यपं[3] मांसजो रसः ।
मांससारोप्यथो मांसं पिशितं क्रव्यमामिषम् ॥२२५॥
पललं[4]जंगलं कीरं[5] लेपनं मारदं पलम् ।
अस्रपर्यायजन्मार्थं तरसं जाङ्गलं घसम् ॥२२६॥
वासिष्ठं रक्ततेजोजं कीनं[6] मेदस्कृदित्यथ ।
पृक्का तु[7]तल्लता पेशी हृद्यं[8]सुरसं च हृत् ॥२२७॥
वुक्कस्त्रिषु यकृत् क्लोम ताड्यं[9]क्रुपुषमित्यपि ।
[10]वल्लूरं त्रिषु[11]षणमुष्कमांसं सरसमुत्तमम् ॥२२८॥
गौतमं मांसतेजोजं हृन्मेदः स्त्री वसा वपा ।
मांसपर्यायतः स्नेहपर्यायमथगोदकम् ॥२२९॥
अस्त्रीशिरोर्थतः स्नेहो[12]मस्तिक्को मस्तुलुङ्गकः ।
मेदोजमस्थि कुल्यं स्याद्भारद्वाजं च देहतः ॥२३०॥

---

१ धा[B] २ प्राण[C] ३ क[B] ४ जङ्गलं[SB] ५ किलं[B] ६ किटं[B] ७ तत्कृता[B]
८ सरसं[K] ९ ताद्यंक्रु ताद्दं क्रु[B] १० वल्लुर[B] ११ षण्शुष्क[S] १२ मस्तिष्को[BK]

अष्ठीलं धारकं मांसपित्तंशवदयितं पुनः ।
कर्करो न पुमान्मज्जाऽप्यस्थिसारः षणस्थिजम् ॥२३१॥
वाजं तेजः स्त्रियां शुक्रवर्द्धिनी कौशिकीत्यपि ।
शुक्रमानन्दजं पुंस्त्वं तेजोवीर्यं च पौरुषम् ॥२३२॥
स्याद्बीजमिन्द्रियं रेतो रोहणं किट्टवर्जितम् ।
पुमानन्नविकारः स्यादपि मज्जारसोरसः ॥२३३॥
शिरसो[1]स्थि करोटिः स्त्री कपालः कर्परोऽस्त्रियाम् ।
पृष्ठास्थनि[2]कसेरु स्यात्स्त्रियां क्लीबे[3]*सुखं त्वणः ॥२३४॥
[4]खट्वाङ्गोपि कसेरुर्ना पर्शू[5]परशुवक्रयः ।
[6]अस्थ्यादौ विषमो देशः स्थपुटं वपुषि स्मृतम् ॥२३५॥
पुनरप्यथ पार्श्वास्थि स्यात् स्त्रियां पार्श्विका पुनः ।
कङ्कालस्त्वस्त्रियामस्थिपञ्जरोऽपि द्वयोरथ ॥२३६॥
जीवितज्ञा धरा मन्या तन्तुकी धरणी च सा ।
स्याच्छिरा धमनिर्नाडी नाडिः षण् संधिबन्धनम् ॥२३७॥
महास्नायुः कण्डरा स्त्री तिस्रस्तासूत्तमा इमाः ।
इडा वामे तनोर्मध्ये सुषुम्ना पिङ्गला परे ॥२३८॥
इत्यादिकाः शिराभेदा विज्ञेया योगशास्त्रतः ।
त्वक्त्वचाऽसृग्धरा कृत्तिश्छादिनी रोमभूरपि ।२३९॥

---

१ स्थि[KS] २ कसेरु[B] ३ सुखंव[B] ४ खट्टाङ्गो[K] ५ परशुःपर्शु[B] ६ अस्थ्या[S] अस्था

* [CF]शिवखट्वाङ्ग

क्लीबेऽजिनं देहवर्म चर्म पुंसि महापटः ।
रक्ताधारोऽप्यथमलः किट्टेऽस्त्र्यथ तनूरुहम् ॥२४०॥
रोम लोमाङ्गजं त्वग्जं त्वचः पर्यायतो मलः ।
वालपुत्रः परित्राणमन्तरा नासिकोष्ठयोः ॥२४१॥
यत्तन्मुख्यं कर्णमूलात्कर्णमूलावधिस्थितम् ।
नरचिह्नं द्वयोः श्मश्रु शुण्ठं कक्षाश्रितं च यत् ॥२४२॥
[1]दूषीका दूषिका नेत्रभवे नेत्रोद्भवे तु षण् ।
[2]कुलुकं [3]पुष्पिकापि स्यात्पिञ्जूषः कर्णयोः[4] पुमान् ।२४३॥
सिंहाणमस्त्री नासोत्थे तत्र स्वेदनरेचने ।
कुरुण्डवृद्धा[5] सृणिका सृणीका न भिजे[6]कुणः ॥२४४॥
लिङ्गजे पुष्पिकाथ स्यान्मुखार्थादासवार्थका ।
सृणिका स्यन्दिनी लाला सृणीका[7] कालकूचिका ॥२४५॥
घर्मस्तु स्वेदप्रस्वेदौ त्वक्पर्यायजलार्थकम् ।
मूत्रं देहासवः पुंसि वस्तिपर्यायतो मलः ।२४६॥
प्रस्रावः प्रस्रवोऽपि स्याद्विड्विष्ठे च स्त्रियामुभे ।
शकृत् क्लीबे मलोप्यस्त्री पुंस्युच्चारोऽप्यवस्करः ॥२४७॥
क्लीबे गूथं पुनर्वर्चः पुरीषं शमलो[8]ऽस्त्रियाम् ।
पर्दनं गुदजे शब्दे तत्र कुस्मित[9]मित्यपि ॥ २४८ ॥

---

१ दुषिका[BC] २ कुलंक[C] ३ पिष्पिका[S] ४ कर्णजे[SK] ५ वृद्धी[B] ६ कुणा[B]
७ कुल[B] ८ शलखो[B] ९ कुत्सित[C] कुस्सित[B]

पुंस्याकल्पो वेषवेशावपि भूषणमस्त्रियाम् ।
स्यान्नेपथ्यमपि क्लीबे प्रतिकर्म प्रसाधनम् ॥२४९॥
अस्त्री किरीटं मुकुटमुष्णीषमवतंसकम् ।
कोटीरमपि कौटीरस्तथैव शेखरोऽपि च ॥२५०॥
आपीडः पुंसि मौलिः स्याद्वेष्टनं षणतः पुनः ।
मणौ तत्रैव खचिते पुंसि चूडार्थतो मणिः ॥२५१॥
अपि क्लीबे शिरोरत्नं तरलो हारमध्यगः ।
मूर्ध्नि माल्यं तु षण् दाम शीर्षकं[1] शिरसः स्रजि ॥२५२॥
स्रक् स्त्रियां मालिका माला गर्भकः केशमध्यगम्[2] ।
प्रभ्रष्टकं शिखालम्बि पुरोन्यस्तं ललाम तत् ॥२५३॥
तिर्यग्वक्षसि वैकक्षं प्रालम्बमृजु तत्समम् ।
श्रन्थनं ग्रन्थनं पुंसि प्रारम्भो रचना स्त्रियाम् ॥२५४॥
परिपूर्णत्वमाभोगः कर्णपूरस्तु न स्त्रियाम् ।
स्त्रियां पत्राङ्गुलताभङ्गिः पाश्यापि स्याल्ललाटिका ॥२५५॥
पारिपाश्या पारितथ्या कर्णिका कर्णभूषणम् ।
कर्णादर्शः कर्णवेष्टस्ताटङ्कः पुंसि कुण्डलम् ॥२५६॥
अस्त्रियां ताडपत्रं स्त्री कर्णान्दुः कर्णवालिका ।
उत्क्षिप्तिका च कर्णान्दूरथ कण्ठविभूषणम् ॥२५७॥

---

१ शीर्षण्य[B] २ गः[B]

क्लीबे ग्रैवेयकं चापि लम्बमाना[1]ललन्तिका।
प्रालम्बिका कृता हेम्नोरः सूत्रिका तु मौक्तिकैः ॥२५८॥
कलापः पुंसि मुक्तार्थाद्धारः प्रालम्ब इत्यपि।
स्त्र्यावली स्रग्लता यष्टिः सूत्रं प्रतिसरस्त्रिषु ॥२५६॥
देवच्छन्दः शतं साग्रमिन्द्रच्छन्दः सहस्रकम्।
तदर्धं विजयच्छन्दो हारस्त्वष्टोत्तरं शतम् ॥२६०॥
अर्द्ध[2] रश्मिकलापोस्य दशभिश्चार्द्धमाणवः।
द्विर्द्वादशोर्द्धगुच्छः स्यात्पञ्चहारफलं लता ॥२६१॥
अर्द्धहारश्चतुः षष्टि[3]र्गुच्छमाणवमन्दिराः।
अपि गोस्तनगोपुच्छावर्द्धमर्द्धं यथोत्तरम् ॥२६२॥
इति हारा यष्टिभेदैरेकावल्येकयष्टिका।
कण्ठिकाप्यथ नक्षत्रमाला त्वत्संख्यमौक्तिकैः ॥२६३॥
क्लीबेऽङ्गदं तु केयूरं बाहुपर्यायभूषणम्।
आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम् ॥२६४॥
कङ्कणं न स्त्रियां तद्वदंगुलीयकमूर्मिका।
साक्षराङ्गुलिमुद्रा स्यात्[4]करारोहः पुमानथ ॥२६५॥
क्लीबे सारसनं काञ्ची सैव स्यात्कटिमेखला।
संसतकी[5] च रसना[6]कटिपर्यायनाटिका ॥२६६॥

---

१ ललम्बिका^B २ अर्द्धरश्मि^B ३ गुच्छा^K ४ करो^B ५ सांसप्रकी^B ६ कोटि^BC

स्त्री मेखला च[1] रसना काञ्चिः कक्ष्या च कक्ष्या ।
पुंस्कट्यां शृङ्खलं तु स्यात्त्रिषु पादाङ्गुलस्य षण् ॥२६७॥
स्यात्पादकटकं[2] चास्त्री तुलाकोटिरपि द्वयोः ।
मञ्जीरोऽस्त्री नूपुरोऽपि तुलाकोट्यपि च स्त्रियाम् ॥२६८॥
हंसकश्चाथ घर्घर्यां कङ्कणी क्षुद्रघण्ट्यपि ।
पादशीली[3] प्रतिसरा किङ्किणी क्षुद्रघण्टिका ॥२६९॥
पादतः[4] कीलिका नाली[5] मालिका चाङ्गुलीयकम् ।
अडिनी सिञ्जिनी तुल्ये*वृश्चिक्यपि वृश्चिका ॥२७०॥
पटः सिचय आच्छादचीवराः पुंसि न स्त्रियाम् ।
चेलमाच्छादनं वासो वसनं चापि न स्त्रियाम् ॥२७१॥
तद्वल्कलतृणक्रिमिफलरोमार्थसंभवम् ।
क्षुमाभङ्गाशणादित्वक्संजातं वाल्कमित्यपि ॥२७२॥
कर्पासार्कादितूलोत्थं फालं स्याद्बादरे पुनः ।
आर्कं तौलं च रौमं तु स्याच्छशैडादिरोमजम् ॥२७३॥
तदौर्णमथ कौशेयं जीविनिर्जीवकोशजम् ।
विविधं चापि तत्सूत्रं पट्टं[6] हीरं च कोमलम् ॥२७४॥
अथैतेषां प्रभेदाः स्युस्तत्र वल्कलजान्यपि ।
क्षौमाण्यस्त्री पवित्राणि शाणान्यावपनानि तु ॥२७५॥

---

१ रस^BC २ वास्त्री^KC ३ शाली^B ४ किलिका^C ५ मालिका^B ६ पट्टहीर^B

* Indication of author's residence in North Behar तिहुंत ?

शाखी गोणी स्त्रियां तासां विकृतिः पुंसि कागलः ।
कागलोप्यक्षराधारः पुस्तकप्रकृतिः पुनः ॥२७६॥
अक्षरात्कोशपर्यायस्तद्वद्भूर्जस्य वल्कले ।
ताडपत्रे तत्र पत्रं न ना भङ्गोद्भवान्यपि ॥२७७॥
कार्पासं सर्वकार्यार्थं बादरं तदथ स्त्रियाम् ।
ऊर्णा मेषादिलोम्निस्यात्क्लीबे और्णं तदुद्भवे ॥२७८॥
आविकौ[1] रभ्रकौचैव पुमानूर्णायुरित्यपि ।
आयल्लको रल्लकः स्याद्द्वयोः कम्बल इत्यपि ॥२७९॥
मरूद्भवायां[2] शुम्बा स्याल्लुम्बा[3] पञ्चनदोद्भवा ।
पुंसि पर्वतसंजातपर्यायो रत्नकम्बलः ॥२८०॥
काश्मीरी तु महोर्णा स्यात् प्रावारीत्यपि पामरी ।
य[4]त्तिका भोट इत्याद्यास्तत्तद्विषयनामकाः ॥२८१॥
म्लेच्छदेशोद्भवाः केपि परुत्कालोद्भवा अपि ।
अनेके राजभोग्यास्ते त्रिषु सर्वे यथार्थतः ॥२८२॥
अथ साधारणं[5] मापं क्षौमं स्यात्प्रावृतं त्रिषु ।
दुकूलं च दुगूलं स्यात्कौशेयं कृमिकोशजम् ॥२८३॥
राङ्कवं मृगरोमोत्थं स्त्रियां भूम्नि दशा अपि ।
वस्त्रान्ते च स्त्रियां वर्त्तिर्वस्तिश्चापि च पल्लवः ॥२८४॥

---

१ अपिकौकंख[B] अपिकौकंष[KC] आविकौरभ्रकौ चैव[S] २ मरु[KC] ३ लुम्बा[B] ४ त्यति[KC]
५ पत्त्रिका [BKS] ६ मापं[BKS]

वस्त्रव्यंस्य: पुमानस्त्री प्रार्थ्यश्चञ्चल इत्यपि ।
अष्टहस्तपरिमाणं परिधानक्षमं महत् ॥२८५॥
सदशं क्षालितं शिष्टैस्त[1]द्धौत्रं पोत्रमप्यणु ।
स्नानेऽङ्ग[2]प्रोञ्छने पोत्रमंगोछोंऽगो[3]छनं च षण् ॥२८६॥
तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम् ।
नवं वासोऽनाहतं स्यादहतं तन्त्रकं पुनः ॥२८७॥
[4]निःप्रवणं❀ निःप्रवाणिस्तद्वस्तु सकलं त्रिषु ।
पटच्चरो जीर्णवस्त्रं संव्यानं तूत्तरीयकम् ॥२८८॥
प्रच्छादनं प्रावरणं वराशिः स्थूलशाटकः ।
वैकक्ष उत्तरासङ्गः प्रावारो बृहती स्त्रियाम् ॥२८९॥
परिधानं परीधानमन्तरीयमधोंशुकम् ।
अपि स्यादुपसंव्यानं तथापि वसनं पुनः ॥२९०॥
तद्ग्रन्थिस्तु स्त्रियां नीविर्नीवी नोच्चय इत्यपि ।
अर्द्धोरुकं चलनकं स्याच्चण्डातकमंशुकम् ॥२९१॥
सभर्तृकाणामन्यासां चलनीति निगद्यते ।
शाटीचोड्यौ स्त्रियां पुंसि कूर्पासश्चोलको द्वयोः ॥२९२॥
अस्त्रियां कञ्चुकोऽपि स्यात्त्रिषु स्यादपि कञ्चुली[5] ।
अङ्गिका कटिबन्धे तु परेः[6] प्रात्स्यात्करः पुमान् ॥२९३॥

---

१ द्धोनं[BS] २ प्रोच्च[BC] ३ ञ्छ[B] ४ निष्प्रवणां निष्प्र[S] ५ कञ्चुला[B] ६ प्राक्[B]
❀ मैथिल spelling

पल्लवादियुतः सोऽपि पटः प्रच्छादनी द्वयोः ।
द्विवस्त्रा द्विपटी तद्वद्धिमवातसहेंऽशुके ॥२९४॥
नीसारोथ निचोलस्तु निचुल्यश्चोत्तरच्छदः ।
अपि स्यात्प्रच्छदपटः क्लीबे निचुलकं पुनः ॥२९५॥
कञ्चुकं[1] वारवाणो ना यामस्तूलयुतोप्यथ ।
द्वयोः कच्छाटिका कच्छपटः कौपीनमित्यपि ॥२९६॥
कच्छा स्त्री[2] कर्पटः पुंसि परिधाने परोञ्चलः[3] ।
उत्सवादौ सुहृद्भिर्यद्बलादाकृष्य गृह्यते ॥२९७॥
वस्त्रमाल्यादि तत्पूर्णपात्रं पूर्णानकं च तत् ।
तदेवाप्रपदीनं स्याद्व्याप्नोत्याप्रपदं हि यत् ॥ २९८॥
चीवरं भिक्षुसंघाटी समौ नक्तककर्पटौ ।
ऊर्मिका स्यात् स्त्रियां वस्त्रभङ्गशब्देऽस्य मर्मरः ॥२९९॥
प्रतिसीरा जवनिका तिरसः करिकारिणी ।
अपटी स्यापुमान्काण्ड[4]पटो थोल्लोच इत्यपि ॥३००॥
चन्द्रोदयश्च[5]कटको वितानं पुंनपुंसकम् ।
क्लीबे स्थुलं पट्टमयं दूष्यं यद्वस्त्रवेश्म च[6] ॥३०१॥
पटवासः खरगृहं[7]केणिकं पटकुट्यपि ।
स्याद्गुणलयनि[8]कार्या रज्जुवंशादि[9]संभवे ॥३०२॥

---

१ कञ्चुको^KS २ च्छा^B ३ परा^KS ४ पटे^KCB ५ दरको वै. ६ तत्^B ७ कोपाकं ८ काया^S ९ संगते^B

अथ रोगे गदो व्याधिरुपतापः क्षयोऽपि च ।
क्रमः कामो विकारः स्यान्मृत्युपर्यायसेवकः ॥२०३॥
स्त्री ग्लानिरर्त्तिरार्त्तिः स्याद्रुग्रुजा षण्पाटवम् ।
भयं मान्द्यं च पुंसि स्यादामयोथ[1] महागदः ॥२०४॥
ज्वरः स्यात्संज्वरो रोगपुष्टश्चातङ्कस्त्रिपात् ।
भस्मबाण स्त्रिशीर्षार्थ एक दंष्ट्रार्थ इत्यपि ॥२०५॥
अथ ज्वरो मनुष्येषु करिजातिषु[2] पाकलः ।
अभितापस्तुरङ्गेषु पोरको[3] रासभेषु सः ॥२०६॥
उष्ट्रे ष्वलसकः सस्याद् गोषु स्यादैश्वरो ज्वरः ।
सर्पेष्वाक्षिक इत्या[4]ख्योहारिद्रो महिषेष्वयम् ॥२०७॥
मृगेषु मृगरोगः[5] स्यात्प्रलेपोऽजाविकेष्वयम् ।
अक्षमानः[6] पक्षिषुस्यान्मत्स्येष्विन्द्रमदश्चसः ॥२०८॥
गुल्मेषु ग्रन्थिकः सस्यात्सच पुष्पेषु पर्वतः ।
ओषधीषु ज्योतिरयं रूपको[7] नलिनीषु च ॥२०९॥
धान्येषु पूर्णको लोलः[8] कोद्रवेषु च पर्वतः ।
*पुष्पेष्वप्सु च नीली स्याद्धरायामूषराभिधः ॥३१०॥
अन्नगन्धिरतीसारोऽतिसार उदरामयः ।
मलवेगोथ स्त्रियां स्याद्ग्रहणी संग्रहण्यपि ॥३११॥

---

१ महामदः[KC] २ पालकः[BK] ३ प्रोरको[C] ४ ख्ये[B] ५ मेगः[B] ६ अवमानः[B]
७ रूपको[B] ८ लोला[K]

* पुष्पेषुपर्वतः is repeated

आर्षे[1]प्रवाहिका चाथाजीर्णाद्यन्नाद्यपकता ।
तद्विकारे[2] विषूचिः स्त्री दुर्नामानो गुदाङ्कुराः ॥३१२॥
पापरोगो मयूरी स्त्री रक्तपर्यायतो वटी ।
क्लीबेऽर्शांसि गुदा[3]त्कीलाः कृमयः कोष्ठजाः पुनः ॥३१३॥
अङ्गजा विविधास्ते स्युर्यू का[4]द्याः स्युर्वमिस्त्रियाम् ।
वान्तिः स्त्रियां स्याद्वमथुः प्रच्छर्दिश्छर्दिरित्यपि ॥३१४॥
छ[5]र्दिर्वामी च वमनं छर्दनं स्यान्नपुंसकम् ।
अथ पाण्डुर्विरूपः स्यात्स[6]चिवामय इत्यपि ॥३१५॥
कामला स्त्री तत्प्रभेदे क्लीबं तु स्याद्धलीमकम् ।
रक्तपीतं[7] पीतरक्तं वातादिद्वन्द्वदोषजम् ॥३१६॥
उन्नेयमथ[8]काशः स्यात् क्षुतं क्लीबे क्षवः पुमान् ।
स्त्रियां क्षुत् क्षवथुः पुंसि प्रतिश्यायः प्रतिश्ययः ॥३१७॥
पीनसोथ क्षयो राज[9]यक्ष्मा रोगार्थराडपि ।
यक्ष्म[10]जक्ष्मश्च यक्ष्मश्च शोषो बहुविधा अमी ॥३१८॥
अथाप्यग्निविकारोथारुचिः स्त्री स्यादरोचकम् ।
अश्रद्धानभिलाषोथ पिपासा तृट् तृषापि च ॥३१९॥
तृष्णोदन्येथ मूर्छा तु मूढिर्मोहिःस्वर[11]क्षयः ।
स्वरसादश्च[12]मूत्सायां[13]निद्रास्त्री शयनं च षण् ॥३२०॥

---

१ अपि[R] अप्प[RBC] २ ची[B] ३ लात्[CKS] ४ यूंकादिमावमि[B] ५ छर्दी[KS] ६ त्सा[B] ७ रक्तपित्त पित्त[C] ८ कास:[KBS] ९ पीनासो[B] १० अक्ष्म[B] ११ स्वर[BS] १२ स्वर[SB] १३ यो[SK]

स्वप्नः स्वापश्च संवेशस्तन्द्री तन्द्रा प्रमीलिका ।
अपि स्याद्विषया ज्ञानं प्रलयः[1] प्रमिलापि च ॥३२१॥
ग्लानि[2]र्ग्लाः स्यादथ मदः स्त्रियामुद्रिक्तचित्तता ।
मदात्ययो मदातङ्कः पानस्यार्थादजीर्णकम् ॥३२२॥
पानाद्विभ्रमपर्यायः पानदृघातस्तथा परः ।
संतापः संज्वरस्तापः प्लोषो[3] दाहोऽपि चोमकः ॥३२३॥
अन्तर्दाहः कोष्ठतापे मुखताल्वोष्ठचक्षुषि ।
तापे ना दवथुः पादपाण्यङ्गुलितलादिके ॥३२४॥
यः संतापः शिखापित्तः[4] प्रलयस्तु प्रलीनता ।
सच स्यादिन्द्रियस्वापश्चेष्टनाशोऽप्यथापि च ॥३२५॥
उन्मादो मतिविभ्रंशउन्मनायितमित्यपि ।
आवेशो भूतसंचारो भूतक्रान्ते[5] ग्रहागमः ॥३२६॥
अपस्मारोऽङ्गविकृतिर्लालीधो[6] भूतविक्रिया ।
तैमित्यं जडता जाड्यं शीतलत्वमपाटवम् ॥३२७॥
आमवातः संधिशूलमथ शूलं तु वातजे ।
तोदे यदन्नपाके स्यात्तच्छूलं[7] परिणामकम् ॥३२८॥
स्यादुद्गार उदावर्त्त आनाहो मलरोधनम् ।
विबन्धोपि च विष्टम्भः प्रत्यानाह उरोग्रहः ॥३२९॥

---

१ प्रलयं[KC] २ ग्लां[B] ३ शो[B] ४ पित्ता[KB] ५ क्रान्तो[B] ६ लीलाम्धो[B] ७ ल[KC]

हृद्रोगो हृद्गते शूलेऽथोदराण्युदरामये ।
जलोदरोथ जृम्भा स्याज्जम्भिका जृम्भणं च षण् ॥३३०॥
मान्द्यालस्ये[1] मन्दता स्यात् कार्यप्रद्वेष इत्यपि ।
आमो मलस्य वैषम्याद्रक्तार्तिः शोणितामयः ॥३३१॥
गुल्मस्तु जाठरो ग्रन्थिः पृष्ठ[2]ग्रन्थिर्गडुर्भटः ।
मूत्राघातो मूत्रवर्त्मरोधेथ मूत्रकृच्छ्रके ॥३३२॥
कृच्छ्रं स्त्रियामश्मरी स्यात् प्रमेहो मेह इत्यपि ।
मूत्रदोषः सोमरोगः प्रमेहपिटकाः पुनः ॥३३३॥
मेदोदोषोपि शोथोऽस्त्री शोफः स्यात् श्वयथुः पुमान् ।
अन्त्रवृद्धिर्गण्डमाला अर्बुदं स्यात्ततः[3] पुनः ॥३३४॥
अस्त्रियां पादवल्मीकं श्लीपदं पादगण्डिरः ।
विद्रधी विद्रधिः स्त्रीस्याद्धृद्ग्रन्थिर्हृद्व्रणश्च सः ॥३३५॥
व्रणो भगप्रदेशोत्थः स च पुंसि भगंदरः ।
सद्योव्रणः कोष्ठभेदः पुंसि नाडीव्रणोऽपि च ॥३३६॥
लिङ्गोपदंशा लिङ्गार्शास्यथ कुष्ठभिदाः क्रमात् ।
कुष्ठं श्वित्रमुभे क्लीबे कोठो दुश्चर्मकं पुनः ॥३३७॥
कापालिकौदुम्बरे च मण्डलं त्रिषु चर्चिका ।
तद्वत्त्वक्पलिकं[4] च स्यात्पादस्फोटो विपादिका ॥३३८॥

---

१ मोद्यालस्ये^B २ ग्रन्थौगडु^BK पुमान्^KC ३ कापालिकौदुम्बरे च अस्त्रियां पारवल्मिकम् श्लीपदंपादगण्डीरः विद्रधीविद्रधिस्त्रियाम^B ४ फलिकं^B

धौतकुष्ठं टिटटिभं स्त्री [1]दुद्रुरलसमित्यपि ।
दद्रुर्दद्रुश्चापि दर्द्रूः कोठो नाकरडुरित्यपि ॥३३६॥
कच्छूः कण्डूश्च कण्डूतिः खर्जूः कण्डूयनं च षण् ।
पीतस्फोटे पाम पामा सूक्ष्म[2]स्फोटे विचर्चिका ॥३४०॥
क्षुद्रस्फोटे[3]चञ्चिका स्यान्मसूराभा मसूरिका ।
संचारिसुण्डिका[4] स्फोटे पिटको[5]विटकस्त्रिषु ॥३४१॥
विस्पोटः स्फोटकश्चेन्द्रलुप्तः केशघ्न इत्यपि ।
महाकुष्ठे चर्मदलं पुण्डरीकं शतारुकम्[6] ॥३४२॥
काकनं[7] पित्तकुष्ठं च कुष्ठान्यष्टादशैव हि ।
अथ षष्टिमिताः क्षुद्ररोगाः पनसिकादिकाः[8] ॥३४३॥
मसूरिकान्तास्तेषु स्याज्ज्वालागर्दभकार्थकः ।
अम्लपित्तं विसर्पाह्व[9] उदर्दो वातशोणितम् ॥३४४॥
इत्थं भूयो रोगभेदा अथ वातोद्भवा गदाः ।
आक्षेपकं हनूस्तम्भ इत्याद्या अथ पित्तजाः ॥३४५॥
धूमोद्गारादयस्ते स्युश्चत्वारिंशदथापरे ।
कफजा[10] अतिनिद्राद्या विंशतिस्ते प्यथापरे ॥३४६॥
रक्तोद्भवा गौरवाद्यास्ते दशाथ मुखोद्भवाः ।
ते चतुःसप्ततिमितास्तेषु दन्तोद्भवा दश ॥३४७॥

---

१ दुद्रु[B] २ सूक्ष्मा[K] ३ चिञ्चिका[CB] ४ संचारीश्चु[K] रीशु[B] ५ चिकट[KB]
६ रुकम्[B] ७ काननं ८ दमः[B] ९ विपर्याह्व[KC] १० कफजाः स्युर्निद्राद्या[B]

एकादशौष्ठ[1]जा दन्तमूलरोगास्त्रयोदश ।
अष्टौ तालुगदा जिह्वाभवाः षड् गलजा गदाः ॥३४८॥
अष्टादशाष्टावपरे मुखमध्यभवा अथ ।
अष्टादश स्युः कर्णोत्थाः सप्तपाली समुद्भवाः ॥३४९॥
कर्णमूलोद्भवाः पञ्चदशाष्टौ नासिकोद्भवाः ।
शिरोरोगा दशैव स्युस्ते खलत्यादयोऽप्यथ ॥३५०॥
नवैव स्युः कपालोत्थास्तेषु स्यादिन्द्रलुप्तकम् ।
तथा पलितमित्याद्या अथ नेत्रसमुद्भवाः ॥३५१॥
चतुर्नवतिसंख्याकाः पुंस्त्वदोषास्तु पञ्चधा ।
कुम्भीक इषको[2] सेक्यः सुगन्धी षण्ड[3] इत्यमी ॥३५२॥
अथाप्यष्टौ शुक्रदोषा अथ स्त्रीदेहजागदः ।
तेष्वष्टावार्त्तवोत्थास्तु तत्र पूयाभमार्त्तवम् ॥३५३॥
कुणपं[4]ग्रन्थिलं[5] चीणमलतुल्यादिकं च तत् ।
प्रदरोऽस्त्री चतुर्धा स्यादथ योनिसमुद्भवाः ॥३५४॥
चतुर्विंशतिराख्याताः शुक्रावामिनिकादयः[6] ।
योनिकन्दश्चतुर्धा स्यादष्टधा गर्भजो गदः ॥३५५॥
पञ्चधा स्तनजा रोगा बालरोगस्त्रिधा मतः ।
अदत्तपुरुषाज्जातः[7] सपत्नीविहितोऽपरः ॥३५६॥

---

१ दशोष्ठ^B २ ईर्ष्यकासेक्यौ^S ३ षढ^S षण्ढ^B षंठ^K ४ कुणपग्र^B ५
६ वामिनी^C ७ जातः^B

दैवाज्जातस्तत्र दन्तभेदाख्या[1] विविधा गदाः ।
अथ रुग्णोऽमितो[2]म्लानो व्याधितो विकृतो पटुः ॥३५७॥
अभ्यान्तः[3] सामयो मन्द आतुरो ग्लास्नुरित्यपि ।
तद्विशेषाः समुन्नेयास्तत्तन्मत्वर्थगोचराः ३५८॥
यथा ज्वरितकण्डूलार्शसक्षयितदद्रुणाः ।
त्रिष्वथो भेषजं क्लीबे भैषज्यं च भिषग्जितम् ॥३५९॥
औषधं चागदं जायुः पुंस्यथापि च निग्रहः ।
उपचारश्चोपशमश्चिकित्सा रुक् प्रतिक्रिया ॥३६०॥
उपचर्याथात्मनीनमायुष्यं च हितं च तत् ।
पथ्यं स्यादप्यथारोग्यं वार्त्तं पाटवलाघवे ॥३६१॥
अनामयमथोल्लाघः पटुः कल्पो निरामयः ।
अग्लास्नुरगदो नीरुगनातङ्को लघुः पुनः ॥३६२॥
वार्त्तोपि स्यादथो वैद्य आयुर्वेदी चिकित्सकः ।
रोगहार्यगदंकारो रोगज्ञो जीवदो भिषक् ॥३६३॥
स्रष्टा विद्वान्विधिरथ विषवैद्यस्तु जाङ्गली ।
कथाप्रसङ्गः क्लिन्नाक्षे[3]चुल्लश्चिल्लश्च पिल्लकः ॥३६४॥
वाच्यलिङ्गा[4]अथो * पथ्यं पादाहारः स्त्रियां मृजा ।
स्यान्मार्ष्टिर्मार्जनी क्लीबे स्यादुद्वर्त्तनमित्यपि ॥३६५॥

---

१ भेदाद्या[B] २ चिता[C] अभ्यन्तो ३ बिल्ल[K] ४ अथाप्यान्द्यं[S]
* पथ्यं पादाहार इति पर्यायौ

परिकर्माङ्गसंस्कार आचामः स्नानमाप्लवः ।
स्त्र्याप्लुतिः स्यादाचमनमभिषेकोऽवगाहनम् ॥३६६॥
अवगाहोऽपि चर्चा तु चार्चिक्यं स्थासकोपि च ।
प्रबोधश्चानुबोधश्च स्याल्लेखेङ्गुलिपत्रयोः ॥३६७॥
यत्तु सर्वौषधिस्नानं तन्मङ्गल्यमलौकिकम् ।
दिष्टं तु मृत्तिकास्नानमभिषेकस्तु मन्त्रवत् ॥३६८॥
क्लीबे तमालपत्रं स्याच्चित्रकं तिलकोऽस्त्रियाम् ।
पुनर्विशेषकं क्लीबे शीतलं भोगिवल्लभम् ॥३६९॥
गोशीर्षं चापि मङ्गल्यं तिलपर्णं महार्हकम् ।
सुगन्धं चावनं चाश्री शीतगन्धोऽपि चन्दनः ॥३७०॥
गन्धाढ्यो गन्धसारोऽपि श्रीखण्डो मलयोद्भवः ।
सर्पावासश्च पाटीरो वेधकः पुंसि रौहिणः ॥३७१॥
गन्धराजोऽपि भद्रश्रीः स्वयं शुष्के तु सुक्कडिः ।
वेरं षणार्द्रच्छिन्ने स्याद्द्विधा काष्ठं तु चान्दनम् ॥३७२॥
वेटा मलयपादाः स्युस्तज्जं वेटं परे जगुः ।
निम्ब[2]बिल्वहरिद्रादि[3] तत्संगत्या भवन्ति ते[4] ॥३७३॥
नातिपीतं तु कैरातं कवरं चन्दनं च तत् ।
गन्धकाष्ठं शैलगन्धं किराताभिधवल्लभम् ॥३७४॥

---

१ मबोचकम्[S] २ विव[K] ३ द्रा[S] ४ वे[B]

तत्स्याद्बहलगन्धं च पित्त[1]गन्धं तु पीतकम्
कालेयवर्वरं[2]पीतचन्दनं माधवप्रियम् ॥३७५॥
अथ रक्तार्कचुद्रेभ्यश्चन्दनं रक्तसारकम् ।
कुचन्दनं हिमं चाय वर्वरं श्वेतवर्वरम् ॥३७६॥
वर्वरोत्थं लेमहितं तु सुरार्हं नन्दनोद्भवम् ।
हरिगन्धं महागन्धमिन्द्रपर्यायचन्दनम् ॥३७७॥
स्यादस्त्रियां दिव्यमथ काश्मीरं पिशुनं वरम् ।
शठं वरेण्यं घुसृणमरुणं वह्निशेखरम् ॥३७८॥
गौरं[3] कालेयकं कान्तं जागुडं केशरोऽस्त्रियाम् ।
कुङ्कुमं चापि वाह्लीकं[4] पीतं काश्मीरसंभवम् ॥३७९॥
असृक्पर्यायि काश्मीरं सूर्यपर्यायि दीपनम् ।
संकोचं सौरमं धीरं वर्णं स्यात्पीतचन्दनम् ॥३८०॥
घोरं चाथ तृणोत्थं तु तृणार्थात्कुङ्कुमार्थकम् ।
तृणपुष्पार्थकं चाथ श्यामा गन्धमृगाण्डजा ॥३८१॥
कस्तूरी मृगनाभिः स्यान्मदनी गन्धवेलिका ।
मार्जारी सुभगा वेधमुख्या स्याद्बहुगन्धदा ॥३८२॥
श्यामला ललिता गन्धधूलिरामोदिनीत्यपि ।
मृगः सहस्रवेधी स्यान्मार्गो मृगमदोऽपि च ॥३८३॥

---

१ पीत[B] २ पीतं[BK] ३ गौर[B] ४ वाहिकं

कपिला पिङ्गला कृष्णा त्रिविधातस्तु[1] पञ्चधा ।
चूर्णीकृता तु खरिका तिलाभा तिलकापरा ॥३८४॥
कुलत्थिका[2] कुलत्थाभा तस्याः स्थूला तु पिण्डका ।
ततः स्थूला नापिकाथ कर्पूरो हिमवालुकः ॥३८५॥
स्याद्वेणुघनपर्यायसारपर्याय इत्यपि ।
अपि स्याच्चन्द्रपर्यायो हिमाङ्कः शाम्भवः पुनः ॥३८६॥
गोशीर्षस्तैलपर्णाः[3] स्यात्ताराभ्रः कुमुदः शिला ।
मिहकाप्यथ तद्भेदाः पोताभो भीमसेनकः ॥३८७॥
अपि स्याच्छंकरावासः पांसुः शीतकरः पुनः ।
पि[4]ओब्जसारः सारोपि जूटिका वालुकः पुनः ॥३८८॥
हिमयुक्तः शीतलोपि पञ्चिक[5]श्चैवमादयः ।
चीनकश्चीनकर्पूरः कृत्रिमो धवलः पटुः ॥३८९॥
दीपकर्पूरजोपि स्यात्सच कर्पूरनामकः ।
पीता तु गौतमी गव्या वन्दनी[6]या च काञ्चनी ॥३९०॥
मेध्या मनोरमा श्यामा रामा गौरी च रोचना ।
गोरोचना च मङ्गल्याथ जवादिः स्त्रियामियम् ॥३९१॥
गन्धपर्यायराजार्थो मृगार्थादृघर्मजोऽपि च ।
अस्त्रियां कर्दमः[7]स्निग्धः कृत्रिमोऽपि ततः पुनः ॥३९२॥

---

१ ता^KB २ कुलुत्थिका^B ३ गन्धः ४ पिजो^KS ५ च्चिक^B ६ चन्दनीया^BK
७ मातिल^B

समूहगन्धो गन्धाढ्यः सुगन्धतैल इत्यपि ।
कटुमोदोथ[1]स्तूणीकः स्तूणीकान्तः कुठेरकः ॥३६३
स्तूणिकः पीतकः कान्तो नन्दी[2]कलप इत्यपि ।
जातिपत्री[3] जातिकोशी सुमनापि च पत्रिका ॥३६४॥
जातीफलं जातिसस्यं शाल्कं सुमनः फलम् ।
मजुसारं[4] जातिसारं पुटं द्रेष्यं[5] तु कोलकम् ॥३६५॥
कङ्कोलकं कृतफलं मरिचं कटुकं फलम् ।
कटफलं स्थूलमरिचं माधवोचितमित्यपि ३६६॥
कर्पूरागरुकस्तूरी कक्को[6]लैर्यक्षकर्दमः ।
गात्रानुलेपनी वर्त्तिर्वर्णकं* तु विलेपनम् ॥३६७॥
चूर्णानि वासयोगाः स्युर्वासितं भावितं त्रिषु ।
प्रियंगुः फलिनी श्यामा प्रियवल्ली फलप्रिया ॥३६८
गौरी गोविंदिनी वृन्ता करभा कंङ्कुकङ्गनी ।
लङ्गुरा गौरवल्ली च सुभगा पर्णभेदिनी ॥३६९॥
शुभा पीता च मङ्गल्या श्रेयस्यथ सुधूपकः ।
श्रीवासः श्रीरसो वेष्टो धूपाङ्गस्तिलपर्णिकः[7] ॥४००॥
वेष्टसारो रमावेष्टः चीरशीर्षक इत्यपि ।
उशीरं तु मृणालं स्याज्जलवासो हरिप्रियः ॥४०१॥

---

१ पि[B] २ कालीय[B] ३ जार्ता[B] ४ मज्ज ५ द्रेप्यं[B] ६ कंकोलै[B] ७ पर्णांकः[KSB]
* वर्णको वर्णकोऽस्त्रावि पुंलिङ्गो माघे ।

अभयं वीरणं वीरं समगन्धिकमित्यपि ।
रणप्रियं वीरतरं शिशिरं शीतमूलकम् ॥३०२॥
शुभ्रं सुगन्धिकं चापि कलकं चाथ शेखरम् ।
स्त्रियां लवङ्गकलिका दिव्यं क्लीबे न[1]च स्त्रियाम् ॥४०३॥
लवङ्गं देवपर्यायपुष्पपर्यायकं फलम्[2] ।
लक्ष्मीपर्यायपुष्पार्थं भृंगारं वान्तसम्भवम्[3] ॥४०४॥
रुचिरं स्यादथ स्वादुः सुधूमो[4]गरुसारकः ।
गन्धधूमभवोथास्त्री कृष्णादगरुकाष्ठके ॥४०५॥
अगुरु[5]र्वंसुकः केश्यः शृङ्गारो विश्वरूपकः ।
धूपार्हो वल्लरोऽपि स्यान्मिश्रवर्णोऽथ[6] पीतकः ॥४०६॥
अलारोऽनार्यको लोहः स च वर्णप्रसादनः ।
काष्ठागुरुः[7] कृमिजग्धश्चाथ स्याद्दहनागुरुः ॥४०७॥
दाहागुरु[8]र्दाहकाष्ठं पुरं[9] धूपाङ्गदः पुनः ।
वल्लभः पूरमथनं मङ्गल्यामल्लिके स्त्रियौ ॥४०८॥
गन्धार्थ[10]मङ्गलाच्चाथ तुरुष्को यवनः कपिः ।
पिण्याकः[11] कपिजो धूम्रः शिल्पिसारः सुगन्धकः[12]।४०९
शिल्पिकः पीतसारः स्यात् पिण्डितः पिण्डतैलकः ।
करेवरः कृत्रिमको लेपनश्चाथ गुग्गुलुः । ॥४१०॥

---

१ चन^B २ प्लवम्^BK ३ वान्ति^BK ४ स^B ५ वंसुकः^B ६ वर्णौ^B ७ ग^B ८ ग^B ९ पूरं^KC १० श्लोकार्धंनास्ति^B पुस्तके ११ पिनाकः^C १२ सुगन्धि^BK

म्लेच्छद्विष्टो भवानीष्टो जटालः कौशिकः पुरः ।
निशाटको भूतहरः कालनिर्यासशावरौ ॥४११॥
मरुदेश्यो रूक्षगन्धा[1] वातघ्नो महिषाक्षकः ।
देवेष्टोऽपि च रक्षोहा दित्यो दुर्गः[2] शिवोप्यथ ॥४१२॥
गन्धराजः स्वर्णवर्णः सुवर्णकणगुग्गुलुः ।
पलंकषश्च सुरभिर्वंशपीतोाथ भूमिजः ॥४१३॥
महिषासुरमज्जोत्थो दुर्गापर्यायवल्लभः ।
आशापुरोद्भवो दुर्गाह्लादो भूतघ्न इत्यपि ॥४१४॥
मेध्यः सौरभ्यदः शालनिर्यासस्त्वग्निवल्लभः ।
रालः सर्जरसः शालः कालः कनकलोद्भवः ॥४१५॥
बहुरूपः कललजः सुरभि[3]र्यक्षधूपकः ।
देवेष्टः शीतलोऽपि स्यादथ पालीन्दभीषणौ ॥४१६॥
सौराष्ट्रः शिखरी[4]कन्दुः कन्दूरक[5]सुकन्दकौ ।
बहुगन्धो गोपुरगस्तीक्ष्णः शंखः [6]खरः शकः ॥४१७॥
रुप्योऽपि बदरीपत्रः [7]शललः कोशीहनुः[8] स्त्रियाम् ।
शिपिः शुक्ति[9]र्नागहनुः पुनः पर्णविलासिनी ॥४१८॥
संधिनालो नखार्थः स्यादथ व्यालनखः पुनः ।
व्यालायुधो व्याघ्रनखः कूटस्थश्चक्रनायकः ॥४१९॥

---

१ न्धो$^{B}$ २ दुर्गंशिरो$^{B}$ ३ सुभगोथ$^{B}$ ४ कु$^{K}$ ५ मुक $^{K}$ मुकु$^{S}$ ६ खराशकः$^{K}$
७ श्लीलः$^{B}$ ८ हनुस्त्रियाम्$^{B}$ ९ नाहनुगः$^{B}$

चक्री चक्रनखश्चापि कालः पुंस्यथ षण्पुनः ।
संस्कारो गन्धमाल्याद्यैर्यत्स्यात्तदधिवासनम् ॥४२०॥
तल्पमस्त्री तु तलिनं क्लीबे स्याच्छयनं पुनः ।
शयनीयं स्त्रियां शय्या खट्वा स्यान्मञ्चकोऽस्त्रियाम् ४२१
द्वयोर्मञ्चश्च पर्यङ्कपल्यङ्कौ पुंसि चास्तरः ।
क्लीबे चास्तरणं तत्राच्छादने कशिपुः पुनः ॥४२२॥
अस्त्रियां कसिपुश्चाथ स्यादुच्छीर्षकमस्त्रियाम् ।
उपधानं चोपबर्हश्चाथ पर्यस्तिका स्त्रियाम् ॥४२३॥
अवस[1]क्थिनिका खट्वा निषद्या खट्विका समे ।
स्याद्वेत्रासनमासन्दी प्रतिग्राहपतद्ग्रहौ ॥४२४॥
अस्त्रियां पालकं क्लीबे विष्टरासनके उभे ।
स्त्रियां क्लीबे तु पीठं स्यादौशीरं शयनासने ॥४२५॥
द्वे एकोक्त्याथात्मदर्श आदर्शः पीतचम्प[2]कम् ।
दर्पणो मुकुरश्चाथ प्रदीपः कज्जलध्वजः ॥४२६॥
दोषापर्यायतिलको गृहपर्यायतो मणिः ।
स्नेहार्थाशनपर्यायो दशार्थादिन्धनार्थकः ॥४२७॥
दीपिका दीपमल्ली स्यादथ निर्मन्थनं च षण् ।
नीराजनं दीपपात्रैर्दीपस्थानं स्त्रियां पुनः ॥४२८॥

---

१ क्थिकाबिखट्वा[B] २ कः[KB]

पूषिः स्यादथ दीपाधो दण्डे सति शिखा[1]मरुः ।
दीपार्थाद्वृक्षपर्यायः कौमुदी तरुरित्यपि ॥ ४२९ ॥
अथ स्यात्कज्जलं क्लीबे दीपोच्छिष्टं तथाञ्जनम् ।
पुंसि स्यात्पक्षकोऽस्त्री स्या[2]द् व्यजनं तालवृन्तकम् ।४३०।
उत्क्षेपो बर्हिपिच्छोत्थे चामरे तु प्रकीर्णकः ।
अस्त्री त्रिषु[3]विचित्रं स्यान्मृगादित्वक्समुद्भवे ॥४३१॥
आलावर्त्तं जलक्लिन्नवस्त्रेण रचितेऽपि च ।
त्रिषु स्यात्कङ्कतः केशमार्जनश्च प्रसाधनः ॥ ४३२ ॥
[4]गिरियको गिरिगुडो बालक्रीडनको गुडः ।
गिरिपर्यायवचनः समौ कन्दुकगन्दुकौ ॥ ४३३ ॥
निश्चुङ्कुतं दन्तशानं पिष्टान्तो[5] धूलिगुच्छकः ।
कल्पद्रौ केशवकृते फलिते नामलुम्बकैः ॥ ४३४ ॥
तार्तीयो नरकाण्डोऽयं भूस्कन्धे सिद्धिमागतः ॥४३५॥

इति नरादिप्रकाण्डः ।

जमदग्निभरद्वाजविश्वामित्रात्रिगौतमाः ।
वसिष्ठकश्यपागस्त्या ऋषयो गोत्रकारकाः ॥१॥
गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च ।
ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात् ॥२॥

---

१ तरुःत्रिका[B] २ द्वीजनं वीजनीत्यपि[S] ३ धवित्रं[K] ? ४ गिरीयको[S] ५ तो[F]

म्रियमाणतया वापि सत्तया वानुवर्त्तनम् ।
एकस्य दृश्यते यत्र तद् गोत्रं तस्य कथ्यते ॥३॥
कुलं तु गोत्रं जननं क्लीबे स्त्री संततिः पुमान् ।
वंशोऽन्ववायः सन्तानो ऽन्वयो वर्णाचतुष्टयी ॥४॥
ब्राह्मणक्षत्रविट्शूद्राश्चातुर्वर्ण्यमिति स्मृतम् ।
स्यादामुष्यायणोऽमुष्यपुत्रश्च ब्राह्मणायनः ॥५॥
प्रख्यातनप्तृकश्चापि बीज्यः कुल्यः कुलोद्भवः ।
महाकुलः सभ्य आर्यः कुलीनः कुलसंमतः ॥६॥
गर्भाधानं पुंसवनं गर्भरक्षणमित्यपि ।
सीमन्तोन्नयनं जातकर्म मेधाजनिस्तथा ॥७॥
उत्थानं नामकरणमन्नप्राशनमित्युत ।
चूडाकर्मोपनयनं व्रतादेशनमेव च ॥८॥
समावर्त्तनमुद्वाहस्तत्रैवाग्नेः प्रधारणम् ।
एभिः स्मार्त्तैश्च संस्कारैः संस्कृतो ब्राह्मणो मतः॥६॥
भूमिपर्यायदेवार्थौ माठरः कठवाडवौ ।
सूत्रकण्ठो वेदगर्भः सावित्रोऽपि त्रयी तनुः ॥१०॥
स्यान्मुखक्ष्अग्रपर्यायजन्मपर्यायइत्ययम् ।
वर्णज्येष्ठः शमीगर्भो ब्रह्म षट्कर्मकृत्पुनः ॥११॥

ब्रह्मचारी गृही वानप्रस्थो भिक्षुक इत्यपि ।
अथ तत्र ब्रह्मचारी वर्णी मुख्याश्रमी वटुः ॥१२॥
उपनीतो माणवको मेखली वाजिनी[1] पुनः ।
तथा गुरुकुलावासी स च स्याद्द्विविधः क्रमात् ॥१३॥
यावज्जीवं व्रतपरो नैष्ठिको गृहसंमुखः ।
उपकुर्वाण इति चाथो वटूकरणं तु षण् ॥१४॥
नयनं नायनं नाय उपादथ द्विजायनम् ।
स्यात्सूत्रं ब्रह्मयज्ञाभ्यां पवित्रमुपवीतकम् ॥१५॥
द्वेवपर्यायलक्ष्माथ स्त्रियां मौञ्जी तु मेखला ।
ज्योर्णासूत्री कठत्त्रविशामेषां ह्यनुक्रमात् ॥१६॥
ऐणेयं रौरवं गव्यमजिनानि तथा पुनः ।
पालाशो वाथवा वैल्वो नैयग्रोधस्ततोऽपरः ॥१७॥
औदुम्बरः स आषाढो[2] वर्णः सोपि च वैणवः ।
रम्भाभंगो* गृहस्थानां व्रते स्याद्व्रतिनामपि ॥१८॥
आमन्त्रितादिमध्यान्तभवतीशब्दसंयुताम् ।
भिक्षां देहीत्यथ स्कन्धाद्वामात्कव्यवधिस्थिते ॥१९॥
हृत्पृष्ठवंशगे यज्ञोपवीती स्यादतः पुमान् ।
सव्यश्चा[3]प्यपसव्यस्तु प्राचीनावीत इत्यपि ॥२०॥

---

१ घाजिनी[K] २ वैणः[B] ३ था [B]

* राम्भोदण्डो इति स्यात् ।

कण्ठलम्बिनि नीवीती प्रवीती पृष्ठलम्बिनि ।
अथाञ्जलिर्वेदपाठे पुंसि ब्रह्माञ्जलिः पुनः ॥२१॥
ब्रह्मारण्यं पाठभूमिः साङ्गवाक्ये परायणम् ।
परायणं च साकल्यमथापि ब्रह्मबिन्दवः ॥२२॥
वेदाध्ययनकाले ये विप्रुषो मुखनिःसृताः ।
स्वाध्यायस्तु जपः पाठो धर्मभाणक इत्यपि ॥२३॥
वेदमाता तु गायत्री सावित्री त्रिपदा च सा ।
वैश्वामित्री व्याहृतयो महाव्याहृतयः स्त्रियाम् ॥२४॥
वरिवस्या तु शुश्रूषा परिचर्याप्युपासनम् ।
पर्युपाभ्यां समुपाभ्यामन्वाभ्यामासनं च षण् ॥२५॥
उपस्पर्शस्त्वाचमनमाचामोथाप्यभाषणम् ।
वाचोयमश्च यमनं मौनं स्यादप्यथ स्त्रियौ ॥२६॥
[1]आनुपूर्व्यावृता चाथ पर्यायोऽनुक्रमोपि च ।
परिपाटी स्त्रियां चाथ[2]पर्यायः स्यादुपात्ययः ॥२७॥
अतिपातोऽथ नियमस्त्वस्त्रियां व्रतमित्यपि ।
पुण्यकं तूपवासाद्यमुपवस्तमुपोषणम् ॥२८॥
[3]औपवस्तं तूपवस्तमस्त्रियामुपवासकः ।
उपोषितं चोपवस्ताऽनशनानशनं[4] पुनः ॥२९॥

---

१ आनुपूर्व्यां वावृताप्य[B] २ पर्ययः[S] ३ औपवस्त्रं चोपवस्त्रं[K] ४ ने[B]

रोगक्रोधभयैर्यत्तदन्नत्यागाच्च लङ्घनम् ।
द्व्यन्तरे द्व्यन्तरे[1] भुक्तं तत्तु षष्ठात्मकालकम् ॥३०॥
अर्द्धाशनं चार्द्धशनं विज्ञेयं चार्द्ध[2]भोजने ।
नित्यकर्मसमाहारनैष्ठुर्ये चैक[3]चित्तता ॥३१॥
मणिबन्धात्पुरो ब्राह्मं मानुषं करभान्तरा ।
अङ्गुल्यग्रेषु दैवं स्यात्तर्जनीमध्यमान्तरा ॥३२॥
देव्यामध्यानामिकयोर्मूलमाग्नेयमित्यपि ।
अङ्गुष्ठतर्जनीमूले पित्र्यं तीर्थानि वै करे ॥३३॥
उपाकर्मोपाकरणे स्यात्स्त्रियामप्युपाकृतिः ।
सर्वैनसामपध्वंशि जप्यमस्त्र्यघमर्षणम् ॥३४॥
वाच्यलिङ्गं [4]तद्वति षण् चरितं शीलमस्त्रियाम् ।
ब्रह्मासनं ध्यानयोगासने कल्पो विधिः क्रमः ॥३५॥
मुख्यः स्यात्प्रथमः कल्पो[5] ह्यनुकल्पस्ततोऽधमः ।
नमस्काराभिवादौ च पादग्रहणमित्यपि ॥३६॥
अथ यस्तूपकुर्वाणः स्नाती स्नातः स आप्लुतः ।
समावृत्तो गृहमुखो लब्धानुज्ञो गुरोः कुलात् ॥३७॥
व्रती यावद्विवाहं स्यादुद्व्योर्वाहः परिग्रहः ।
पाणिपर्यायग्रहणं पीडापर्यायकं पुनः ॥३८॥

---

१ भुक्तमाहुः[B] २ भोजनम्[B] ३ टङ्कृता[BK] ४ च तद्वत् षण्[B] ५ नुकल्पस्तु[B]

[1]परिणायः परिणयो वाधुक्यं दारकर्म च ।
तस्मिन्काले गृहीतोग्निरावसथ्य उपासनः ॥३९॥
नवोढावस्त्रं[2] वाधूयं षणानन्दपटस्त्रिषु ।
परिगृह्य व्रती स्नातो गृहान्मेध्याश्रमी स्थितः ॥४०॥
संस्कारकर्त्ता स गुरुः श्रोत्रियश्छान्दसौ समौ ।
[3]श्रोत्रं क्लीब उपाध्यायोऽध्यापको ब्राह्मणायनः ॥४१॥
यजनं याजनं पाठोऽध्यापनं च प्रतिग्रहः ।
दानं चेति च षड्यत्र सा स्यादाजीविका स्त्रियाम् ॥४२॥
वार्त्ता वृत्तिः पुनः क्लीबे वर्त्तनं जीवनं पुनः ।
[4]पुंस्याजीवोऽपि यद्वेद्यगाम्येषां त्रिष्वितः पुनः ॥४३॥
शौनामृते मृतं तद्वद्दतं चाप्यमृतं क्रमात् ।
सेवाकृषिर्याचितं चायाचितं तु शिलोञ्छके ॥४४॥
प्रतिग्रहश्च साधुभ्यः क्रमादेषां च लक्षणम् ।
त्यक्तस्वस्वामिकक्रय्यकणावचय आपणात् ॥४५॥
उञ्छोऽस्त्रियां तथा क्षेत्रात् कणिशावचयः पुनः ।
स्यादस्त्रियां[5]शिलः शैलः क्लीबे याचितमित्यपि ॥४६॥
अनूचानः प्रवचने सांगे धीती गुरोश्च[6] यः ।
विद्वान्विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः ॥४७॥

१ परीणायः B २ वस्त्र B ३ श्रौत्रं ४ श्लोकार्द्धंनास्ति BC पुस्तकयोः ५ शिकः ६ स्तु B

धीरो मनीषी ज्ञः प्राज्ञः संख्यावान्पण्डितः कविः ।
धीमान्सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः ॥४८॥
मेधः कालाक्षरी[1]विप्रो मतिमाञ्शिक्षिताक्षरः ।
[2]वृद्धो विदो विदानश्च प्रेक्षाकार्यपि शास्त्रवित् ॥४९॥
दूरदृग्विदथः सूरी प्रज्ञालः प्रज्ञिलः पुनः ।
स्याद्दीर्घदूरयोर्दर्शी कृतकर्मा[3] विशारदः ॥५०॥
वैज्ञानिकः कृतमुखो मेधावी विदुरित्यपि ।
कुशाग्रीयमतिर्दक्षो विज्ञो विज्ञातशिक्षितौ ॥५१॥
छेको विदग्धो विदुरो निष्णातः कृतधीरपि ।
[4]निर्दिष्टो निपुणो बोद्धा सुमतिः कुशलोऽपि च ॥५२॥
प्रेक्षावान्विबुधश्चोग्रः[5] प्रौढः प्राज्ञो[6] विदन्नथ ।
छात्रान्तेवासिनौ शिष्ये शैक्षः प्राथमकल्पिकः ॥५३॥
नवीनशिष्यपर्यायस्त्रिष्वेते विद्वदादिमाः ।
गुणनं शीलनं घोषः स्वाध्यायो धर्म[7]भाणकः ॥५४॥
पाठोऽपि च जपोऽभ्यासो वेदेंगादौ पुनः पुनः ।
एकब्रह्मव्रताचारा मिथः स ब्रह्मचारिणः ॥५५॥
सतीर्थाश्चैकगुरवस्ते सहाध्यायिनस्त्रिषु ।
शेषमक्षरमादाय प्रतिश्लोकं क्रमेण तु ॥५६॥

१ विज्ञो[B] २ वृद्धो इत्यादि शिक्षितौपर्यन्तं सार्द्धश्लोकद्वयं नास्ति[K] पुस्तके ३ कृतीकर्मे[B] नेदिष्ठो[B] ५ अ[B] ६ प्रज्ञो[BKS] ७ भावकः[B]

अन्योन्यं श्लोकपठनं प्रतिमाला स्त्रियां च सा ।
यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः ॥५७॥
विष्णुपर्यायवचनो मन्युस्तोमश्च संस्तरः ।
प्रयाग आहवश्चैव मिष्टश्चाभिषवो हवः ॥५८॥
इज्या स्त्रियां पुंसि मेनो धर्मो ना सत्रमस्त्रियाम् ।
बर्हिः क्लीबे वितानं स्यादस्त्रियां च धृतिः स्त्रियाम् ॥५९॥
इष्टिः संस्था पुमान्मेधः सवनं षण् भिदस्य च ।
राजसूयं[1] वाजपेयं पुंसि क्लीबेऽथ तस्य च ॥६०॥
आरंभस्यैव नियमे दीक्षा तु व्रतसंयमः ।
ऋग्विद्धोता यजुर्वित्स्यादध्वर्युः सामगः पुनः ॥६१॥
उद्गाता स्या त्सप्तपञ्चचतुर्भि[2]स्तद्गुणाः क्रमात् ।
यष्टा तु यजमानः स्यादादेष्टा त्वध्वरे व्रती ॥६२॥
इज्याशीलो यायजूको यज्वा तु विधिनेष्टवान् ।
अप्यासुतीवलोप्यग्निं चितवानग्निचित् पुमान् ॥६३॥
सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः ।
सौमिकी दीक्षणीयेष्टिः सोमस्याभिषवे कृते ॥६४
स्त्री सुत्या सवनं क्लीबे स्यात्पुंस्यभिषवः पुनः ।
आतिथ्याद्या इष्टयः स्युर्यज्ञान्तोऽवभृथः पुमान् ॥६५॥

---

१ यो वाजपेयः[B] २ स्तद्गणाः[B]

योऽभिमन्त्र्य निहन्येत स स्यात्पशुरुपाकृतः ।
परंपराकं[1]शसनं प्रोक्षणं च मखे वधः ॥६६॥
प्रमीत उपसंपन्न [2]प्रोक्षितौ वाच्यलिङ्गकाः ।
स्युरथापि च सांनाय्यं हविष्यं होत्रकं हविः ॥६७॥
अग्नौ हुतं त्रिषु द्रव्ये त्यक्तं चापि वषट्कृतम् ।
पारंपर्योपदेशे स्यादैतिह्यमिति ह्यव्ययम् ॥६८॥
आद्यं ज्ञानमुपज्ञा स्त्री ज्ञात्वारम्भ उपक्रमः ।
दर्शश्च पौर्णमासश्च यागौ पक्षान्तयोः क्रमात् ॥६९॥
स्त्री[3]समज्या [4]समाज्या स्यात्पर्षत्परिषदौ न ना ।
गोष्ठी सभा समित्संसन्न नास्थानं सदः[5]सदाः ॥७०॥
[6]आस्थानी सदसी क्लीबे स्त्रियां च समितिः स्त्रियाम् ।
सभासदः सभास्ताराः सदस्या विधिदर्शिनः ॥७१॥
सामाजिकाः प्राश्निकाश्च सभ्याः पारिषदा अपि ।
[7]परिषद्वलाः परिषदाः पर्षद्याः परिषद्वलाः ॥७२॥
परिषद्याः पार्षदाश्च पार्षद्याः पर्षदा अपि ।
तेऽपि स्युः पारिषदकः अथ स्युः प्राग्घविर्गृहात् ॥७३॥
प्राग्वंशः स्याद्यत्र तत्र सम्यग्यात्रा दिवौकसाम् ।
देवद्रोणी [8]च सैवोक्ता कुंवा[9]सुगहना वृतिः ॥७४॥

---

१ शमनं[B] २ ता [KC] ३ समज्वा[B] ४ समज्या[B] ५ सदा[B] ६ आस्थान[B] ७ षं
८ तु[B] ९ तु[BKS]

वेदिः परिष्कृता [1]भूमिश्चतुष्कं च चतुष्किका ।
स्त्रियामपि च वेदी स्यात्स्थ[2]ण्डिलं चत्वरं समे ॥७५॥
यज्ञार्थात्सम्भपर्यायो यूपोऽस्त्री स्यादथास्त्रियाम् ।
चषालो यूपकटके यूपकर्णे घृतावनिः ॥७६॥
यूपाग्रभागे तर्मा ऽस्त्री मन्थने[3]धोरणिर्द्वयोः ।
अरणी[4]च स्त्रियां तत्र चात्र मन्थप्रमन्थकाः ॥७७॥
भेदाः स्युरस्या अङ्गानां प्रणीतस्तु सुसंस्कृतः ।
महावीरः समूह्यः स्यात्परिचाय्योपचाय्यकौ ॥७८॥
[5]प्रयोजकोप्यथानाय्यो गार्हपत्यात्प्रणीयते ।
यः स्यात्सदक्षिणाग्निर्हि स्थानभेदात्तु ते त्रयः ॥७९॥
दक्षिणाग्निर्गार्हपत्याहवनीयाश्च तेऽर्द्धकाः ।
पञ्च सभ्यावसथ्याभ्यां पूर्णाधानं तदुच्यते ॥८०॥
अग्नित्रयं त्रयी त्रेता होमभस्म तु वैष्टुभम् ।
रक्षा भूतिर्विभूति स्त्री क्लीबे भसितभस्मके ॥८१॥
उच्छिष्टमग्निपर्य्यायात् क्षारो ना शोषकं त्रिषु ।
भाले तिर्यग्गतास्तिस्रो भस्मरेखास्त्रिपुण्ड्रकम् ॥८२॥
होमधूमस्तु निगणो हवनी होमकुण्डकम् ।
कालीमसी ध्रुवा धूम्रा लोहिता च स्फुलिङ्गिनी ॥८३॥

---

१ परिकृता[B] २ स्स्थाण्डिलं ३ धा[B] ४ चा[B] ५ प्रयोजकेत्यादि तेर्धका पर्यन्तं सार्द्धपद्यं[K] पुस्तके नास्ति ।

तथा विश्वरुचिश्चैव सप्तविश्वा* हविर्भुजः ।
अथ स्युर्यज्ञपात्राणि स्रुवः पुंसि च वा स्त्रियाम् ॥८४॥
स्त्रियां स्रुः स्रूरथापि स्यादुपभृत्स्यात्स्त्रियां जुहूः ।
जुहुः पुमान् स्रुक् स्त्रियां स्यादधरोत्तरणो क्रमात् ॥८५॥
ध्रुवा सा यज्ञकर्मार्थं[1] यस्यामाज्यं निधीयते ।
अमिक्षा तु स्मृतामीक्षा क्षीरेण[2] समितं दधि ॥८६॥
क्षीरं[3]शरः पयस्या स्यान्मस्तुन्यपि तु[4] वाजिनम् ।
इष्टं तु[5]कार्त्तवं कर्म वापीकूपादिपूर्तकम् ॥८७॥
इष्टापूर्त्तं तदेकोक्तथा हव्यपाके चरुः पुमान् ।
परमान्नं पायसोऽस्त्री स्यात् क्षीरे[6]ऽप्यपि वाच्यवत् ॥८८॥
ऋक् सामिधेनी धाय्या सा या स्यादग्निसमिन्धने ।
गायत्र्युष्णिगनुष्टुप् च बृहती पंक्तिरित्यपि ॥८९॥
त्रिष्टुप् च जगती चातिजगत्यपि च शक्करी ।
अष्टिर्धृतिर्द्वितीयाः स्युरतिपूर्वा तथा कृतिः ॥९०॥
सा तु प्राविसमत्युद्भयः स्युश्छन्दांस्येकविंशतिः ।
स्त्रियां पङ्क्तिः सैव विराट्[7]त्रिष्टुप्तृष्टुबुभे समे ॥९१॥
वृत्तं समं चार्धसमं विषमं त्रिविधं च तत् ।
गणबद्धमिदं छन्द आर्याद्यं मात्रिकं च तत् ॥९२॥

१ सर्वयज्ञार्थं [B] २ मिलितं [KBS] ३ शरा[K] ४ च [B] ५ कतियं [B] ६ पि च [KC]
त्रिष्टुप्त्रिष्टुबुभे[KC]

* जिह्वा इति स्यात् ।

हव्यं कव्यं देवपितृदेयमन्नादिकं क्रमात् ।
आज्ये तु दधिसंपृक्ते पृषदाज्यं[1] पृषन्तकः ॥९३॥
दध्ना तु मधुसंपृक्तं मधुपर्कोऽस्त्रियामथ ।
हवित्री स्त्री होमकुण्डं बर्हिर्मुष्टिस्तु विष्टरः ॥९४॥
अमृतं यज्ञशेषे स्याद्विघसो भुक्तशेषके ।
राद्धं सिद्धमथो चारुव्रता मासोपवासिनी ॥९५॥
अग्निहोत्र्यग्निचित्साग्निराहिताग्निरथापि च ।
अग्न्याधानमग्निहोत्रमग्निरक्षणमित्यपि ॥९६॥
[2]घर्माग्निस्तु महाज्वालो महावीरः[3]प्रवर्ग्यवत् ।
वेदपाठश्च होमश्चातिथ्यर्चा पितृतर्पणम् ॥९७॥
भूतादिभ्योन्नादिदे[4]ये स्त्रीपुंसोर्बलिरित्यपि ।
ब्रह्मदेवनरपितृभूतयज्ञा अमी क्रमात् ॥९८॥
चत्वारस्ते पाकयज्ञा ब्रह्मयज्ञोऽत्र पञ्चमः ।
त्यागो विहापितं दानमुत्सर्जनविसर्जने ॥९९॥
विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ।
प्रादेशनं निर्वपणमपवर्जनमंहतिः ॥१००॥
प्रदेशनं विश्रणनमतिसर्जनमित्यपि ।
विसर्जनं च पुंसि स्यादुत्सर्गः स्पर्श इत्यथ

---

१ पृषातकः[BKS] २ धर्मा[B] ३ र्ग्यं[B] ४ यं[B]

तुला हिरण्यगर्भश्च ब्रह्माण्डं कल्पपादयः ।
गोसहस्रं स्वर्णकामधेनुः स्वर्णाश्व एव च ॥१०२॥
हेमहस्ति*रथः पञ्चलाङ्गलं स्वर्णमेदिनी ।
विश्वचक्रं कल्पलता सप्तसागरकं तथा ॥१०३॥
रत्नं धेनुर्महाभूतघटः षोडश उच्यते ।
महादानानि चान्यानि दश स्युः कनकं हयः ॥१०४॥
तिला नागस्तथा दासी रथः पृथ्वी गृहा अपि ।
कन्या धेनुश्च कपिला दानान्येतानि वै दश ॥१०५॥
हिंसाकर्माभिचारः स्याद्यज्ञार्हं कर्म [1]यज्ञिकम् ।
मृतार्थं यदहर्दानमूर्ध्वदैहिकमित्यपि ॥१०६॥
एकादश द्वादशाहकृत्ये तु स्यात् क्रिया स्त्रियाम् ।
अपिनूतनपर्यायश्राद्धं कारटमस्त्रियाम् ॥१०७॥
पितृपङ्क्तिविधानं स्यात्सपिण्डीकरणं च षण् ।
पितृदाने निवापः स्यान्निर्वापः [2]श्राद्धमित्यपि ॥१०८॥
स्वधाऽव्ययमव्ययं स्यात्पितृदानविधावथ ।
देवदानेऽपि स्वाहैवमथ श्राद्धादिकं च यत् ॥१०९॥
पितृयज्ञो मासि मासि तदनुश्राद्धमस्त्रियाम् ।
अन्वाहार्यमष्टमेऽह्नो मुहूर्त्तः कुतपोऽस्त्रियाम् ॥११०॥

---

१ यज्ञियम् २ श्राद्धकर्मणि[B]

* रत्नी इति स्यात्

पर्येषणा परीष्टिः स्यादन्वेषणा गवेषणा ।
याचनाध्येषणा याञ्चा परीष्टिरपि चार्थना ॥१११॥
अर्घार्हं यत्तदर्घ्यं स्यात्पाद्यं पादार्हवारिणि ।
आतिथ्यं स्यादातिथेयं तत्र साध्वातिथेयकम् ॥११२॥
प्राघूर्णकः प्राघुणकः[1]प्राघुणो गाथ इत्ययम् ।
गृह्यागतः स्यादतिथिर्द्वयोर्देशिक इत्यपि ॥११३॥
आगन्तुको नास्त्र्य[2]तिथिः समीची वन्दना स्त्रियौ ।
स तु त्रिषूपसंग्राह्यो योभिवाद्यो यथाविधि ॥११४॥
पादपर्यायग्रहणमुपसंग्रह इत्यपि ।
पूजा नमस्यापचितिः सपर्याभ्यर्हणा स्त्रियाम् ॥११५॥
वरिवस्या तु शुश्रूषा परिचर्याप्युपासना[3] ।
अन्वासनाप्युपास्तिः स्त्री क्लीबे शुश्रूषणं पुनः ॥११६॥
कौशली कुशलप्रश्ने व्रज्याटाट्या सरापि च ।
[4]साचेर्या मार्गपर्यायस्थितिः पर्यटनं समे ॥११७॥
नियोगः केतनं श्राद्धे देवार्चादौ तु पञ्चधा ।
गन्धपुष्पे धूपदीपौ नैवेद्यमिति सत्क्रिया ॥११८॥
अर्घपाद्या[5]चमस्नानमधुपर्काधिकैश्च तैः ।
दशधाथो षोडशधा[6]सासनस्वागताम्बरैः ॥११९॥

---

१ प्राहुणो[B] २ तिथी[BKS] ३ सनम्[B] ४ चर्या[B] ५ चमन[B] स्वासन[B]

भूषाचन्दनसंमिश्रैः सोत्तराचमनी[1]यकैः ।
ध्यानादिकक्रिया तीर्था निदिध्या सा तु सास्थिरा ॥१२०॥
निदिध्यासनमप्येतन्मननं[2]त्वात्मचिन्त[3]नम् ।
ऋषयो मन्त्रद्रष्टार ऋषयः संशितव्रताः ॥१२१॥
शापास्त्राः सत्यवचसो व्यासाद्यास्ते महर्षयः ।
देवर्षयः कचाद्याः स्यु[4]र्भल्लाद्यास्तु महर्षयः ॥१२२॥
ऋतुपर्णादयो राजर्षयः काण्डर्षयस्त्वमी ।
जैमिन्याद्या नारदस्तु कपिवक्त्रो विधातृभूः ॥१२३॥
स्याद्ब्रह्मादेवपर्यायपिशुनः कलिकारकः ।
देवब्रह्मा देवलः स्या[5]द्दुर्वासास्तु कुशारणिः ॥१२४॥
प्राचेतसस्तु वाल्मीकिः कविज्येष्ठो वशः कविः ।
कुशी च मैत्रावरुणो वाल्मीको वल्मिकोऽपि च ॥१२५॥
वल्मीकी[6]वाल्मिकी चाथ[7]स स्यात्पाराशरी पुनः ।
कृष्णद्वैपायनो वेदव्यासः स्यात्सत्व[8]भारतः ॥१२६॥
व्यासः कृष्णः सात्यवतः कानीनो बादरायणः ।
पाराशरो माठरोऽपि पाराशर्यस्ततः पुनः ॥१२७॥
द्वैपायनोथास्य माता वासवी सत्यवत्यपि ।
योजनागन्धपर्याया मत्स्योत्था गन्धकाल्यपि ॥१२८॥

---

१ यके^B २ चात्म^B ३ ना^B ४ र्भे ला^B ५ द्दू^B ६ कोव^B ७ स्याच्च^B
८ भारतम्^B

वासवी मत्स्यगन्धापि [1]दाशेयी शंतनुप्रिया ।
माता विचित्रवीर्यस्य पुनश्चित्राङ्गदस्य च ॥१२६॥
वसिष्ठोऽरुन्धतीनाथपर्या[2]य्यापव इत्यपि ।
समैत्रावरुणोऽपि स्यादक्षमाला त्वरुन्धती ॥१३०॥
त्रिशङ्कुयाजी गाधेयो विश्वामित्रश्च कौशिकः ।
वैश्वामित्रो याज्ञवल्क्यो योगेशो ब्रह्मरात्रिकः ॥१३१॥
दधीचिश्च दधीचोऽपि वदान्यश्रेष्ठ इत्युत ।
यायावरो जरत्कारुर्देवी च मनसा प्रिया ॥१३२॥
जरत्कारुस्तयोः पुत्र आस्तीकश्चास्तिकोऽपि च ।
गौतमस्तु शतानन्दो [3]मातुरीयस्तु पाणिनिः ॥१३३॥
शालातुरीयो दाक्षेयः शालंकिः पाणिनाहिकौ ।
[4]शिवपर्यायभक्तोऽथ गोनर्दीयः पतञ्जलिः ॥१३४॥
कात्यायनो वररुचिः कायोऽपि च पुनर्वसुः ।
मेधापर्यायजिच्चाथ व्याडिर्विन्ध्यनिवास्यपि ॥१३५॥
नन्दिनीपुत्रपर्यायः कणादः काश्यपोऽपि च ।
स्फोटायनस्तु कक्षीवान्पालकाप्ये करेणुभूः ॥१३६॥
रुचिरातनयार्थः स्याद्गुणवत्यपि [5]पालकी ।
वात्स्यायनो मल्लनागः कौटिल्यश्चणकात्मजः ॥१३७॥

---

१ दासेयी$^{KC}$ २ यधव इत्यपि$^{B}$ ३ मातुलान्त$^{B}$ ४ शिषं$^{K}$ ५ पालिका$^{B}$ पालका$^{K}$

द्राविलः पक्षिलः स्वामी विष्णुगुप्तोङ्गुलोपि च ।
धन्वन्तरिर्दिवोदासः काशिराजः सुधोद्भवः ॥१३८॥
ब्रह्मीभूतो द्वैतवादी शंकराचार्य इत्यपि ।
उपवर्षो हलभूतिः कृतकोटि[1]रयान्वितः ॥१३९॥
चूर्णिकृद्भाष्यकारः स्याद्भर्तृहरिर्भर्तृहरिः समौ ।
रघुकारः कालिदासो मेधारुद्रस्तु कोटिकृत् ॥१४०॥
गुणाढ्योप्यथ बाणः स्याद्वक्रगद्यनिबन्धकृत् ।
भारविः शत्रुलुंपः स्याद्भवभूतिस्तु विश्रुतः ॥१४१॥
भूमिपर्यायगर्भार्थोप्यथ वैयासकिः पुनः ।
वेदान्ती ब्रह्मवादी स्यादथ मीमांसकः स च ॥१४२॥
[2]जैमिनीयोप्यथौलूक्यः स च वैशेषिकोप्यथ ।
शम्बुकश्चापि शम्बूक उभौ शूद्रसुतौ[3]समौ ॥१४३॥
सौगतः शून्यवादी स्याद्वादिको[4]द्वयवाद्यपि ।
अर्हतोप्याक्षपादः स्याद्योगो नैयायिको[5]ऽपि च ॥१४४॥
पातञ्जलो यौगिकः स्यात्कापिलः सांख्य इत्यपि ।
लौकायतिकचार्वाक बार्हस्पत्याश्च[6] नास्तिकाः ॥१४५॥
पाश्वार्थिकः पाशुपतः शैवश्चापि महाऽव्रतः[7] ।
कापालिकोऽथ वामी स्याद्वामिकोऽथापि[8]लौकिकः ।१४६।

१ रयाचितः[B] २ तौतानिको[B] ३ मतौ[B] ४ वादवाद्यपि[B] ५ प्यथ[B] ६ त्याद्या[B]
७ वृती [BKS] ८ कौलिकः[B]

आम्नायी सामयी माध्वो[1] वैष्णवः पञ्चरात्रिकः ।
रक्ताम्बरो भदन्तोऽपि शाक्यभिक्षुश्च वन्दकः ॥१४७॥
श्वेताम्बरः श्वेतभिक्षुः क्षपण[2]स्तु दिगम्बरः ।
नग्नाढश्रमणा[3]ह्लीक निर्ग्रन्था जीवजीवकाः ॥१४८॥
चेलुकश्चीवरी भिक्षुर्महोपासकमेलिकौ ।
वन्यश्चैत्यः श्रामणेरः स च प्रव्रजितः पुनः ॥१४९॥
तच्छिष्याः श्रावकाः[4]खङ्गाः[5]सुदन्ता एकचारिणः ।
बुद्धाः स्वयंभुवस्तेषां भेदाः खरतरादयः ॥१५०॥
धर्मध्वजी लिङ्गवृत्तिः[6]पाखण्डः सर्वलिङ्गिनि ।
[7]उरःकटः पञ्चवटो[8]जोटिङ्गश्च महाव्रती ॥१५१॥
कुहना लोभान्मिथ्येर्या सा स्यादंपथकल्पना ।
क्षतव्रतोवकीर्णी स्याद्व्रात्यः संस्कारवर्जितः ॥१५२॥
जटालजटिलौ तुल्यावथ कर्पटिकार्पटी ।
अलाभात्तु स्त्रियस्त्यागस्तदश्वब्रह्मचर्यकम् ॥१५३॥
यद्व्रतं यमिनां गुप्तं खञ्जरीटरतं हि तत् ।
शिश्विदानः कृष्णकर्मा ब्रह्मबन्धुर्द्विजाधमः ॥१५४॥
नष्टाग्निर्वीरहा जातिमात्रजीवी द्विजब्रुवः ।
अजपस्त्वसदध्येता वेदहीनो निराकृतिः ॥१५५॥

---

१ मध्वोवैB माध्ववैK २ श्चB ३ ह्रीकK ४ षङ्गाः (षङ्गाः) B ५ सुंदताKC
६ पाषण्डः:B ७ उरस्कटः:B ८ झोटिङ्गBKS

[1]वान्ताशी भोजनार्थं यो गोत्रादि वदति स्वकम्।
उच्छिष्टभोजनो देवनैवेद्यकृतभोजनः ॥१५६॥
शाखारण्डः स्वशाखीयकर्मलुप्तो [2]न्यकर्मकृत् ।
शाखा[3]रण्डोप्यन्यशाखा[4]पाठके स्वीयवर्जके ॥१५७॥
कनिष्ठस्तु कृताधानो न ज्येष्ठे[5]ह्यग्निहोत्रिणि ।
पर्याधाता कनिष्ठः स्याज्ज्येष्ठः पर्याहितः स च[6] ॥१५८॥
कनिष्ठः सोमयाजी चेन्न ज्येष्ठः सोमयागकृत् ।
परियष्टा कनिष्ठः स्यात्परीष्टो ज्येष्ठ इत्यपि ॥१५९
विवाहरहिते ज्येष्ठे कनिष्ठो दारसंग्रही ।
परिवेत्ता परिवेदी परिवित्तिस्तु पूर्वजः ॥१६०॥
परिवित्ता सुतस्तस्य[7]सा स्त्री तु परिवेदिनी ।
पूर्वोढा त्वधिविन्ना [8]स्यात् पश्चादूढाधिवेदिका ॥१६१॥
शस्त्राजीवः[9]काण्डपृष्ठो गुरुहा नरकीलकः ।
मलोदेवादिपूजायामश्राद्धोऽथ मलिम्लुचः ॥१६२॥
पञ्चयज्ञपरिभ्रष्टो निषिद्धैकरुचिः खरुः ।
सुप्ते यस्मिन्नुदेत्यर्कोऽत्यस्तमेति क्रमेण तौ ॥१६३॥
अभ्युदिताभिनि[10]र्मुक्तौ वीरोज्झो न जुहोति यः ।
अग्निहोत्रच्छलाद्याञ्चापरो वीरोपजीवकः ॥१६४॥

---

१ वार्ताशी[B] २ त्पकर्म[KC] ३ द[B] ४ वर्जके स्वीयपाठके[B] ५ स्य[B] त्य[B] ६ पुनः[B]
७ यातु स्त्री[B] ८ त्ता[B] ९ वे[B] १० मुक्तौ[B]

वीरविप्लावको जुह्वद्धनैः शूद्रोपपादितैः ।
वैडालव्रतिकः सर्वाभिसंधी छद्मतापसः ॥१६५॥
त्रिणाचिकेतस्त्रियोग्निं चितवांस्त्रिमधुश्च यः ।
कर्मविद्यायोनिशुद्धा यस्य तूभयपक्षजाः ॥१६६॥
बहुदक्षिणयज्वानः सज्ञेयस्त्रिसुपर्णकः ।
वैखानसस्तु स्याद्वानप्रस्थो वन्यान्नभोजनः ॥१६७॥
वन्यैर्गृहस्थधर्माथ तपस्या नियमस्थितिः ।
व्रतादानं परिव्रज्या संन्यासोप्यथ योगभित्[1] ॥१६८॥
अहिंसासूनृतास्तेयब्रह्माकिंचनता यमाः ।
नियमाः शौचसंतोषौ स्वाध्यायतपसी अपि ॥१६९॥
देवताप्रणिधानं च करणं पुनरासनम् ।
प्राणयामः प्राणयमः श्वासप्रश्वासरोधनम् ॥१७०॥
प्रत्याहारस्त्विन्द्रियाणां विषयेभ्यः समाहृतिः ।
धारणा स्त्री क्वचिद्ध्येये चित्तस्य स्थिरबन्धनम् ॥१७१॥
ध्यानं तु विषये तस्मिन्नेकप्रत्ययसंततिः ।
समाधि[2] स्त्री तदेवार्थमात्राभासनरूपकम् ॥१७२॥
एवं योगो यमाद्यङ्गैरष्टभिः संमतोऽष्टधा ।
एषामभ्यासतो योगी भिक्षुः [3]सांन्यासिको यतिः ॥१७३॥

---

१ वित् [B] २ धिः[KC] ३ सं [BKS]

परिव्राडपि कर्मन्दी तापसो मस्करी यती ।
पाराशरी रक्तवस्त्रपर्यायः परिकाङ्क्ष्यपि[1] ॥१७४॥
वाचंयमो मुनिरपि द्वयोरेव मुनी स्त्रियाम् ।
स्यात्परिवाजकश्चाथ शेते यः स्थण्डिले व्रतात् ॥१७५॥
स्थाण्डिल्यः[2] स्थण्डिलेशायी स्थण्डिलेशयइत्यपि ।
तपःक्लेशसहो दान्तः क्षान्तः शान्तो[3] जितेन्द्रियः॥१७६॥
तपस्या तु तपो जप्यं जाप्यं जापो[4] जपः पुनः ।
कमण्डलुश्चैत्यमुखः करकः कुण्डकः[5] स्त्रियाम् ॥१७७॥
अत्यासने ब्रुसीब्रुष्यौ वृषी वृषिः स्त्रियामिमाः ।
त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकः ॥१७८॥
बलतुर्याश्चतुर्भद्रमथ देवत्वमित्यपि ।
देवसायुज्यमपि च देवभूयादिकं पुनः ॥१७९॥
प्रयोज्यमेवं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ।
ब्रह्मभूयं स्त्रियां मुक्तिः पुंसि मोक्षापवर्गकौ ॥१८०॥
क्लीबे कैवल्यनिर्वाणश्रेयो निःश्रेयसामृते ।
संन्यासवत्यनशनव्रते प्रायस्तु न स्त्रियाम् ॥१८१॥
कल्पद्रौ केशवकृते फलिते नामसंचयैः ।
भूस्कन्धे ब्रह्मकाण्डोऽयं तुर्यः सिद्धिमुपागतः ॥१८२॥

इत्यृषिगोत्रब्रह्मप्रकाण्डः ।

---

१ पार$^{B}$ २ ल्यः $^{BKS}$ ३ श्रान्तो $^{B}$ ४ जायो $^{B}$ ५ का$^{B}$

राजन्यो बाहुपर्यायजन्मार्थः क्षत्रियो विराट् ।
राड्राजा स्यादपि[1] क्षत्रं राज्ञि[2] भूपार्थपार्थिवौ ॥१॥
भूपर्यायपतिक्षिद्भृत् [3]पार्थवो भूपुरंदरः ।
भूमिप्रजामनुष्याणां पर्यायेभ्यो धनस्य च ॥२॥
नेतृपेशपतीनां च पालार्थानां च वाचकः ।
मूर्द्धाभिषिक्तः पृथिवी-शक्रपर्याय इत्यपि ॥३॥
मण्डलेश्वरपर्यायः [4]सामन्तोथाप्यधीश्वरः ।
प्रणताशेषसामन्तश्चक्रवर्ती भयापहः ॥४॥
एकजन्मा सार्वभौमो[5]ऽप्यतोऽन्ये मध्यमवर्त्तिनः ।
सत्वप्रतिरथो यस्य नास्ति प्रतिरथो युधि ॥५॥
येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः ।
शास्ति यश्चाज्ञया राज्ञः स सम्राडथ राजकम् ॥६॥
राजन्यकं च नृपतिः[6] क्षत्रमस्त्रीगणे क्रमात् ।
महामात्रो धी सचिवो मन्त्री सचिव इत्यपि ॥७॥
स च ग्रन्थिहरोऽमात्यः स्यात्प्रधानं च न स्त्रियः ।
अमात्याः[7] कर्मसचिवास्तत्तत्कर्माधिकारिणः ॥८॥
पुरोहितः पुरोधाः स्यात्स्थेयोऽथ द्वारपालके ।
दौवारिकः प्रतीहारो द्वाःस्थितो वेत्रधारकः ॥९॥

---

१ दथ[B] २ राट् पार्थ[B] ३ पार्थिवो[B] ४ सामन्तः स्याद[B] ५ प्यतोन्ये[B]
६ नृपतिक्षत्रियाणां गणे[B] ७ अमात्यः[B]

दर्शको दर्शितद्वाः स्याद् द्वाःस्थो[1] द्वास्स्थितदर्शकः ।
स च द्वाःस्थितदर्शी स्यात् प्रतिहार उदास्थितः ॥१०॥
उपस्थितः प्रतीहारी प्रतिहार्यपि वा पुनः ।
व्यवहारद्रष्टरि स्यात्प्राड्विवाकोऽक्षदर्शकः ॥११॥
अथापि स्यादनीकस्थो रक्षिवर्गो थकोट्टपः ।
अध्यक्षोधिकृतस्तस्य नरे दौःसाधिकोऽपि च ॥१२॥
गर्वाटो वर्त्तको दण्डधार्यथ स्थायुकोऽपि च ।
राज्ञा मोधिकृतः स स्याद्गोपो ग्रामेषु भूरिषु ॥१३॥
स्वर्णाध्यक्षो भौरिकः स्यात्[2] हेरिकोप्यथ नैष्किकः ।
रौप्याध्यक्षष्टङ्कशाली टङ्कपर्यायतः पतिः ॥१४॥
क्षुद्रोपकरणानां चो[3]पाध्यक्षः परिकर्मिकः ।
पुराध्यक्षे दण्डपतिः पौरिको दण्डपाशिकः ॥१५॥
स्थानाध्यक्षः स्थानिकः स्याच्छुल्काध्यक्षस्तु शौल्किकः[4] ।
धर्माध्यक्षो धार्मिकः स्याद्धर्माधिकरणीत्यपि ॥१६॥
हयाध्यक्षो हायिकः स्यात्पाकाध्यक्षस्तु पाकिकः ।
चतुरङ्गबलाध्यक्षः सेनानीर्दण्डनायकः ॥१७॥
स्यातामन्तःपुराध्यक्षेऽन्तर्वेशिकावरोधिकौ ।
कुब्जो वर्षवरः षण्ढः (षाढः text) सौविदल्लश्च कञ्चुकी[5] १८

१ स्थेयो...स्या[B] पुस्तके न दृश्यते २ स्याद्भूरिको[B] ३ योध्यक्ष परिका[B]
४ शौल्कक:[B] ५ धर्माध्यक्षो...... कञ्चुकी[B] पुस्तके एव दृश्यते नान्येषु ।

स्थापत्यः सौविदोऽथ[1]स्याद्भृत्यो भृतक इत्यपि ।
सेवको[2]र्थानुजीवी स्याद्वैर्यरिर्द्वेषणो द्विषत् ॥१६॥
दुर्हृद्दस्युः सपत्नो द्विड् विपक्षः शात्रवोऽहितः ।
परौचाभेमातियाती परेः पन्थिकपन्थिनौ ॥२०॥
प्रतेरनीकपक्षाख्यौ जिघांसुद्वेषिशात्रवः ।
अरात्यारात्यसहनपर्यवस्थात्रमित्रकाः ॥२१॥
विद्विषश्च द्विषुर्विद्विट् विद्वेषी द्विषतो द्विषः ।
अभिघाती चाभिमतिः सापत्नोऽपि सपत्नवत् ॥२२॥
वैरानुबन्धी योन्यार्थ[3]मुपनाहः स उच्यते ।
वयस्यः स्निग्धः सवयाः स्नेह्यः[4] पांशुलकः[5]सखा ॥२३॥
सुहृन्मित्रमपि क्लीबे सख्यं सांतपदीनकम् ।
आदिराजः पृथुर्वैन्यो मांधाता युवनाश्वजः ॥२४॥
कुवलाश्वो धुन्धुमारो हरिश्चन्द्रस्त्रिशङ्कुजः ।
पुरूरवा बौध ऐल उर्वशीरमणोऽपि च ॥२५॥
[6]उदुसन्तावायुरायुः* पुत्रेस्याथ पुरुः पुरू[7] ।
शतधन्वा शतधनुः क्षत्रभेदेप्यथो नलः ॥२६॥

---

१ पि[B] २ थ्यनु[B] ३ न्योन्य[B] ४ ह्यः[KC] ५ पांसु[B] ६ उदुराता[B] ७ पूरुः पुरुः[K]

* उकारान्तः सकारान्तश्चायुशब्द आयुःशब्दश्च ।

बाहुको नैषधः पुण्यश्लोकोऽश्वज्ञोऽस्य च प्रिया ।
दमयन्ती तु वैदर्भी भैमी स्यादथ नाहुषः ॥२७॥
ययातिरर्जुनः कार्त्तवीर्यो हैहय इत्यपि ।
कार्त्तिवीर्यः कार्त्तवीर्यार्जुनो माहिष्मतीपतिः ॥२८॥
सहस्रबाहुपर्यायो दौष्यन्तिर्भरतोऽपि च ।
सर्वंदमः सर्वदमः स्यात्सर्वदमनोऽपि सः ॥२९॥
शाकुन्तलेयः खटवाङ्गो दिलीपोप्यथ शांतनुः ।
शन्तनुश्च महाभीष्मः प्रतीपोऽथ परावसुः ॥३०॥
गङ्गापर्यायपुत्रार्थो गाङ्गेयो गाङ्ग इत्यपि ।
गाङ्गायनिः[1] शान्तनवो भीष्मो देवव्रतोपि च ॥३१॥
रक्तःपर्यायदन्तार्थः स्यादिच्छामरणार्थकः ।
प्रज्ञापर्यायनेत्रार्थो धृतराष्ट्रोऽम्बिकासुतः ॥३२॥
वैचित्रवीर्यः पाण्डुः स्याद्धृतराष्ट्रानुजोऽपि च ।
अम्बालिकेयः पत्न्यस्य कुन्ती कुन्ता च सात्वती ॥३३॥
पृथान्या शल्यभगिनी माद्री शल्यस्तु मद्रपः ।
दुर्योधनस्तु कुरुराड् गान्धारेयः सुयोधनः ॥३४॥
शताग्रजोऽस्यावरजास्ते स्युर्दुःशासनादयः ।
शकुनिः सौबलोपि स्याद्गान्धारोऽप्यक्षकोविदः ॥३५॥

---

१ गाङ्गायविः B'

दुर्द्यूतवेदी कर्णस्तु चम्पाधिपतिरङ्गराट् ।
राधार्कपर्यायसुतो वसुषेणश्च सूतजः ॥३६॥
कालपृष्ठं जयो[1]धन्वा स्यै[2]षा दुष्टचतुष्टयी ।
सुयोधनादिका सौयोधनिर्लक्ष्मण इत्यपि ॥३७॥
अजातशत्रुपर्यायः[3]शल्यारिश्च युधिष्ठिरः ।
कर्णानुजोजमीढः स्याद्धर्मराजस्तपःसुतः ॥३८॥
वृकोदरो भीमसेनो वायुपुत्रः करवणः ।
वीरसेणुर्नागबलो वल्लवो गुणकारकः ॥३९॥
भीमो[4]हिडिम्बकिर्मीरबककीचकसूदनः ।
सौवलीतनयार्थारिः पाकपर्यायकारकः ॥४०॥
अर्जुनः फाल्गुनः पार्थः सव्यसाची धनंजयः ।
राधावेधी किरीट्यैन्द्रिः श्वेताश्वः फाल्गुनो[5]नरः ॥४१॥
बृहन्नडो गुडाकेशः सुभद्रेशश्च कर्णजित् ।
हनूमत्कपिपर्यायध्वजपर्याय इत्यपि ॥४२॥
बीभत्सुर्विजयो जिष्णु[6]र्गाण्डिवी कालखंजहा ।
बीभत्सश्चित्रयोधी च धन्वी योगी च तद्रथे ॥४३॥
नन्दिघोषो धनुरपि गाण्डीवो गाण्डिवोऽस्त्रियाम् ।
गांजीवो गांजिवोऽप्यस्त्री नकुलस्त्वश्वशास्त्रवित् ॥४४॥

---

१ ष्ठंजपो$^{C}$ ष्ठंजपो$^{C}$ २ सैषा$^{B}$ ३ कङ्कोऽजातारिपर्यायः$^{B}$ ४ हिड$^{K}$ ५ णो$^{B}$
६ गांजीवी$^{K}$

तन्तिपालः शाकुनस्तु गोवित्स्याद्ग्रन्थिकः पुनः ।
सहदेवोऽपि चरमावेतौ माद्रीसुतावुभौ ॥४५॥
युधिष्ठिराद्यास्तेऽपि स्युर्ज्येष्ठाः कुन्तीसुतास्त्रयः ।
पञ्चामी धर्मवाय्विन्द्रनासत्यानां सुताः क्रमात् ॥४६॥
तेऽपि स्युः पाण्डुपुत्रार्था[1]स्तापसा अथ यज्ञजा ।
पाञ्चाली द्रौपदी कृष्णा पार्वती नित्ययौवना ॥४७॥
याज्ञसेनी वेदिजन्मपर्याया पाण्डुशर्मिला ।
सैरन्ध्री पञ्चसूः पञ्चवल्लभा पञ्चमीति च ॥४८॥
स्यात्पतिः श्वशुरो*ज्येष्ठः कनीयान्देवरः पतिः ।
त्रितयं त्रिषु मध्येषु कृष्णासम्बन्ध ईदृशः ॥४९॥
सौभद्रेयोऽभिमन्युः स्यादार्जुनिस्तस्य चात्मजः[2] ।
परीक्षितः परीक्षित्स्यादुत्तरातनयार्थकः ॥५०॥
पारीक्षितस्तु राजर्षिर्जनमेजय इत्यपि ।
यजमानः सर्पसत्रे स च जन्मेजयोप्यथ ॥५१॥
द्रुपदो यज्ञसेनः स्यात् पृषतः[3]कंपिलापतिः ।
धृष्टद्युम्नो द्रोणरिपुरपि याजाभिचारजः ॥५२॥
द्रौपदः पार्षतः सेनापतिश्चाथ शिखण्डिनि ।
भीष्मारिः[4]स्त्रीरूपकोऽपि स्थूणपुंस्त्वप्रधारकः ॥५३॥

---

१ स्तापत्वा[K] २ जे[B] ३ कपिला[B] ४ स्त्रीरू[KC]

* ज्येष्ठश्वशुरः = भ्रातृश्वशुरः (Husband's elder brother)

घटपर्यायजन्मार्थो भारद्वाजः कृपीपतिः ।
द्रोणः[1]शन्तनुजामाता गुरुराचार्य इत्यपि ॥५४॥
द्रौणायनिः कृपीपुत्रो द्रौणिर्द्रौणायनोऽपि च ।
अश्वत्थामापि[2] गौरः स्यात्कृपाचार्यस्तु गौतमः ॥५५॥
शैनेयः सात्यकिस्तुल्यौ सात्वतोऽपि च माधवः ।
सत्राजितश्च सत्रजित् सत्यभामापितर्यथ ॥५६॥
रुक्मिणीजनके[3]ऽपि स्याद्भीष्मो भीष्मक इत्यपि ।
दमघोषश्चेदिपतिः शिशुपालश्च चेदिराट् ॥५७॥
श्रौतश्र[4]वेयः कंसः स्यादुग्रसेनसुतोऽपि च ।
बार्हद्रथिर्जरासंधो मागधो मगधेश्वरः ॥५८॥
द्वैमातुरो राजगृहस्वामी कर्णसखोऽपि च ।
इन्द्रपर्यायजो बाली बालिर्दुन्दुभिदर्पहा ॥५९॥
सूर्यपर्यायपुत्रार्थः सुग्रीवो वानरेश्वरः ।
मारुतिः केसरिसुतो हनूमान्हनुमानपि ॥६०॥
रामदूतो योगचरः स च स्याद्वज्रकङ्कटः[5] ।
लङ्कारिराञ्जनेयः स्यादर्जुनार्थाद्ध्वजार्थकः ॥६१॥
सुबाहुजस्तु सगरो दैलीपिः स्याद्भगीरथः ।
विक्रमादित्यपर्यायो महेन्द्रादित्यसंभवः ॥६२॥

---

१ शा^BK २ तु^B ३ को^B ४ श्रौग्र^K ५ कंटकः^KC

असौ विषम[1]शीलोऽपि साहसाङ्कः शकोत्तरः ।
भंभसारः श्रेणिकः स्याद्धालस्तु शालिवाहनः ॥६३॥
सर्वे पृथुप्रभृतयो मताः[2]सौखरयो नृपाः ।
यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः ॥६४॥
वार्त्तायनिः प्रवृत्तिश्च चरश्चारोऽपि वार्त्तिकः ।
प्रतिष्कशो[3]वसर्पः स्यात् प्रविकाशोप्यमी त्रिषु ॥६५॥
सांवत्सरो ज्यौतिषिको दैवज्ञो[4]देवलेखकः ।
कार्त्तान्तिकश्च मौहूर्त्ती ज्ञानी प्रश्नार्थवाद्यपि ॥६६॥
अथ स्यात्पुष्पशकटी दैवप्रश्नउपश्रुतिः ।
तान्त्रिको ज्ञातसिद्धान्तः सत्री गृहपतिः समौ ॥६७॥
लिपिंकरो लिपिकरो मसिपण्यश्च लेखकः ।
लिविंकरो लिविकरो लेखकारक इत्ययम् ॥६८॥
स्यादक्षराचणश्चञ्चुः किरिका मसिधानिका[5] ।
वर्णा[6]कूची च मेलान्धुः स्यान्मसीजलमित्यपि ॥६९॥
मेला[7]मसिर्द्वयोः पत्राञ्जनं स्याच्च मसी[8]स्त्रियाम् ।
स्त्रियां स्यात्कलमः पुंसि लेखनी[9]चापि[10]न स्त्रियाम् ॥७०॥
वर्णातूल्यथ लेखः स्याद्वर्णदूतार्थकोऽपि च ।
स्यात्स्वस्तिमुखपर्यायो वाचःपर्यायहारकः ॥७१॥

---

१ शा^C २ ता^KC ३ प^B ४ देव^B पुस्तके नास्ति ५ रि^B ६ कु^C ७ मसीजलं^B
८ मसा^B ९ लेखिनी^B १०स्यादक्षरादित्यादिन स्त्रियामित्यन्तं श्लोकद्वयं^K पुस्तके नास्ति ।

तस्यैव मुद्रणं मुद्रा स्त्रियां प्रत्ययकारिणी ।
तेषां निबन्धनार्थं तु काचस्थानं च न द्वयोः ॥७२॥
अपि स्यात्कलमस्थानपर्याया मसिधानिका ।
उत्तमर्णाधमर्णादिव्यवहारार्थपत्रके[1] ॥७३॥
द्रव्याङ्गबन्धनं तत्स्यात्तेषां भेदा अनेकशः ।
लिखिताक्षरविन्यासे लिपिर्लिविरुभे स्त्रियौ ॥७४॥
लिपी लिवी च तुल्ये स्तो[2]लिखनीयं तु लेखितम् ।
लेखनीयं च लिखितं लिख्यं लेख्यममूनि च ॥७५॥
त्रिषु द्रव्येऽथ लिखनं लेखनं लेख इत्यपि[3] ।
पुस्तकं त्रिषु पुस्तं स्त्री क्लीबे तु शरयन्त्रकम् ॥७६॥
पुस्तकस्थापनस्थाने प्रोथवैदेशिकौ समौ ।
स्यात्संदेशहरो दूतो[4]दौत्यं भावे च कर्मणि ॥७७॥
अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि ।
यातुर्गन्तुरथो हारिः पथिकानां च संहतौ ॥ ७८ ॥
स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ।
सप्तैवाङ्गान्यमूनि स्युरथ पौरास्तु पुंस्यमी ॥ ७९ ॥
श्रेणिः स्त्रियां च प्रकृतिर्द्वे इमे चाथ षड्गुणाः ।
संधिर्ना विग्रहो यानमासनं द्वैध आश्रयः ॥ ८० ॥

---

१ उत्तमर्णेति श्लोकार्धं पुस्तके नास्ति । २ लिखलिहं तु लेखिनी ३ थ [B]
४ दूत्यं[B]

अथ स्युः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः ।
क्षयः स्थानं च[1] वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ॥ ८१ ॥
स प्रतापः प्रभावश्च यत्तेजःकोशदण्डजम् ।
सामदाने भेददण्डावित्युपायचतुष्टयम् ॥ ८२ ॥
दमः पुंस्यस्त्रियां दण्डस्तद्वत्साहसमस्त्रियाम् ।
साम सान्त्वमुभे क्लीबे[2]लञ्चाकौशलिके स्त्रियाम् ॥८३॥
पुंस्युत्कोच उपाचारो[3]दाहार आमिषं द्वयोः ।
ग्राह्यं प्रदानमयनमुपादानं च ढौकनम् ॥ ८४ ॥
उपायनमुपग्राह्यं प्राभृतं च प्रदेशनम् ।
उपदा स्त्र्युपहारे ना यौतकादेस्तु देयके ॥ ८५ ॥
दायो ना हरणं क्लीबे पुंसि भेदोपजापकौ ।
त्रिवर्गेण भिया वापि परीक्षा सोपधा स्त्रियाम् ॥८६॥
मायोपेक्षेन्द्रजालानि क्षुद्रा भेदा अमी त्रयः ।
तत्र चास्त्र्यषडक्षीणं यत्तृतीयाद्यगोचरम् ॥८७॥
विकाशोऽपि च वीकाशोऽवकाशश्च प्रकाशवत् ।
विविक्तविजनच्छन्ननिःशलाकाप्रकाशकाः ॥८८॥
[4]त्रिष्वस्त्र्युपह्वरं क्लीबे रहस्यं च जनान्तिकम् ।
एकान्तं केवलं छन्नमुपांशुरहसी उभे ॥८९॥

---

१ नीति$^{KC}$ २ लचा$^{C}$ ३ द्दहार$^{C}$ ४ विष्व$^{KBC}$

क्लीबाव्ययेथ मन्त्रः स्याद्रहस्यालोचने पुनः ।
स्याद्विश्वास[1]स्तु विश्रम्भोऽभ्रेषोऽभ्रंशो[2]यथोचितात् ।६०।
कल्पादेशनवा[3]न्याया देशरूपं समञ्जसम् ।
युक्तमौपयिकं न्याय्य[4]मभिरूपं च साम्प्रतम् ॥६१॥
उचितं भजमानं च प्राप्तं चाथ समर्थनम् ।
संप्रधारणानुवादो निर्देशोपि निदेशकः ॥६२॥
आदेशोप्यथ वै शास्तिः[5]शास्ती[6]स्यातां स्त्रियाविमे ।
आज्ञा शिष्टिः स्त्रियौ क्लीबे शासनं चावधारणा ॥६३॥
संस्था स्थितिश्च मर्यादा सीमा मन्तुस्तु पुंस्ययम् ।
अपराधो[7]प्यलीको स्त्री स्यात् क्लीबे विप्रियागसी[8]॥६४॥
शत्रुर्जिगीषोः पुरतः स्वदेशानन्तरो नृपः ।
तस्याप्यनन्तरो मित्रमुदासीनस्ततः परः ॥६५॥
पार्ष्णिग्राहः पृष्ठवासी तस्याक्रन्दो निरन्तरः ।
ततः परस्तादासारोऽवनतोस्यापि पृष्ठगः ॥६६॥
अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः ।
सपञ्चमस्तकः षष्ठ उदासीनस्ततः पृथक् ॥६७॥
विजिगीषुः सप्तमः स्यात्पञ्चत्व[9]स्तादयो मताः ।
अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम् ॥६८॥

---

१ विश्राम[KBC] २ अषो[B] अक्षरद्वयंनान्यपुस्तकेषु ३ नव[B] ४ मभिनीतं[B]
५ शस्तिः[C] ६ सास्ती[B] ७ व्यलीको ? ८ गसौ ९ त्वस्त्वा[K] वस्त्वां

तथारिमित्रमित्रं च विजिगीषोः पुरस्सराः ।
उशना मण्डलमिदं प्राह द्वादशराजकम् ॥९९॥
विजिगीषुररिर्मित्रं पार्ष्णिग्राहश्च मध्यमः ।
उदासी[1]नात्पुलोमेन्द्रौ षट्कं मण्डलमूचतुः ॥१००॥
चत्वारः पार्थिवा मौलास्तिर्यक् पश्चात्पुरः स्थिताः ।
मूलप्रकृतयः शत्रुमित्रे सहजकृत्रिमे ॥१०१॥
सहजं स्वकुलोत्पन्नं कृत्रिमं कार्ययोगतः ।
मयास्योपकृतं पूर्वमयं चोपकरिष्यति ॥१०२॥
इति[2]यः क्रियते सन्धिः प्रतीकारः पुमानयम् ।
द्विपाद्यो[3]द्विगुणो दण्डो भागधेयोऽस्त्रियां वलिः ॥१०३॥
कारः करो नाथोदार्नि बन्धनं शुल्कमस्त्रियाम् ।
घट्टादिदेये द्रव्ये स्यादथापि द्विविधं भयम् ॥१०४॥
अदृष्टं तोयवह्न्यादि दृष्टं स्वपरचक्रजम् ।
महीभुजामहिभयं स्व[4]चक्रप्रभवं भयम् ॥१०५॥
सहायाः साधनोपाया विभागो देशकालयोः ।
विपत्तेश्च[5]प्रतीकार एष[6] पञ्चाङ्गको नयः ॥१०६॥
कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् ।
[7]खन्याकरबलादानं शून्यानां च निवेशनम् ॥१०७॥

---

१ कावुलो[B] २ यत्[1] ३ प्राद्यं[K] ४ पच[B] ५ विनिपात[B] ६ एवं[B]
७ खन्याकश्च खलानां च[B].

अष्टवर्गो नृपस्यायमस्यैवापचयः क्षयः
वृद्धिस्तु वर्द्धन[1]चैवं साम्यं स्यात्सोप्यं त्रिकः ॥१०८॥
उदयश्च त्रिवर्गश्च[2]शान्ति स्त्री स्याद्दमो नरि ।
मन्त्री पुरोधाः सेनानीर्द्वास्थोन्तर्वेशिकस्तथा ॥१०९॥
युवराजः प्रशास्ता च समाहर्त्तोपदेशकः ।
कर्मान्तिकः संनिधाता रूपाद्यधिकृतस्तथा ॥११०॥
मन्त्रपारिषदः पौरव्यावहारिकनायकौ ।
आटविको दुर्गपालो दण्डेश इति षट् त्रिकाः ॥१११॥
तीर्थानि शत्रुपक्षे स्युर्येषु चारः प्रयुज्यते ।
समाहर्तृप्रशास्तारौ[3]नायकं चाप्यवर्त्त्य तु ॥११२
महिषी मुख्यमन्त्री च वैद्यश्चेति पठन्ति ये ।
तेषामिमे त्रयः स्वीयाश्चाराणां स्युरगोचराः ॥ ११३॥
अतः स्वपक्षे तीर्थानि भवन्ति दश पञ्च च ।
चरन्ति पुरुषाः शत्रुपक्षे चेति चरास्त्रयः ॥ ११४ ॥
प्राज्ञा[4]दर्शननास्तिक्यप्रमादालसताक्रुधः ।
असत्यं दीर्घसूत्रत्वमेकेन बहुभिः सह ॥ ११५ ॥
प्रकाशे च त्रयो मन्त्रा मन्त्रितत्यागं एव च ।
अघसंग इति ज्ञेया दोषा द्वादश भूपतेः ॥ ११६ ॥

१ द्रव्यं[B] ? २ शास्ति[BK] ३ नायकं[CK] ४ मज्ञा [B]

कामक्रोधौ लोभ[1]हर्षौ मानश्चापि मदः पुनः ।
अन्तर्गतोऽरिषड्वर्गः प्राणस्य क्षुत्तृषे पुनः ॥ ११७ ॥
शोकमोहौ तु मनसो जरामृत्यू च वर्ष्मणः ।
षडूर्मयोऽतिवृष्टिः[2] स्यादवृष्टिः शलभाः शुकाः ॥ ११८ ॥
आखु[3]स्वपरचक्राणि मतैता ईतयः[4]पुमान् ।
भृत्यैर्मित्रैश्च मन्त्रैश्च[5]बलं त्रिविधमुच्यते ॥ ११९ ॥
हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् ।
षडङ्गं भारिकस्वाभ्यां वारदैशिकयोद्धृभिः ॥ १२० ॥
सकर्मकारैरष्टाङ्गं प्रततस्तु प्रतापवान् ।
सौम्योऽधिगम्यो ऽथ[6]शुचिरुपधातीतकः समौ ॥ १२१
पौराद्यनुग्रहे युक्तो वृत्तिर्व्यावृत्तिरन्यतः ।
पक्षे पक्षे तुलामानं[7]भाण्डार्घप्रत्यवेक्षणम् ॥ १२२ ॥
संमाननं च मान्यानां लब्धप्रशमनानि षट् ।
प्रतिभोगप्रातिभोगौ शाकादेरुपढौकनम्[8] ॥ १२३ ॥
शूद्रकन्याकरो[9]ऽयः स्यात्स च[10]गौरीवराढ[11]कम् ।
राधाचक्रं तु तद्यन्त्रे चले यन्मील्यलोचनम् । १२४
प्रतिबिम्बेक्षणवशादूर्ध्वं वेध्यमधोमुखम् ।
तद्वेधनादिकं कर्म वीर्यशुल्कमिति स्मृतम् । १२५

---

१ लाभ^KC २ स्यादवृष्टिः इति^K पुस्तके नास्ति ३ आखू^KC ४ पुनः ?
५ त्रिविधं बल^B ६ स्योंश^KC ७ भाण्डाद्यं^B ८ कौटनम्^KC ढौकनम्^BS
९ व्यः १० तु ११ वराटकम्

अधिकारः प्रक्रिया स्त्री द्वयोश्चमरचामरे ।
लोमगुच्छः पुमान् क्लीबे चारतूलमथ त्रिषु ॥ १२६ ॥
छत्रं तु नृपचिन्हार्थं राजशृङ्गार्थकं च षण् ।
हैमदण्डं[1] चातपत्रमुत्कूटं[2] चोष्णवारणम् ॥ १२७ ॥
चक्रपर्यायतोङ्गार्थं भृङ्गालुः कनकालुका ।
[3]निवेशः शिविरं क्लीबं सज्जनं तूपरक्षणे[4] ॥ १२८ ॥
रथो गजोऽश्वः पादातः सेनाङ्गं स्याच्चतुर्विधम् ।
युद्धा[5]र्थे चक्रवद्याने शताङ्गः स्यन्दनो रथः ॥१२९॥
वङ्करो मूलविभुजो यद्वो[6]ऽप्यस्त्री विमानकः ।
सक्रीडार्थः पुष्परथो देवार्थस्तु मरुद्रथः ॥ १३० ॥
योग्या स्त्रियां वैनयिकोऽध्वरथः पारियानिकः ।
कर्णीरथः प्रवहणं[7]डयनं ह्ययनं समे[8] ॥ १३१ ॥
शकटोऽस्त्रीत्वनः क्लीबे शकटिः शकटी स्त्रियौ ।
त्रिषु काम्बल[9]वास्त्राद्यास्तैस्तैः परिवृते रथे ॥ १३२॥
सपाण्डुकलीयो यःसंवीतः पाण्डुकम्बलैः ।
स तु ज्ञेयश्च वैय्याघ्रो यो वृतो व्याघ्रचर्मणा ॥१३३ ।
एवं द्वीप्यादिचर्मादिसंवीते द्वैप इत्यपि ।
रथार्थात्पादपर्यायमङ्गपर्यायमस्त्रियाम् ॥ १३४ ॥

---

१ हिमदण्डं[KC] २ मुकुटं[C] मुत्कूटं[KB] ३ निवेशं[KC] ४ णम्[B]
५ र्थै[B] ६ थ[B] ७ नं[B] ८ मम्[BK] ९ वस्त्रा[K]

चक्रं पुमानरिद्धां[1]रानेमी स्त्री नेमिरित्यपि ।
प्रधिरस्त्री द्वयोराणिः स्त्रियामाणीति चाप्यणी ॥ १ ३ ५॥
रथाग्रकीलकेनाभिर्नाभी चक्रस्य पिण्डिका ।
स्त्रियामथो ना कुवरः कूवरो ना युगंधरः ॥ १३६ ॥
अस्त्रियामप्यथ युगमस्त्री यानमुखं पुनः ।
[2]ईषान्तबन्धनं चापि धूर्द्धूर्वी च स्त्रियावुभे ॥१३७॥
युगान्तकीले[3]शम्या स्त्री तत्स्थाने गर्त्तमद्वयोः ।
अनुकर्षो दार्वधस्थ[4]मासङ्गस्तु युगान्तरम् ॥ १३८ ॥
[1]रथगुप्तिर्वरूथाऽस्त्री[5]स्यूरथाङ्गा[6]न्युपस्कराः ।
नियन्ता प्राजिता यन्ता सूतः सव्येष्ठृ[7]सारथी ॥१३९॥
दक्षिणस्थप्रचेतारौ क्षत्ता रथकुटु[8]म्बिकः ।
रथिनः स्यन्दनारोहा रथिका रथिरा अपि ॥१४०॥
रथव्रजे स्त्रियां रथ्या रथकट्याप्यथ स्त्रियाम् ।
द्वयोः प्रेङ्खा तु दोला स्त्री यानं वा पुंसि न स्त्रियाम् ॥१४१॥
विमानेऽथ वराङ्गः स्याद्वारणो मृग इत्यपि ।
हस्ती दन्तावलो दन्ती सिन्धुरो दीर्घमारुतः ॥१४२॥
मातङ्गो राजिलः पीलुर्जलकान्तो महामृगः ।
मतङ्गः सामजः कुम्भी कुञ्जरोऽनेकपो द्विपः ॥१४३॥

---

१ नरिर्धारा ? २ इषान्त[B] ३ शस्या[B] ४ स्थंग्रा[B] ५ स्यु[B] ६ न्याप ?
७ ष्ठ [B] २ म्बन:[B]

निर्लूनः करटी नाग इभः स्तम्बेरमो गजः ।
करी मतङ्गजः पद्मी [1]शूर्पकर्णो लतारतः[2] ॥१४४॥
पिण्डपादः पुष्करी स्याच्छुण्डारी[3] कज इत्यपि ।
विलोमरसनार्थः स्याद्द्विर्दन्तार्थविषाणकः ॥१४५॥
द्वयोः करेणुर्वैतण्डः पेचकी पुष्करी[4] जटी ।
जलाकाङ्क्षो महाकायोऽप्रस्वेदः सूचिकाधरः ॥१४६॥
शुण्डालः पिचिलश्चापि ध्वजोऽस्त्री चासुरः कपिः ।
गम्भीरवेदी च करी करिणी धेनुका वशा ॥१४७॥
करेणुश्च करेणूश्च रेणुका च करेणुका ।
कणेरुश्च गणेरुश्च स्त्रियामथ च तद्भिदः ॥१४८॥
पञ्चवर्षो गजो[5]बालः पोतस्तु दशवार्षिकः ।
[6]विक्को दिक्कोपि विंशाब्दस्त्रिंशाब्दः कलभोऽस्त्रियाम् ॥१४९
षष्टिवर्षो युवार्थः स्याच्छुण्डारोऽपि मतः स च ।
स्यादशीतेस्तु वृद्धोऽथ यद्गन्धाघ्राणतोऽपरे ॥१५०॥
न तिष्ठन्ति गजाः सस्याद्गन्धहस्ती ततः पुनः ।
चतुर्विधा गजा भद्रो मन्द्रो मिश्रो मृगोऽपि च ॥१५१॥
एषामाकरजा भेदा विज्ञेया बहवो बुधैः ।
गङ्गासागरहिमाद्रिप्रयागाणां च मध्यतः ॥१५२॥

---

१ सूK २ रतेःB ३ ण्डC ४ लीB ५ बालः पोरुस्तुदशK पुस्तके नास्ति
६ विष्को B

[1]च्यवनं* (स्यात्) मध्यमं तल्लोहिताब्धेश्च पश्चिमे ।
त्रिपुर्यां[2]को सलादौ च चेदिका[3]रूषकं वरम् ॥१५३॥
श्रीक्षेत्रं गौड़बङ्गाल[4]माङ्गिरेयं तु मध्यमम् ।
विन्ध्याद्रि[5]वेङ्कटाद्रेश्च कलिङ्गद्रविडावपि ॥१५४॥
वनं कालीयकं नाम समुद्रावधिमध्यमम् ।
श्रीशैले देवशैले च मलये पर्वते वनम् ॥१५५॥
दाशार्णकं वनं तत्स्या[6]द्वरं सह्याद्रिमूलतः ।
भृगुकच्छा[7]वधि वनमपरान्तं च मध्यमम् ॥१५६॥
द्वारवत्यां च सौराष्ट्रे कलिङ्गवनमुत्तमम् ।
कालंजरे कुरुक्षेत्रे सिन्धुसागरसंगमे ॥१५७॥
वनं पाञ्च[8]नदं नाम मध्यमं परिकीर्त्तितम् ।
कालेप्यजातदन्तो यः स्वल्पाङ्गः स च मत्कुणः ॥१५८॥
यूथपर्यायनाथार्थः[9] प्रभिन्ने मत्तगर्जितौ ।
मदोत्कटो मदकलः समावुद्भ्रान्तविर्मदौ ॥१५९॥
कल्पितः सज्जितस्तिर्यग्घाती परिणतश्च सः ।
व्यालोऽत्रऽदुष्टे गम्भीरवेदी त्ववमताङ्कुशः ॥१६०॥
[10]दण्डारारालत्तुभा यत्रारोहति पार्थिवः ।
राजवाह्यस्तूपवाह्यः सान्नाह्यः समरोचितः ॥१६१॥

---

१ नाच्यं वनं KC २ र्याः KC ३ कारुषकं B ४ मागिरेयं B ५ व्यङ्क B विक K
६ द्वनं B ७ कण्ठा KC ८ वनं KC ९ नामा KC १० दण्डरा C
* प्राच्यं वरं पाठो भवेत् ।

[१]ईषार्थदन्तपर्याय उग्रपर्यायदन्तके ।
स्त्रियां समूहे घटना घटा यूथं नपुंसकम् ॥१६२॥
मदो दानं प्रवृत्तिश्च वमथुः करसीकरः ।
करिनासा तु हस्तार्थः शुण्डा शुण्डार इत्ययम् ॥१६३॥
अस्याग्रं पुष्करं क्लीबेऽङ्गुलं स्यात्तस्य कर्णिका ।
विषाणावस्त्रियां पुंसि दन्तौ ना स्कन्ध आसनम् ॥१६४॥
कर्णमूलं चूडिका[२]स्यादीषीका त्वक्षिकूटकम् ।
अपाङ्गदेशो निर्याणं गण्डस्तु करटः कटः ॥१६५॥
कट[३]कोप्यथ कुम्भ्यक्षि[४]कूटे स्यादिषीकेषिका[*] ।
अवग्रहो ललाट[५]स्याद्विदुः[६] पुंस्युभयान्तरम् ॥१६६॥
कुम्भौ तु शिरसःपिण्डौ तयोर्मध्ये पिचुः पुमान् ।
घात्कुम्भस्तयोः संधिरारक्षस्तु ततोऽप्यधः ॥१६७॥
वाहित्थं तदधोदेशः प्रतिमानमथास्त्रियाम् ।
गात्रं तु करिणः [७]पूर्वजङ्घाद्यवयवे न ना ॥१६८॥
अपरावरे तु पश्चाज्जङ्घाद्यवयवे न ना ।
आरालं पुच्छमूलस्योपान्ते स्यात्पेचकः पुमान् ॥१६९॥
पार्श्वतः पक्षभागः स्यात्पद्मार्थं बिन्दुजालकम् ।
मदयोगविधानं तु[८]व्यस्तारमथ तल्पनम् ॥१७०॥

१ इषार्थं B २ हीपिका B ३ का B ४ कुटे B ५ टं B ६ द्विन्दुः C ७ पूर्वं B
८ विस्तार B

*अक्षिकूटकं कुतः पुनरुक्तमिति नावगम्यते ।

पृष्ठवंशस्य यन्मांसं स्यादथो दन्तमांसके ।
क्लीबे[1]प्रवेष्टकं तत्स्यादथ तद्बन्धनेऽपि च ॥१७१॥
अन्दुकः पुंसि निगडो न स्त्रियां शृङ्खलं त्रिषु ।
पादपाशश्च[2]हिञ्जीरो न स्त्रियां गजबन्धभूः ॥१७२॥
वारिर्वारी च प्राची च [3]प्रारब्धिश्च स्त्रियामिमाः ।
गात्रबन्धेतु त्रिपदी चैकस्मिन्न[4]परेऽपि च ॥१७३॥
तोत्रं वेणुकमालानं निर्वाणं वैणुकं पुनः ।
नालिकाकर्णवेधिन्यामथस्यादङ्कुशोऽस्त्रियाम् ॥१७४॥
द्वयोः सृणिःशृणिरपि स्त्रियां स्यातां सृणी शृणी ।
अस्त्र्यष्ठत्वं कुशाग्रं घातमङ्कुशवारणम् ॥१७५॥
निषादिनां पादकर्म यातं वीतं नपुंसकम् ।
कच्या दूष्या वरत्रा स्या[5]दूषा चूष्या कुथ[6]स्त्रिषु ॥१७६॥
प्रवेणिः स्त्री प्रवेणी च परिस्तोमः पुमानयम् ।
वर्णः षणास्तरणं स्यात् कण्ठबन्धः कलापकः ॥१७७॥
पित्तज्वरः[7]पाकलोस्य कूटपूर्वस्त्रिदोषजः ।
नासापूर्वस्थूलहस्तं दन्तमूले करीरिका ॥१७८॥
शङ्खः कूटो दन्तमध्यं प्रोहश्चरणपर्वणि ।
[8]अपस्कारः प्रजङ्घाग्रे नाली[9]नात्रापरे नना ॥१७९॥

---

१ प्रवे इत्यक्षरद्वयं न C पुस्तके २ हिंसीरोंB ३ प्ररब्धिB ४ अपरोB
५ दूष्याBC ६ स्त्रियाम् ७ ज्वरेB ८ अयB ९ नात्रB

अष्ठीवतोरधिष्ठाने संदानं पुंनपुंसकम् ।
विधानं गजभक्ष्ये स्यात् क्लीबे चैव विधा स्त्रियाम् ॥१८०॥
मेण्ठो मेठो निषादी स्यात् सादिः सादी निषाद्यपि ।
दृश्यते[1]पाण्डुरो यस्तु केशे रोम्णि च बालधौ ॥१८१॥
कर्णे च नेत्रयोश्चैव स स्यादैरावतान्वयः ।
अश्वक्षमः सारसदृक् क्षमी[2]बुद्धिविशारदः ॥१८२॥
[3]अजरोमा स्थूलशीर्षः पुण्डरीकान्वयो गजः ।
स्तब्धकर्णः सुदेहश्च कृष्णवर्णः कृशोदरः ॥१८३॥
स्थूलविन्दुर्धनु[4]र्वंशः पुष्पदन्तान्वयो गजः ।
अग्निवर्णः सुवर्णाक्षो वेगवाञ्जललम्पटः ॥१८४॥
आयतो विस्तृतोत्यर्थं वामनान्वयजः करी ।
प्रचण्डकुसुमच्छायः कपोतनयनः क्षमः ॥१८५॥
मेधावी तनुरोमा च सुप्रतीकान्वयोद्भवः ।
स्निग्धवालधिदन्तो यः श्वेतविन्दुकरान्वितः ॥१८६॥
पेचकेल्पः स्थूलकलः सार्वभौमान्वयो गजः ।
रौद्रो लघुशिराह्[8]स्वश्वेतविन्दुसमन्वितः ॥१८७॥
पाटलापुष्पनयनः स भवेदञ्जनान्वयः ।
कुम्भस्थूलतनुः स्निग्धलोललोहितलोचनः ॥१८८॥

---

१ पाण्डरोङ्गैK पाण्डुरोगैB २ युद्धB ३ कुब्जB ४ र्वंप्राण्ड'B ८ हस्व......

कृष्णो[1] विस्तीर्णहस्ताग्रः कुञ्जरः कुमुदान्वयः ।
घोटोश्वस्तुरगो वीती किरवी[1] क्रान्तस्तुरंगमः ॥१८६॥
वाजी वाहस्तुरङ्गोर्वा गन्धर्वः सैन्धवो हयः ।
प्रकीर्णः क्रमणः प्रोथी कुरटः सिंहविक्रमः ॥१९०॥
स्यान्मुद्गमाषपर्यायाशनार्थश्चामरी च वाट् ।
श्यर्थात्पुत्रार्थकः पीतिः केसरी हंस इत्यपि ॥१९१॥
मरुद्रथो वासुदेवस्तार्क्ष्यो वातायनो हरिः ।
शालिहोत्रश्चैकशफो दधिक्रा एतशोप्यरुट् ॥१९२॥
अभ्रः पतङ्गो हेषी स्यात्सुपर्णः श्येन इत्यपि ।
वीतिः सप्तिर्दधिक्रावा वातस्कन्धार्थ इत्यपि ॥१९३॥
स्थौर्यः पैद्वोऽव्यथिश्चापि[2] त्रिविधाः स्युरमी पुनः ।
श्रेष्ठमध्याधमाः सर्वे देशदेशसमुद्भवाः ॥१९४॥
अब्धिवाहीककम्बोजपारसीकवनायुजाः ।
सौराष्ट्रकोङ्कणोद्भूता आजानेयास्त उत्तमाः ॥१९५॥
तुरस्कारट्ट[3]कीरोरटक्कसिन्धुस्थलोद्भवाः ।
मध्यमाः प्राग्दक्षिण दिक्[4]सम्भवाः शाम्भला अपि १९६॥
सारस्वता अर्जलाश्च तङ्गणा अधमा अमी ।
वर्णैः शुक्लादिभिर्वर्णा ब्राह्मणाद्या यथाक्रमम् ॥१९७॥
मिश्रैर्मिश्रा विनीतस्तु साधुवाही जवाधिके ।
जवनो[5]थाश्वमेधीये ययुर्यायावरोऽपि च ॥१९८॥

---

१ कृष्टविस्तीर्ण[B] २ व्यधि[B] ३ कीरार[B] ४ शाम्भलाः[KC] ५ ने[KC]

किशोरोऽल्पवयस्कोऽश्वो रथ्यो वोढा रथस्य यः ।
पृष्ठ्यः स्थूरी प्रसूरेषा वाम्यश्वा वडवार्वती ॥१९९॥
गणे तु वाडवं तासां दुर्विनीतस्तु सूकलः ।
कश्यः कशार्हो हृद्रकावर्त्ती श्रीवृत्तकी हयः ॥२००॥
पञ्चभद्रस्तु हृत्पृष्ठमुखपार्श्वेषु पुष्पितः ।
पुच्छोरःखुर[1]पुच्छास्यैः सितैः स्यादष्टमङ्गलः ॥२०१॥
सिते तु कर्ककेकाहौ खांगाहः श्वेतपिङ्गले ।
पीयूषवर्णः सेराहः पीते तु[2]हरिमो हयः ॥२०२॥
[3]कृष्णवर्णस्तु खुङ्गाहः[4]कियाहो लोहितो हयः ।
आनीलो नीलकेपि स्यान्नियूहः कपिलो हयः ॥२०३॥
वोल्लार[5]श्चायमेव स्यात्पाण्डुकेशरवालधिः ।
उराहस्तु मनाक्पाण्डुः कृष्णवर्णो भवेद्यदि ॥२०४॥
सुरूहको गर्दभाभो[6]वोरुखानस्तु पाटलः ।
कुलाहस्तु मनाक्पीतः कृष्णः स्याद्यदिजानुनि ॥२०५॥
उकनाहः पीतरक्तच्छायः स एव तु क्वचित् ।
कृष्णरक्तच्छविः प्रोक्तः शोणः कोकनदच्छविः ॥२०६॥
हरितः पीतहरितच्छायः स्यात्स च हालकः ।
पुंगलः सितकाचाभो हलाहश्चित्रितो हयः ॥२०७॥

---

१ पुच्छा[KCB] पृष्ठा इति पाठस्तूचितः २ हरियो[BK] ३ कृष्णवर्णइत्यारभ्य मनाक्पाण्डुरित्येतदन्तं[K] पुस्तके नास्ति ४ किंयाहो[B] ५ पिमे[C] ६ वोरू[KC]

प्रोथोऽस्त्री नासिकाश्वस्य कश्यं मध्यमथापि च ।
शफोऽस्त्रियां खुरः पुंसि पुटो[1]विङ्गोथ वालधिः ॥२०८॥
अस्त्री पुच्छस्तु लाङ्गूलं[2]क्लीबे लाङ्गुलमित्यपि ।
स्त्रियां क्लीबे च लङ्गूलं पुच्छमस्त्री लजः पुमान् ॥२०६॥
स्यात्पिच्छोपि च तत्रैव वालहस्तर्थकः[3]पुमान् ।
ललाम च ललामं च लूम[4]वालस्ततः पुनः ॥२१०॥
अपावृत्तपरावृत्तलुठितानि च वेल्लिते ।
न द्वयोरश्ववृन्दे स्यादाश्वमाश्वीयमित्यपि ॥२११॥
निगालस्तु गलोद्देशे हेषा ह्रेषा[5]श्वनिःस्वने ।
त्रिष्वाश्वी[6]यं यदश्वेन दिनेनैकेन गम्यते ॥२१२॥
ऊर्ध्वस्थितिस्त्रियामस्य स्यात्पुला च पुलायिता[7] ।
प्रक्षरः प्रखरोपि स्यात्संनाहोप[8]जनं परः ॥२१३॥
खलिनोस्त्री खलीनोपि कवियं षण् कविः कवी ।
पञ्चाङ्गी कर्षणी चापि मुखपर्याययन्त्रणा ॥२१४॥
नेत्रपट्टे मक्षि[9]कात्रं कवराक्षमथापि च ।
भूषणे मुखपट्टः स्यात्तलिका तलसारणम् ॥२१५॥
दामा[10]जनं पादपाशश्चर्मदण्डे कशास्त्रियाम् ।
पल्याणमपि पर्याणं बन्धे कक्ष्यास्य कक्षया[11]॥२१६॥

---

१ विखो[B] २ क्लीबे इत्यारभ्य लङ्गूलमित्यन्तं[B] पुस्तके नास्ति ३ पुनः[B] ४ वाज[B]
५ स्वनिः स्वनः[BC] ६ यं[KC] ७ पि[B] ८ यं[B] ९ कत्रं[B] १० अनं[BK] ११ पा[B]

पदस्थाने[1]पादिके च पादाधारा[2]वथापि च।
पु[3]च्छाटिका पुच्छबन्धे खुरत्राणं खुरोपरि ॥२१७॥
बन्धने स्यात् खुराधस्ताल्लोहे त्राणे तु[4]नालकः।
तलत्रं स्याद्द्वयोररश्मिः क्लीबे प्रवपणं[5] स्त्रियाम् ॥२१८॥
कुशावक्षेपणी वल्गा क्लीबे धोरितवल्गिते।
स्त्रियां प्लुतिरिमे क्लीबे तेजितोत्तेरिते पुनः ॥२१९॥
गतयः पञ्च धाराः स्युस्तुरगाणां क्रमादिमाः।
तत्र धौरितकं धौर्यं धोरणं धोरितं च यत् ॥२२०॥
वभ्रुके शिखिकं क्रोडगतिवद्वल्गिते पुनः।
अग्रच्छायसमुल्लासात्* कुञ्चिताग्रं नतत्रिकम् ॥२२१॥
प्लुतिस्तु लङ्घनं पक्षिमृगगत्यनुहारकम्।
उत्तेजितं रेचितं स्यान्मध्यवेगेन या गतिः ॥२२२॥
उत्तेरित[6]मुपकण्ठमास्कन्दितकमित्यपि।
उत्प्लुत्योत्प्लुत्य गमनं क्रोधादिवाखिलैः पदैः ॥२२३॥
अस्त्रियां वाहनं पत्रं यानं युग्यं च धोरणम्।
परंपरावाहनं यत्तद्वैनीतकमस्त्रियाम् ॥२२४॥
अश्वारोहा अश्ववाहाः सादिनोऽथ निषङ्गिणः।
भटा योधाश्च योद्धारः सेनारक्षाश्च ते पुनः ॥२२५॥

---

१ पदिके[B] २ व[BK] द[C] ३ पुच्छ[KC] ४ नालकाः[B] लालकाः[C] -५ णे[KC]
६ मुपकण्ठमित्यारभ्य त्तद्वैनीतकपर्य्यन्तं[K] पुस्तके नास्ति।
* च्छायेतिपाठः सर्वेष्वादर्शेषु। कायेतिपाठः संभाव्यते।

सेनान्तः परिधिः पुंसि स्यादारभट इत्यपि ।
ये सेनासमवेताः स्युः सैन्यास्ते सैनिका अपि ॥२२६॥
ये सहस्रेण बलिनः साहस्रास्ते सहस्रिणः ।
अथ च स्यात्कञ्चुकोऽस्त्री कवचो जगरः पुमान् ॥२२७॥
वारवाणोऽपि च क्लीबे तनुत्रं वर्म दंशनम् ।
सकञ्चुकैर्मध्यधार्ये क्लीबे सारसनं पुनः ॥२२८॥
शीर्षकं तु शिरस्त्राणं शीर्षण्यं च शिरस्त्रकम् ।
नागोदरमुरस्त्राणं जङ्घात्राणं तु [1]मत्कुणम् ॥२२९॥
नाहुलं च तदेक स्यान्नालिका चाङ्गरक्षिणी ।
त्रिष्वितो ध्वजिनीपूर्वा आमुक्तः प्रतिमुक्तवत् ॥२३०॥
संनद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः ।
अपिनद्धः पिनद्धश्च दंशितश्चाप्यमी त्रिषु ॥२३१॥
दंशिताद्याश्चापि सत्त्वेप्यथ स्या[2]द्वर्मतागणे ।
अपि कावचिकं चाथ पद्गपत्तिपदातयः ॥२३२॥
पदातिकः[3] [4]पदगमः पदगः पदिकोपि च ।
पादातिगश्च [5]पादातः पादातिकपदाजयौ ॥२३३॥
पादातपदाजि[6]पापिक्यः शररातिरतः पुनः ।
पदाजिरथ[7]पादातं पत्तिपर्यायसंहतिः ॥२३४॥

---

१ मंखुणम्[B] २ द्वर्मता[B] ३ गः[KC] ४ पदा[KCB] पद्[S] ५ पादातपादतिक-पदातयः[S] ६ पायिक्य[C] यायिभ्यः[B] ७ पादान्त[BKC] पादातम्[S]

शस्त्राजीव आयुधिककाण्डपृष्ठायुधीयकाः ।
काण्डपृष्ठसहाये तु प्रतिष्कशप्रतिष्कषौ ॥२३५॥
यो बहून्योधयेदेकः स महातिरथः पुनः ।
दूरापाती दूरवेधी लघुहस्तार्थ इत्यपि ॥२३६॥
कृतहस्तः सुप्रयुक्तो विशिखः शीघ्रवेध्यपि ।
कृतपुङ्खोथापराद्धपृषत्को लक्ष्यतश्च्युतः ॥२३७॥
धनुर्निषङ्गपर्यायमत्वर्थप्रत्ययी पुनः ।
धनुर्धरोथ काण्डीरः काण्डवाञ्छक्तिहेतिकः ॥२३८॥
शाक्तीक एवं याष्टीकः पारश्वधिक इत्यपि ।
नैस्त्रिंशकोऽसिहेतिः स्यात्प्रासिकः कौन्तिकोऽपि च ॥२३९॥
चर्मी फलकपाणिः स्यात् पताकी वैजयन्तिकः ।
अनुप्लवः सहायश्च चतुराभिचरौ समौ ॥२४०॥
अग्रेसरोग्रे भविता पुरोगो नायकोऽपि च ।
पुरोगमः पुरोगामी[1]स चैवाग्राग्रतः सरः ॥२४१॥
मन्थरो वेगगमनो जङ्घालस्त्वतिवेगिनि ।
जाङ्घिको जङ्घाकरिकस्तरस्वी त्वरितो जवी ॥२४२॥
जवनः प्रजवो वेगी[2]जङ्घिलो जाङ्घ इत्यपि ।
अन्वत्यन्तंभृशंकाममेभ्यो गामी क्रमादयम् ॥२४३॥

---

१ चैका[R] २ जङ्घीनो[B]

अत्यन्तीनोऽनुकामीनः कामंगामीन इत्ययम् ।
स्यादुरस्वानुरसिले जेयो जेतव्यमात्रके ॥२४४॥
जेतुं शक्यस्तु जय्यः स्याज्जेतुं शत्रुं प्रयाति यः ।
अभ्यमित्रोभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि ॥२४५॥
ऊर्जस्व्यूर्जस्वलोत्यन्तबलपर्यायवत्यपि ।
विक्रान्तो जित्वरो जेता शूरो वीरश्च जिष्णुकः ॥२४६॥
संयुगे सर्वतः साधुः सांयुगीनः स्मृतश्च सः ।
रथस्वामी तु रथिको रथिनो रथिरो रथी ॥२४७॥
अथ सेना तु पृतना[1]वाहिनी वाहना चमूः ।
वरूथिनी च ध्वजिनी बलं सैन्यं च गुल्मिनी ॥२४८॥
अस्त्रियां कटकं चक्रमनीकं च चमुस्त्रियाम् ।
गलोर्गलः कुटः कोटः[2]कोटो दुर्गश्च पुंस्यमी ॥२४९॥
[3]पत्तिरेकरथैकेभा त्र्यश्वा स्यात्पञ्चपद्गमा ।
इतः स्युस्त्रिगुणैरङ्गैर्यथोत्तरमनुक्रमात् ॥२५०॥
क्लीबे सेनामुखं गुल्मोऽस्त्रियामपि गणः[4]पुमान् ।
वाहिनी पृतना चापि चमूः पुनरनीकिनी ॥२५१॥
अपीयं दशभिर्निघ्ना सेनाथाक्षौहिणीति सा ।
(१३७१२४४१०)
खनन्दजिनचन्द्राश्वगुणभूमिमिता रथाः ॥२५२॥

---

१ नीकिनी वाहिनि इति पाठः स्यात् २ कोठा[K] ३ पित्ति [B] ४ क्रमात्[B]

(४११२७४७०)
[1]गजाश्व खाश्ववेदाश्वरविचन्द्राब्धिभिः क्रमात् ।
(८५६२४५०)
सादिनः खशराब्ध्यग्नितर्कैषु वसु[2]षरिमताः ॥२५३॥
पत्तयो यत्र सा प्रोक्ता महाक्षौहिणिका बुधैः ।
व्यूहस्तु बलविन्यासो भेदा दण्डादयो युधि ॥२५४॥
प्रत्यासारो द्वयोः पार्ष्णिः सैन्यपृष्ठं प्रतिग्रहः ।
प्रतिग्रहोऽपि पुंसि स्यात्पार्ष्णी प्रत्यासरोऽपि च ॥२५५॥
मुखे रथा हयाः पृष्ठे तत्पृष्ठे च पदातयः ।
पार्श्वयोश्च गजाः कार्या[3]व्यूहोऽयं परिकीर्तितः ॥२५६॥
संपत्तिः संपदा संपल्लक्ष्मीः श्रीर्विपदा विपत् ।
विपत्तिरापद्दुःखार्था न द्वयोरायुधं पुनः ॥२५७॥
अस्त्रं शस्त्रं प्रहरणं हेतिर्वा नाथ तत्त्रिधा ।
पाणियन्त्रादिना मुक्तं तच्च शक्तिशरादिकम् ॥२५८॥
अमुक्तं शस्त्रि[4]कादिस्याद्यष्ट्याद्यंतु द्वयात्मकम् ।
अवलम्बः पुमान्दण्डो यष्टिश्च तरणिर्द्वयोः ॥२५९॥
मन्त्रप्रयोगजं शस्त्रमथ धन्व तु कार्मुकम् ।
शरासनं च कोदण्डं[5]सरासनममूनिषण् ॥२६०॥
स्यादस्त्रियां धनुः[6]षान्तं [7]धनुः पुंसि धनूः स्त्रियाम् ।
तूणता त्रिणता चापो[8]न स्त्री गाण्डीवगाण्डिवौ ॥२६१॥

---

१ बाजाश्च[B] २ संमिताः[B] ३ भ्यूहो[B] ४ का इत्येकमक्षरं[C] पुस्तके नास्ति
५ शरासन[KC] ६ सान्त[B] ७ धनूः[KC] ८ चापो[KC]

द्रुणासेष्वासगुणतः पुं क्लीबे त्वव्यधं[1] पुनः ।
प्रतिकायः पुमानस्याग्रगते कोटिरित्यपि ॥२६२॥
अटनी धनुषो मध्ये लस्तको ना गुणालयः ।
मौर्वी ज्या सिञ्जिनी जीवा न ना गव्या[2]गुणो द्वयोः ॥२६३॥
पतञ्जिका गुणा[3]सिञ्जा क्लीबे वाणासनं गुणः ।
गोधा स्त्रियां तलं क्लीबे सैव स्याद्बाहुपट्टिका ॥२६४॥
[4]क्लीबे लक्षं शरव्यं स्याल्लक्ष्यं वेध्यमुपासनम् ।
शराभ्यासः श्रमो योग्या खलूरी खुरलीति च ॥२६५॥
खलूरिका तु[5] तद्भूमिरवष्टम्भश्च सौष्ठवम् ।
[6]युग्या[7]गुणनिका ग्राह्या काण्डोऽस्त्री विशिखः पुमान् ।२६६।
सायकोऽजिह्मगो बाणः पृषत्कोपि शिलीमुखः ।
कलम्बो मार्गणो रोपः पत्री स्यात्खग आशुगः ॥२६७॥
स्याद्वार्द्ध्र कङ्कयोः पत्रो वाजः प्रदर इत्यपि ।
स्थूलदण्डो[8]विपाटः स्याद[10]स्त्रार्थात्कण्टकार्थकः ॥२६८॥
विकर्षः पत्रवाहश्च चित्रपुङ्खः शरः[11]खरुः ।
[12]सरः शरुर्मर्मभेदी वीरशङ्कुश्च लक्षहा ॥२६९॥
[13]कदम्बसायकादम्बा वाजी च स्यादिषुर्द्वयोः ।
प्रक्ष्वेडनो ना नाराचोप्यस्त्रं षण् सायकः पुमान् ॥२७०॥

---

१ स्व्य[B] २ गुणा[C] ३ सिञ्जा[B] ४ क्लीबेइत्यादिश्लोकः[K] पुस्तके नास्ति । ५ पि[B] ६ पुण्या[C] ७ गुणनिकांत्यात्ता[B] ८ द्वारः[KC] ९ विपाठः[BK] १० वृस्ता[KC] ११ स्वरुः[B] १२ शरोसरुः[B] १३ कदम्बःसायः कादम्बो[KC]

स्त्रियां[1]भल्लिश्च भल्ली च भल्लोऽपि स्यात्पुमानयम् ।
सर्वलोहे लोहतालः[2] प्रसरः काण्डगोचरः ॥२७१॥
निरस्तः प्रहिते बाणे तीरी[3]विजुलसायके ।
नालीका नलिकाक्षेप्याः कर्णिनो रुरुशीर्षकाः ॥२७२॥
स्त्रियां पुंसि विषाक्ते तु दिग्धो लिप्तो[4]ऽक्त इत्यपि ।
हस्तावापो हस्तमुष्टिग्राह्यबाणगणे पुमान् ॥२७३॥
शरमुष्टिः [5]पुच्छ[6]शीर्षे द्विफली पुंसि पुङ्खकः ।
बाणमुक्तिर्व्यवच्छेदो दीप्तिर्वेगस्य तीव्रता ॥२७४॥
खुरप्रोपि क्षुरप्रः स्यादर्द्धेन्दुप्रमुखा भिदाः ।
अप्यञ्जलिक इत्याद्या वाजः पक्षश्च पिच्छकः ॥२७५॥
प्रत्यालीढं तथालीढं विशाखं मण्डलं पुनः ।
वैकृतं दर्दुरं चैव[7]दश स्थानानि धन्विनाम् ॥२७६॥
शतघ्नी तु चतुस्ताला लोहकण्टकसंचिता ।
अयःशङ्कुरसंछिन्ना [8]शतघ्न्येव महाफला[10] ॥२७७॥
भुशुण्डी स्याद्दारुमयी वृत्तायः[11]कीलसंचिता ।
अपि गोलासनं क्लीबे बद्धोल्का नालिका स्त्रियाम् ॥२७८॥
उत्सृष्टा गोलकाः पुंसि कणयो लोहयन्त्रके ।
शरपर्यायोश्चयधिर्द्वयोः स्यादिषुधी स्त्रियाम् ॥२७९॥

---

१ भिल्लिकवभिल्ली च[B] २ लोहतलः[B] लोह नाला[C] ३ विज्जल[BK] ४ तु लिप्तकः[K] ५ पिच्छ[BK] ६ शीर्षे द्विकाले[CK] ७ स्थानान्येतानि[B] ८ अयः सैंकरसञ्छिन्ना[BK] ९ कला[B] १० फाल

[1]तूणी तूणा च तूणीर उपासङ्गो निषङ्गकः ।
चन्द्रहासस्त्वसिः पुंसि प्रवालः सायकोऽपि च ॥२८०॥
रिष्टिऋष्टिर्द्वयोः खड्गः पुंसि कौक्षेयकोऽपि च ।
भद्रासनो मण्डलाग्रः करवालः कृपाणवत् ॥२८१॥
तरवारिर्द्वयोश्चापि निस्त्रिंशः करपालकः ।
क्लीबे शस्त्रं विशसनो धर्मपालः प्रजाकरः ॥२८२॥
तीक्ष्ण[2]धाराधरो देवो व्यवहारो दुरासदः ।
प्रसङ्गी[3]रुद्रतनयः[4]शक्रो विजय इत्यपि ॥२८३॥
शिवंकरो मनुज्येष्ठः करालो च विशाग्रजः ।
गाढमुष्टिस्तीव्रमार्गः पुष्करी कोशवानपि ॥२८४॥
धाराधरो लोहसर्पो जयश्रीर्जगतोऽपि च ।
धर्मप्रचारो धाराङ्गः स्याद्धाराविष इत्यपि ॥२८५॥
पञ्चाशताङ्गुलैर्मुख्यः पञ्चविंशतिको परः ।
अनयोर्मध्यमानेन मध्यमः खड्ग उच्यते ॥२८६॥
अव्रणो योगरोपेतस्तिर्यग्भेदविवर्जितः ।
व्रणयुक्तोऽपि निस्त्रिंशो बिल्वकुण्डलपञ्जरैः ॥२८७॥
वर्द्धमानध्वजच्छत्रस्वस्तिकैश्च व्रणैः शुभः ।
मानहीनो विभिन्नश्च कुञ्चितो ध्वनिवर्जितः ॥२८८॥

---

१ तूणी इत्यक्षरद्वयं[K] पुस्तके नास्ति २ धाराधरो[B] ३ रूद्र[C] ४ शाक्रविजय[B]

नेत्र[1]चित्तविरोधी च वर्जनीयो दुरा[2]सहः ।
असिर्मरकतश्यामो योगरैः परिवर्जितः ॥२८९॥
बाणबाहुवनच्छेदी[3]वाणो यः शार्ङ्गिणा धृतः ।
कृपाणः शाद्वलश्याम[4]स्तबकी दीर्घयोगरः ॥२९०॥
अच्छेद्यो रोहिणीवाह्नः पौलस्त्येन धृतः पुरा ।
कुटिलैर्योगरैर्युक्तो वरकेसरसंनिभैः ॥२९१॥
मत्कुणः करवालोऽयं लोहवर्णेन वर्ण्यते ।
गोजिह्वापल्लवप्रख्यो योगरो यत्र दृश्यते ॥२९२॥
असिर्निरवहो नाम द्विषच्छेदकरः[5]परः ।
तरुणीकेशसंकाशः सूक्ष्मपाण्डुर्योगरः ॥२९३॥
सान्द्राङ्कः करवालोऽयं भद्रकालीकरस्थितः ।
राजजम्बूफलश्यामो वक्रपाण्डुर्योगरः ॥२९४॥
स्निग्धच्छायवपुः खड्गो वंगिवालोऽभिधीयते ।
असिः प्रत्यग्रजीमूतसकलश्यामलच्छविः ॥२९५॥
पाठीनत्वक्समाकारयोगरो य सुवालकः ।
केकिचन्द्रकसंकाशैर्योगरैर्निविडैः श्रितः ॥२९६॥
केवेल्लक इति ख्यातः[6]खड्गः खड्गभृतां मतः ।
तमालव्यालरोलम्बनिकुरम्बसमच्छविः ॥२९७॥

---

१ चित्र B २ सदः K ३ बाणाय: K ४ स्तवह्रीर्घं K ५ शुभः B ६ विख्यातः B

कौक्षेयकः स [1]भीताख्यः पुरुषाकारयोगरः ।
एरण्डबीजसंकाशयोगर[2]स्तार[3]पट्टकः ॥२९८॥
रामारोमावलीश्यामो न नमेन्नामितोप्यसिः ।
नववारिधरश्यामः पिङ्गकुञ्चितयोगरः ॥२९९॥
खड्गः षडालको नाम्न विषवज्रभयापहः ।
स्वर्णचूर्णनिभैः सूक्ष्मैर्योगरैः [4]स्वर्णपञ्जरः[5] ॥३००॥
मुक्ताचूर्णसमाकारैः ख्यातस्तित्तिरवल्लरः ।
योगरैः [6]कज्जलप्रख्यैः खड्गः स्यात् कालवल्लरः ॥३०१॥
वियच्छ्यामवपुः सारः स्वल्पपाण्डरयोगरः ।
सरोजिनीदलच्छायः[7]कोङ्गिः खड्गोऽभिधीयते ॥३०२॥
कदली शृङ्खली चापि यस्मिन्दृश्येत चान्तरा[8] ।
वर्णयोगरभेदेन नामान्येषां भवन्ति हि ॥३०३॥
कटीतलो न्युब्जखड्ग एकधार इली स्त्रियाम् ।
इलालिः करपालिः स्यादिलीलिरपि वा पुनः ॥३०४॥
करवाल्यथ मुष्टी स्त्री द्वयोर्मुष्टि[9]र्ग्रहस्थले ।
त्सरुश्च पुंसि ग्राह्योपि प्रत्याकारस्तु पुंसि च ॥३०५॥
दन्तेन निर्मितस्तत्र दन्तपालिरसेस्तु यत् ।
तिर्यग्भागद्वयं मुष्टावधोग्रान्तं नपुंसकम् ॥३०६॥

---

१ भीताख्यः २ त्सोरकः K ३ पट्टिकः B ४ स्वर्णपञ्जरैः B स्वर्णपिञ्जरैरिति पाठो भवेत् ५ अत्र पद्भ्यां पदोर्यद्धरणं पादबन्धः स उच्यते इत्यधिकं B पुस्तके दृश्यते तच्चो-परिशिष्टाविशुद्धभेदप्रकरणे C पुस्तके समुपलभ्यते तत्रैव चैतत्पाठः समुचितः K पुस्तकेत्वे-तच्छ्लोकार्द्धं न क्वाप्युपलभ्यते ६ कल्पल B ७ कोगिः B ८ तरान्तरा KC ९ गृह KC

भवेद्‌गञ्जनकं तस्मादधस्ता[1]द्धण्डिका स्त्रियाम् ।
अत्रिका तदधस्तिर्यग्भागद्वितयमस्य तु ॥३०७॥
मध्यभागस्ताडिका स्त्री शूकभागोग्रमप्यसेः ।
योगरस्तु गुणोत्कर्षे[2]खड्गाद्यश्चास्य कीर्त्तितः ॥३०८॥
परिवारः परीवारः कोशः कोषो नपुंसकम् ।
खड्गपर्यायसञ्ज्ञा[3]र्थंपिधानार्थकमित्यपि ॥३०९॥
प्रत्यग्रकोशः स्याद्‌घातोः[4] खड्गाग्राघातवारणे ।
खड्गस्य कटिबन्धार्था[5] वेधा स्त्री मेखलाफूटः ॥३१०॥
फलकोऽस्त्री फलं[6]फांटं खेटं क्लीबे[7]स्फुटं पुनः ।
अङ्गुतावरणे चर्म[8]दके संग्राहकोस्य तु ॥३११॥
मुष्टावथ कृपाणी तु[9]षुरी शस्त्री चुरीति च ।
[10]स्यातामसेर्द्धेनुपुत्र्यौ सैव स्यात्कोशशायिका ॥३१२॥
पत्रतो धेनुकाथ स्यात्पत्र[11]पांलस्तु सायता ।
भिन्दिपाले सृगः पुंसि[12]कुद्दन्ती [13]कुलमातृका* ॥३१३॥
अपि पत्रलता सा स्याद्दण्डोऽस्त्री लगुडः पुमान् ।
यष्टिर्द्वयोः स्त्रियां यष्टी काण्डोऽप्यस्त्री ततः पुनः ॥३१४॥

---

१ दधस्तार्धंडिका B २ खड्गाधश्चास्य B ३ र्थं B ४ द्रवःखड्गा B ५ बन्धार्था इति B पुस्तके वारद्वयं दृश्यते ६ फाटं K काण्डं B ७ स्फुटं BK स्फटं BG ८ वेके B ९ छुरी B १० स्यातामसेरित्यादिततः पुनरित्यन्तं सार्द्धश्लोकद्वयं K पुस्तके नोपलभ्यते ११ फाल B १२ कुट्टती १३ हुलमातृकेत्यभिधानान्तरेषु पाठः कुलमातृकेति सर्वेषु कल्पद्रुपुस्तकेषु ।

*फलपत्राग्रके हुलमिति हुलशब्दस्यार्थोऽग्रे दृश्यते ।

शक्ती स्त्रियां तथा शक्तिरमृतापि महाफला ।
कासूः खुरोत्तमस्तु स्यात्पट्टिशः पटिसोऽपि च ॥३१५॥
पालिरस्त्री कोटिरेता दीर्घान्ताः स्युः स्त्रियामिमाः ।
कुला[1]ग्रका तु चिरिका फलपत्राग्रके हुलम् ॥३१६॥
वराहकर्णोन्वर्थः स्याद्दुः[2]स्फोटस्तीक्ष्णधारकः ।
आरा[3]करो लोहदण्डश्चक्रं तु वलयाकृति ॥३१७॥
क्लीबे[4]सुसंचितमपि मुद्गरो द्रुघणो घनः ।
द्रुघनोऽपि च कुन्ते तु प्रासः प्राशः शलोऽपि च ॥३१८॥
शल्यमस्त्री पुंसि शङ्कुस्तत्र दीर्घायुधं पुनः ।
द्वयोः कुठारः परशुः पर्शुः परश्वधोऽपि च ॥३१९॥
परस्वधश्च स्वधितिष्टङ्कोऽपि पर्श्वधः कुठः ।
सर्वला शर्वलापि स्त्री सर्वली शर्वलीत्यपि ॥३२०॥
अस्त्रियां तोमरोथ स्यात्परिघः परि[5]पालनः ।
सर्वलोहमयं त्र्यग्रं[6]त्रिशूलं तु त्रि[7]शीर्षकम् ॥३२१॥
धनुः खड्गो गदाचक्रवज्रखट्वाङ्गतोमराः ।
यमदंष्ट्रा क्षुरीमूलं कर्त्तरी मुद्गरो हलम् ॥३२२॥
पाशोङ्कुशो भिन्दिपालः कणपः पट्टिशस्ततः ।
भुशुण्डी शङ्खमुसल[8]स्तरुगोफणपत्रणाः ॥३२३॥

---

१ अला B हुलाग्रकेति शुद्धं प्रतिभाति २ दुःस्फोट KC ३ कलो K कालो B
४ समंचित B ५ पातः B ६ त्रिशलं KC ७ शीघ्रकम् B ८ स्तरूणा C

दुःस्फोटमक्षिकाडाहृडभसाः करपत्रकः ।
हुलिः कुठारः परिघः कुन्तिः शक्तिश्च कर्त्तरी ॥३२४॥
यष्टिः शस्त्राणि षट्त्रिंशदमून्यायोधजीविनाम् ।
घाण्टिको घण्टिकः कोणः स्यादश्रोऽस्त्रश्च पुंस्यमी ॥३२५॥
सर्वाभिसारः सर्वाभीसारोभी[1] राजनात्परः ।
स च स्यात्सर्वसंनाहोऽभिसारोभिसरोऽपि च ॥३२६॥
दशम्यां यो विधिर्भूपे स च लोहाभिसारकः ।
यत्सेनयाभिगमनमरौ तदभिषेणनम् ॥३२७॥
यात्रा वज्याभिनिर्याणं प्रयाणं गमनं गमः ।
प्रस्थानं च प्रसरणं ननासारः प्रचक्रकम् ॥३२८॥
अभिक्रमे रणे यानमभीतस्य रिपुं प्रति ।
अभ्यमित्र्योऽभ्यमित्रीयोऽभ्यमित्रीणोभ्यरिं वजन् ३१५॥
स्यात्सुहृद्बलमासारः प्रचक्रं चलितं बलम् ।
प्रसारस्तु प्रसरणं तृणकाष्ठादिहेतवे ॥३३०॥
वैतालिका बोधकराः प्रातर्गे[2]याः स्तुतिव्रताः ।
आर्थिकाः सौखसुप्त्यर्था घाण्टिकाश्चाक्रिकाः समाः ।३३१॥
मागधा मगधास्ते स्युर्वन्दिनः स्तुतिपाठकाः ।
वैतालिकाद्या नग्नाः [3]स्युर्नग्नाचार्यस्तु हिण्डकः-॥३३२॥

---

१ नी B २ यास्तु B ३ नांनावीर्यास्तु B

भोगावली [1]वन्दिपाठो वसुकीटस्तु याचकः ।
संसप्तकास्तु समये समरादनिवर्त्तिनः ॥३३३॥
संशप्तका अथ रजः चोदः सान्ते उभे च षण् ।
रेणुस्त्रिषु रजः क्लीबे धूलिर्धूली स्त्रियामुभे ॥३३४॥
पुंसि पांसुश्च पांशुश्च व्रातकेतुः क्षितेः कणः ।
अस्त्री तूस्तमपि [2]चोदश्चूर्णः सर्वत्र चूर्णिते ॥३३५॥
संभारः पिञ्जलस्तु स्यात्समुत्पिञ्जो भृशाकुले ।
महासमरतूर्येऽस्त्री पटहाडम्बरौ समौ ॥३३६॥
ध्वजोऽस्त्री केतनं चापि क्लीबे केतुः पुमान् स्त्रियाम् ।
वैजयन्ती जयन्ती च पताका व्योममञ्जरी ॥३३७॥
कन्दल्यपि स्यात्कदली ककुत्स्त्री ककुदोऽस्त्रियाम् ।
विहिते पत्रवस्त्रादौ मीने चीनोऽस्त्रियामयम् ॥३३८॥
एषां वस्त्रे कोणभेदात् पताकाध्वजकेतवः ।
अस्योच्चूडावचूडाख्यावूर्ध्वाधोमुखकूर्चके ॥३३९॥
अहं पूर्वमहं पूर्वमित्यहंपूर्विका स्त्रियाम् ।
एवं चाहंप्रथमिका तथाहंश्रेष्ठिकापि च ॥३४०॥
दर्पादात्मनि या श्लाघा साहंपुरुषिका स्त्रियाम् ।
परस्परं योऽहंकारः सोऽहमहमिका स्त्रियाम् ॥३४१॥

---

१ वन्दिपागो B २ वर्णः BK

दण्डैर्दण्डैर्यद्भटानां वृत्तं युद्धमनुत्तमम् ।
दण्डादण्डि तदेवं स्यात्केशाकेशि नखानखि ॥३४२॥
मुष्टिभिर्मुष्टिभिर्युद्धं यद्वृत्त[1]मुष्टीमुष्टि तत् ।
शक्त्यृष्टिमुष्टियुक्तीनां गालिबाहूरुजानुनाम् ॥३४३॥
उन्नेयमेवं क्रमशो वृत्ते भाविनि वारणे ।
पराक्रमातिशायित्वहेतवे क्रियते भटैः ॥३४४॥
पानं यत्तद्वीरपाणमोजः पुंसि सहोऽस्त्रियाम् ।
सान्तमोजः सहः क्लीबे क्लीबे[2]सुष्म च शुष्म च ॥३४५॥
मृधमास्कन्दनं संख्यं समीकं साम्परायिकम् ।
जन्यं पुमान् सम्प्रहारो नदनुः कलहो रणः ॥३४६॥
समाघातोभिसंपातः संस्कारो दुर्दरः कलिः ।
[3]अत्यामर्दश्च संमर्दो विमर्दः संयुगोऽस्त्रियाम् ॥३४७॥
द्वयो राजिश्च समितिः[4]संयद्रांढिः समित्पुनः ।
अस्त्रियां समरं चापि[5] जन्यमाहरणं मृधम् ॥३४८॥
द्वन्द्वमास्कन्दनं पुंसि संगरश्च समाह्वयः ।
युदाहवश्च संघातः समुदायोऽपि विग्रहः ॥३४९॥
प्रघातोभ्यागमश्चापि[6]नन्दनुः संप्रहारकः ।
समर्यो भर आक्रन्दः पृतनाज्यौ स्त्रियां पुनः ॥३५०॥

---

१ मुष्टिमुष्टि B २ शुष्मन् B युष्मन् KC ३ अभ्या B ४ संयुद्राटिः B ५ जन्यं पूर्वमपि दृश्यते । जर्थं B ६ नदतुः K वन्दनः B

नियुद्धं बाहुयुद्धे स्यात्तस्य भेदा अमी मताः ।
मिथः कर[1]ग्रहे योद्धोः प्रसृष्टा स्यात्स्त्रियामियम् ॥३५१॥
द्विगुणीकृतदोर्मध्ये ग्रीवाकर्षोऽपि कण्टकः ।
अवधूतं तु पादेन प्रेरणं यच्च वक्षसः ॥३५२॥
शलाकयाङ्गुलीच्छिन्ना नखयष्टिर्हि सा मता ।
[2]पद्भ्यां पदोर्यद्धरणं पादबन्धः स उच्यते ॥३५३॥
दोर्द्वयाकर्षणं कीलः प्रकोष्ठहननं तु यत् ।
स वज्रपातोऽथ पुनस्तुमुलं संकुलं रणम् ॥३५४॥
क्ष्वेडा स्त्री सिंहनादो ना क्ष्वेडितं पुंनपुंसकम् ।
नासीरं त्वग्रयानं स्यादवमर्दस्तु पीडनम् ॥३५५॥
उत्पिञ्जलः काहलश्च हिल्लोलस्तत्र लोलता ।
तत्राव्यक्तो रवो[3] रोलो हलः कोलाहलः पुनः ॥३५६॥
प्रविद्रारश्च संग्रामो विदारः प्रविदारणम् ।
[4]संस्फेटश्चापि [5]संपानोऽनीकः संफेट इत्यपि ॥३५७॥
संपरावः समुदयः[6] संस्फोटः कलहोऽस्त्रियाम् ।
स्त्रियामाजी च[7]समितिः स्यात् क्लीबे सांपरा[8]यिकम् ॥३५८॥
आयोधनं च प्रधनं युद्धं संयत् स्त्रियां नरि ।
क्रन्दनं रोदनं रावो बृंहितं करिगर्जितम् ॥३५९॥

---

१ ग्रहो BK २ पद्भ्यामिति K पुस्तके नास्ति ३ रोलः वोलः KC ४ संस्फे KC
५ भिसंपातो BK ६ द्वायः C ७ समिती B ८ यकम् B

विस्फारो धनुषः स्वाने[1] विष्फारोऽपि निगद्यते ।
प्रसभं तु बलात्कारे छलितं तु छलं च षण् ॥३६०॥
अजन्यमस्त्री चोत्पात उपसर्गोऽथ कश्मलम् ।
मूर्छा मोहोऽथ विजयोऽभ्यवस्कन्दनमित्यपि ॥३६१॥
जयेऽभ्यासादनं च स्यादप्यथो वैरशोधनम् ।
वैर[2]शुद्धिः प्रतीकारः प्रतिकारस्ततः पुनः ॥३६२॥
विसंप्रोद्भ्यो द्रवद्रावौ वैरनिर्यातनं च षण् ।
स्त्री[3]शृगाल्यपयानं[4]षण् पलायनमपक्रमः ॥३६३॥
पराजयो रणे भङ्गो हारिर्हारी स्त्रियामिमे ।
कच्चास्पर्द्धा प्रतिस्पर्द्धा डम्बरे डिम्बविप्लवौ ॥३६४॥
परापर्यभितो भूतो गतो भग्नः पलायितः ।
पराजितेऽपि नष्टः स्याद् गृहीतदिक् तिरोहितः ॥३६५॥
कांदिशीको भयत्रस्तोऽप्यथ भेलस्तु कातरः ।
[5]पलंकटश्च हरिणपर्यायहृदयार्थकः ॥३६६॥
अधीरः कातरो भीरुर्भीलुश्चकित इत्यपि ।
[6]दरितश्चकितो भीतस्त्रस्तस्त्रासित इत्यथ ॥३६७॥
जिताहवो जितकाशी पराभूते पराजितः ।
विजितो निर्जितश्चाथ प्रस्कन्नपतितौ त्रिषु ॥३६८॥

---

१ विषारो KC २ शुद्धि B ३ शृङ्गा B ४ स्यात् B ५ पतंकटश्च B ६ दरितः धक्कितो B

कर्त्त[१]प्रमाथ संतापनिर्वापच्छेदसंज्ञयाः ।
कदव्यापाद[२]निर्ग्रन्थनिस्तर्हविशसा अपि ॥३६९॥
वर्द्धप्रमाप[३]प्रमथ[४]प्रवासप्रशमक्षणाः ।
पुत्रश्च कल्पनिर्यातनिषूदप्रमथास्ततः ॥३७०॥
अपासोद्वास[५] निर्वापा नमेभ्यः क्राथमारकौ ।
हिंसानिशुम्भः संज्ञप्तिरालम्भः परिवर्जनम् ॥३७१॥
विसारश्चापि विसरनिकार[६]निवर्हा अपि ।
तद्वन्निस्तर्हनिर्वापविकारेभ्यो णमित्यपि* ॥३७२॥
वधोविनिभ्यां वापः स्याद्विसरः प्रतिघातनम् ।
निवार्होऽपि स्त्रियां मारिः सर्वगो मरको स्त्रियाम् ॥३७३॥
अपि स्यात्तद्वत्प्रलयो दिष्टान्तोऽप्यत्ययोऽपि च ।
नाशः स्त्रियां पञ्चता स्यान्निधनं षण्द्वयोः पुनः ॥३७४॥
बहुभिः प्रबले शत्रौ प्रमत्ते सति हिंसनम् ।
[७]धाटी तु [८]धातकं डाकश्चौराणामभिसारके ॥३७५॥
स्त्रियां[९]लुण्ठा च लुण्ठश्च लूषिलूषी च[१०]लुण्ठनम् ।
भूमिपर्यायलाभार्थः सौप्तिकं रात्रिमारणम् ॥३७६॥

---

१ प्रथन B २ निग्रन्थ B ३ प्रथम B ४ विवासप्रशस B ५ आयासोद्वा B
६ निर्वहा B निवार्हा B ७ धारी B घटी B ८ धाटकं KB ९ लुण्टाच लुण्टिश्च लूपि B
१० लुण्टनम् K

* निस्तर्हयां, निर्वापयां, वि (नि ?) कारयां चेत्यर्थः ।

विशरणं मारणं हिंसा दिष्टान्तः प्रलयो वधः ।
स्यादाक्रन्दः पिञ्जरम्भौ प्रतिघः परिघः पुनः ॥३७७॥
परिसमाविसंभ्योऽपि घातो [1]घातस्ततः पुनः ।
संग्रामभयदा भूमिर्वीरा[2]शंसनमित्यपि ॥३७८॥
उत्क्रान्त्यवस्थो मठर उपधूपित इत्यपि ।
म्रियमाणस्य यः श्वासः स हराहर उच्यते ॥३७९॥
परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः ।
अपि प्रमीतस्त्रिष्वेते[3]चित्यचैत्ये तु न द्वयोः ॥३८०॥
चितिः खाटिश्चिता चित्या स्त्रियां ना चूडकः कटः ।
शिरोहीने कबन्धोऽस्त्री रुण्डो देहे क्रियान्विते ॥३८१॥
स्यात् श्मशानं पितृवनं[4] वीरभूः करवीरकम् ।
अन्तपर्यायशय्यार्थपर्यायं च शतानकम् ॥३८२॥
रुद्रपर्याय आक्रीडे संस्क्रियासंत्क्रिये समे ।
[5]शवपर्यायवेश्मार्थ[6]दाहृतः सरसोऽर्थकः ॥३८३॥
स्त्रियां स्यादुपकार्याथ कुणपः क्षितिवर्द्धनः ।
पञ्चावस्थः कटस्थालं शवोऽस्त्री प्रग्रहोऽपि च ॥३८४॥
उपग्रहः[7]करमरी ग्राहो वन्दी च बन्धने ।
प्राणोऽसुरसवः प्राणाः पुंसि भूम्न्येकभाषणे ॥३८५॥

---

१ धात K २ संशान KC ३ चित्यश्चैत्यं B ४ वीरभः B ५ शर BK ६ दहितः B
७ कंमरी B

पुरुर्षायुषकं यावदायुः स्याद्द्विगुणं ततः ।
द्व्यायुषं त्रिगुणं तद्वत्त्र्यायुषं च तिरायुषम् ॥३८६॥
जीवोऽसुधारणं चाथ क्लीबे द्वे आयुरायुषी ।
[1]पुंसि जीवितकालः स्याज्जीवातुर्जीवनौषधम् ॥३८७॥
कल्पद्रौ केशवक्लृप्ते फलिते नामभिः किल ।
भूमिस्कन्धे क्षत्रकाण्डः पञ्चमः सिद्धिमागतः ॥३८८॥

इति क्षत्रिय[2]प्रकाण्डः ।

विशो भूमिस्पृशो वैश्या ऊरुपर्यायजार्थकाः ।
अर्या उरव्या[3]गोरक्षाकृषिवाणिज्यजीविनः ॥१॥
स्त्रियां कृषिः स्याद्वाणिज्या न ना सत्यानृतं पुनः ।
तृष्णा धनपिशाची स्याद्वार[4]उद्धारमस्त्रियाम् ॥२॥
ऋणं[5]प्रमात्यं क्लीबे थ कुसीदं वृद्धिजीविका ।
*कुमुदो वाच्यलिङ्गः स्यात् कुमुदं च नपुंसकम् ॥३॥

---

१ आयुर्जीवित B २ क्षत्रियकाण्डः B ३ गोरक्षाः BO ४ उद्धार K ५ प्रमासं B

* कुमुदो वाच्यलिङ्गः स्यात् कुमुदं चेति पाठः स्यात् ।

[1]फलाम्लिकार्थप्रयोगे याच्चाप्राप्तं तु याचितम् ।
[2]यत्प्राप्तं नित्यमादापमित्यकं तदितस्त्रिषु ॥४॥
[3]आवप्रादुतमर्णस्तु प्रयोक्ताथ ग्रहीतरि ।
अधमर्णः कुसीदी तु वृद्ध्याजीवश्च वार्द्धुषः ॥५॥
कुसीदको वृद्धिपरः स्याद्द्वैगुणिक इत्यपि ।
मूल्यं क्लीबेऽस्त्रियां वस्नः पुमानर्घ[4] क्रयोऽपि च ॥६॥
अवक्रयो भाटकोऽस्त्री द्रव्यवृद्धौ कला स्त्रियाम् ।
मध्यस्थः प्राश्निकः साक्षी स्थेयोथो[5]कूटसाक्षिणि ॥७॥
मिथ्यापर्यायसाक्षी स्यादसूत्री सूत्रवर्जितः ।
कर्षकः कार्षकः क्षेत्री कृषाणश्चापि कु[6]र्षुकः ॥८॥
कृषीवलः कुटुम्बी स्याद्धली कैषिक[7] इत्यपि ।
लोष्टमस्त्र्यस्त्रियां लेष्टुर्दलनी दलिरुभे स्त्रियौ ॥९॥
महादलिश्च दंलनिर्द्वे द्वयोर्दलंनी स्त्रियाम् ।
स्यात्प्रतोदः प्रवयणं प्राजनं तोत्रतोदने ॥१०॥
भूदारणं खनित्रं स्यादवदारणमित्यऽपि ।
कुद्दालोप्यथ रम्भस्तु दण्डो दरकरोऽपि च ॥११॥
घासच्छेदी खुरप्रः स्यात्स्त्रियां दातिस्तु न द्वयोः ।
दात्रं लवित्रं तन्मुष्टौ वंठो[8]मत्यं समीकृतौ ॥१२॥

---

१ पला [B] मला [K] २ तत्प्राप्तं नित्यमादाय नित्यकं [B] यत्प्राप्तं निमयादापमित्यकमिति पाठः स्यात् ३ आविप्रा [B] आवप्रा चोत्तमर्णस्त्विति पाठः स्यात् ४ नर्घ्यं [KC] ५ कुट [B] ६ कर्षुकः [KC] ७ कृषीक [C] ८ सीत्यं [C]

स्याद्योक्त्रं योत्रमाबन्धो हल्यं[1] त्रिषु हलिः स्त्रियाम् ।
अपि नित्या निरीपं[2] च कालोऽस्त्री कूटकं कृषः ॥१३॥
कृषिको ना फलं क्लीबे न स्त्रियां हललाङ्गले ।
सीरो हालश्च भूम्यर्थदारणोऽथ स्त्रियामिमे ॥१४॥
ईशेषे सीरदण्डो ना सीता शीतास्य पद्धतौ ।
सीरपर्यायप[3]र्यर्था[4]निरीशं कूटकं च षण् ॥१५॥
कुशी कोशी लोहफले तदाधारे तु चवंढम्[5] ।
अस्त्री श्रेणिः खलो धान्यपीडने पशुसंततेः ॥१६॥
खलमध्यगते कीले[6]मेढिर्मेथिरुभे स्त्रियौ ।
अथ स्याद्द्विविधं धान्यं[7]शूकशिम्बिसमुद्भवम् ॥१७॥
तत्र शूकेषु प्रथमे शालयः पुंस्यमी पुनः ।
रक्तशालिर्महाशालिः कलमः शकुनाहृतः ॥१८॥
दीर्घशूको रोध्रशूक[8]स्तूर्णकः शङ्खमौक्तिकौ ।
लाङ्गलः कर्दमो लोहवालो महिषमस्तकः ॥१९॥
पुण्ड्रः पाण्डुः पुण्डरीकः[9] प्रमोदो गौरसारिवौ ।
[10]शारामुखः शीतभीरुस्तपनी[11]यः सुगन्धिकः ॥२०॥
पुष्पाण्डको दीर्घतालो महादूषकदूषकौ ।
पतङ्गकः [12]काञ्चनको हायनोप्यथ षष्टिकाः ॥२१॥

---

१ हल्यस्त्रिषु B २ निरोपं B ३ पर्यार्था B ४ निशोषं B ५ चर्वेद्रम् B ६ मेढि B ७ चेत्र B ८ स्तुर्णः शंखक B ९ कं B १० शीरा B ११ स्तपनी च B १२ काचनको B

गौरो महान् कुरवकः प्रमोदो[1]सनपुष्पकः ।
कुमुदः कालकः [2]पीतः केदारस्तूर्ण[3]काङ्कुभौ ॥२२॥
प्रायः स्युर्व्रीहयो व्रीहिर्महान्कृष्णो जतूद्भवः ।
सारामुखस्त्वरितको लावाक्तश्चीनशूकरौ ॥२३॥
पारावतः कुक्कुटाण्डो जालशालजदर्दुराः ।
कुरुविन्दो नन्दिमुखो हालो वरकराधनौ ॥२४॥
रक्तशूको रक्तशालिर्महतः शालितण्डुलौ ।
कलामाः कलमा भूम्नि नाकलम्बिश्च गारुडः ॥२५॥
शकुना[4]हृतपर्यायो राजहंसार्थ इत्यपि ।
दीर्घशूको लम्बशूके रोध्रशूकस्तु तत्समे ॥२६॥
शूकेथ तूर्णकः शीघ्रपाके[5]थाश्वयुजश्च सः ।
शङ्खशूकः शङ्खसमे मुक्तासदृशतण्डुले ॥२७॥
मौक्तिकोथो तैलिकः स्यात्तैलासी[6]चाथ लाङ्गलः ।
सीराकृष्टक्षितिभवः कर्दमः कर्दमोद्भवः ॥२८॥
लोह[7]तालेतिकठिनतण्डुलः पुण्ड्रकः पुनः ।
पुण्डरीकनिभः पाण्डुः पाण्डुरोप्यथ[8]गौरकः ॥२९॥
हरिद्राभः प्रमोदस्तु प्रह्लादश्चाथ सारिवः ।
[9]सारिवाभः पुण्डरीकपृष्ठः[10]श्वेतोत्पलोप्यथ ॥३०॥

---

१ शन[K] रान[B] २ पीतकेदार[B] ३ कांगुकौ[C] कांयुकौ[K] ४ द्ध[C] ५ को[B]
६ शी[B] ७ नालो[B] ८ गो[B] ९ शारीवाभः[C] सारिकाभः[B] १० पृष्ठ[KC]

सुरामुखः कृष्णमुख[1]तण्डुलोथ सुगन्धिकः ।
गन्धशालिरथोशीतभीरुःशीतविनाश्यपि ॥३१॥
तपनीयोऽथ पुष्पाण्डः स च कोमलतण्डुलः ।
स्यान्महामदकारी तु मह[2]रूषक इत्यपि ॥३२॥
दीर्घनालो लम्बनाले मदकारी तु रूषकः ।
स्वर्णशालिः काञ्चनः स्यात्पतङ्गः कुङ्कुमाकृतिः ॥३३॥
हायनः कुशवाकः स्या[3]द्घटप्रच्छोथ षष्टिकाः[4] ।
षष्टिरात्रेण ये क्षेत्रे परिपक्वा भवन्ति ते ॥३४॥
एवमेव व्रीहयोऽपि समुन्नेया यथाक्रमम् ।
श्यामाकः श्यामकोऽपि स्यादविपर्यायतः प्रियः[5] ॥३५॥
स्त्रीबीजः सुकुमारश्च तृणबीजोत्तमश्च सः ।
राजधान्यं पुनः क्लीबे क्षेत्रजो वनजश्च सः ॥३६॥
द्विविधो हस्तिश्यामोऽथ प्रियङ्गुः पीततण्डुलः ।
रागी च कङ्गुः कणिशो लाञ्छनो बहुकाणिशः ॥३७॥
स्यात्[6]स्त्रियां कंगुनी कृष्णा मधुका शौकिकाचसा ।
रक्ता पीता तु[7]शुमटी सैव स्यादथ चीनकः ॥३८॥
स्त्रियां स्यान्माधवी सैव काकपर्यायकंगुनी ।
[8]कोरदूषः कोद्रवः स्यादुद्दालो वनकोद्रवे ॥३९॥

---

१ मुखस्त[B] २ रुष[C] शेष[B] ३ द्घोटपुत्रे[BC] ४ का[KC] ५ त्रियः[KC] पुनः[B]
६ साया[B] ७ शमठी[B] ८ कौर[B]

मवनाङ्गो देशदेशसंभवो भिन्नजातिकः ।
श्यामाकः कोद्रवः[1]कंगुर्नीवारो मकरः कुली ॥४०॥
तृणधान्यान्यमून्येके सरागीण्यथ कञ्चुकी ।
धान्यराजस्तीक्ष्णशूको हयपर्यायवल्लभः ॥४१॥
यवो मेध्यान्नपर्यायो हविष्यः [2]शितशूककः ।
दिव्योऽक्षतस्तीक्ष्णशूकः पवित्र[3]स्त्यक्तुरित्यपि ॥४२॥
[4]स्तोकः स्तोक्यश्च हरिते द्विविधोऽपि प्रकीर्त्तितः ।
शूकमुण्डोऽशूकमुण्डो गोधूमः स च वंशजः ॥४३॥
वंशधान्यं वंशबीजो यवपर्यायसंभवः ।
गोधूमः सुमनो[5]पूपः क्षीरी निस्तुष इत्यपि ॥४४॥
रसालश्चाथ तद्भेदाः स्त्रियां नान्दीमुखीत्यपि ।
मधूली हंसवाजीककाष्ठकाद्याश्च[6]तद्विधाः ॥४५॥
बृहन्तो लघवश्चाथ यावनालः स्त्रियां पुमान् ।
दीर्घनालो यवनलः शिखरी[7]वृन्ततण्डुलः ॥४६॥
क्षेत्रेक्षुरिक्षुपर्यायपत्रो दीर्घशरश्च सः ।
योनली बीजपुष्पी च जूर्णा जूर्णिश्च जारिणी[8]॥४७॥
जारिर्जरिर्देवधान्यं[9]धवलेतरतण्डुलः ।
नक्षत्रकूरस्तारः स्याद्वृत्तो मौक्तिकतण्डुलः ॥४८॥

---

१ कुङ्गुर[C] २ सित[B] ३ त्रः सक्तु[BK] ४ तोकस्तोकमश्च[K] तोकस्तकमश्व[B] ५ मूपः[C] मूपः[K] ६ तद्विदाः[B] ७ वृत्त[K] वृत[B] ८ णि[B] ९ धवलोतार[K] धवले तार[B]

रक्तकुस्तुंवरो रक्ते[1]तूवरो वर इत्यपि ।
बृहती काण्डकणिशा श्वेतरक्तविभेदतः ॥४९॥
राजपर्यायजूर्णाह्वा वाजरिश्चाथ[2]वर्चेटः ।
मञ्चूको मकरो मल्लः[3]क्षुडोस्मिन्मणि[4]की स्त्रियाम् ॥५०॥
अस्त्री कणिशकिंसारु[5]सस्यशूकं नपुंसकम् ।
अथ स्याच्छिम्बिजं मुद्गः सूपमुख्यो रसोत्तमः ॥५१॥
भुक्तिप्रदो ह्यानन्दो भूफलस्तत्र चासिते ।
वासन्तेऽस्मि च लोभ्यः स्यात्सुराष्ट्रोत्थोथ पीतके ॥५२॥
प्रवेलशारदजया नीले हरितशाखिकौ ।
वसुर्वनाखुः[6]खण्डीरो हरिमन्थश्च धूसरः ॥५३॥
वनजे तु कुलीनः स्या[8]दुरकेऽपि निगूढकः ।
माषो बली बीजवरः कामार्थश्च पुरीषणः[9] ॥५४॥
वृषाकरो धान्यवीरः कुरुविन्दोऽपि मांसलः ।
पित्र्यो[10]बलाढ्यः काचराजपदात् माषो परो लघुः ॥५५॥
चणस्तु हरिमन्थः स्यात्कञ्चुकी कृष्णकञ्चुकः ।
बालभोज्यो वाजिभक्ष्यः सुगन्धस्त्रिविधश्च सः ॥५६॥
धूसरः श्वेतकृष्णश्च मकुष्टस्तु[11]मयुष्टकः ।
कृमी[12]लको वनमुद्गो वल्लीमुद्गोऽमृतोऽपि च ॥५७॥

---

१ तूम्बरौ[B] २ चर्चटः[B] चर्चेटः[K] ३ क्षुद्रो[B] द्रा[K] ४ का[B] ५ रू[B] ६ वायुः[KC] ७ क्षुक[B] ८ दूरको इति पाठः स्यात् ९ तनः[B] १० बलाग्रः । ११ मयुष्टकः[B] १२ कृमीयाको[B]

सूरो मसूरो मङ्गल्यो रक्तपर्यायदालिकः ।
पृथुकल्याण[1]गुडतो बीजः[2]कृष्णो वसन्तकः ॥५८॥
[3]कलायो मण्डचणको हरेणुश्च द्वयोः पुनः ।
सतीनकः[4]सतीलेऽपि [5]कलापश्चापि पुंस्ययम् ॥५९॥
शमनो नालकः [6]कण्ठी द्वयोर्लङ्का तु रूक्षणा ।
करा[7]ला[8]त्रिपुरापिस्यात्का[9]ण्डिका चात्मिका च सा ॥६०
आढकी तुवरी वर्णकरा वीरभुजा च सा ।
वृत्तबीजा पीतपुष्पा वंश[10]पर्यायसंभवा ॥६१॥
नान्दीमुखो राजमाषश्च[11]वलो[12]वर्वरो स्त्रियाम् ।
[13]पावकश्चापि कुल्माषः श्वेतवर्णोऽपरा स्त्रियाम् ॥६२॥
श्वेतवृन्ता कृष्णवृन्ता श्वेतादिवर्णभेदतः ।
कुलत्थिका रक्तवृन्ता कृष्णवृन्तः कुलत्थकः ॥६३॥
क्षवः[14]क्षुधाधिजननो मधुरः सुकुमारकः ।
वृत्तबीजो दीर्घशिम्बी चपलोप्यथ नेः परः ॥६४॥
पावः स्याच्छितिशिम्बिश्च[15]वल्ली बहुविधश्च सः ।
माध्वीकः श्वेतनिष्पावः स्यात्स्त्रियां मधुशर्करा ॥६५॥

---

१ गड[B] १ कृष्णो[B] ३ कलापो[B] ४ सतीना[B] ५ कलाय[B] ६ कंटीद्वयोलङ्का[C] कुण्ठीद्वयोलङ्का[B] ७ ल[B] ८ त्रिपुटेति पाठः स्यात् ९ ण्डी[KB] १० पर्यायि ११ श्रखलो[B] १२ वर्वटो[K] चर्वच[B] १३ यावक १४ क्षुताभि[BC] क्षुधाधि[K] १५ वल्लो[KC]

पलंकषा स्थूलशिम्बी वृत्ता मधुसिता सिता ।
नन्दिजः कटुनिष्पावः[१]कर्बुरो वनसंभवे ॥६६॥
काकाण्डोऽथ तिलो हव्यो देवर्षिपितृवल्लभः ।
होमधान्यं पवित्रं स्यात् पापघ्नः पितृतर्पणः ॥६७॥
पूतधान्यं जर्तिलस्तु वनजे स तु निष्फलः ।
तिलात्पेजश्च पिञ्जश्च स तु ज्ञेयश्चतुर्विधः ॥६८॥
गोमूत्रसंनिभः कृष्णः श्वेतः कर्बुर इत्यपि ।
वज्रपर्यायमुष्पार्थं[२]स्यात्तत्र तिलपुष्पके ॥६९॥
अतसी[३]पिच्छला देवी मदगन्धा मदोत्कटा ।
उमा क्षुमा हैमवती सुतीक्ष्णा नीलपुष्प्यपि ॥७०॥
[४]अकसी त्वा सुरी राजी तीक्ष्णगन्धा मधूलिका ।
पुंसि क्षवः क्षुतो रक्तसर्षपो राजसर्षपः ॥७१॥
पुंसि[५]क्षुधान्नभिजनः क्षुताभिजननः स च ।
राजिका कृष्णिका चाथ सिद्धः सिद्धप्रयोजनः ॥७२॥
सर्षपः साधनो भूतनाशनः सितसर्षपः ।
कटुतैलः सरिषपो गौरः सिद्धार्थ इत्यपि ॥७३॥
मङ्गल्योऽपि च केशारिरथ स्यात्तिलकल्कके ।
पललं तिलचूर्णं तु पिष्टकं तिल[६]किट्टके ॥७४॥

१ कड्डुरो^B २ थं:^KC ३ पिच्छिला^B ४ अतसी^B ५ क्षुधाभिजनन इतिपाठः स्यात् ६ कट्टके^B

पिण्याकः पुंस्यथ खलिर्निस्नेहस्तिलकल्कजः ।
कणिशं धान्यकोशोना स्त्रियां स्यात्सस्यमञ्जरी ॥७५॥
सस्यार्थाच्छीर्षपर्यायं न स्त्रियां शूकमित्यपि ।
श्लक्ष्णतीक्ष्णाग्रके चाथ शाल्याद्या निस्तुषीकृताः ॥७६॥
त्रिःकृत्वः कण्डिताः शुद्धास्तण्डुला अथ पुंस्यमी ।
बहुत्वे शालयो[1] भ्रष्टा लाजा अथ तथा यवाः ॥७७॥
धाना आर्द्रा व्रीहयस्तु भ्रष्टा अत्यन्तकण्डिताः ।
पृथुकश्चिपिटास्तेस्यु[2]र्गोधूमाः स्युस्तथाक्भ्यः ॥७८॥
लुंबिका[3]तुलुका भ्रष्टाः शिम्बिधान्यस्य शिम्बयः ।
अर्द्धस्विन्नास्तु कुल्माशाः कण्डनादिक्रियां विना ॥७९॥
शिविः शिंवी सिविः सिंवी सिवा[4]सिंवा शिमिस्त्रियः ।
धान्यस्त्मा[5]ता च कोशोऽथ समूहे धान्यसंभवे ॥८०॥
अपि स्तम्बकरिर्गुच्छो[6]वालस्त्रिष्वपि चास्त्रियाम् ।
[7]काण्डेऽफले पलालोऽस्त्री पलोथापि कडङ्करे ॥८१॥
वुसं क्लीबे वुसेरुः स्यादस्त्रियामथ पुष्कसः ।
पुंसि स्यादथ धान्यत्वक् तुषःपुंस्यथ च[8]स्त्रियाम् ॥८२॥
दालिर्दाली चणादीनां स्फोरो नरि यवोद्भवे ।
पिष्टे सक्तुः पूर्णाकः स्यादापूपः[9]परकोऽस्त्रियाम् ॥८३॥

---

१ भ्रष्टा इति स्यात् २ गौं[B] ३ उलुका[B] ४ शिंवा शिमी स्त्रियाम्[B] ५ नाव[B] माल[B] ७ काण्डफले[B] ८ चास्त्रियाम्[B] ९ पूर्णको[KC]

विकसो वापि गोधूमसंभवे समिता स्त्रियाम् ।
स्फोटे गोधूमजे [1]स्थूली कणिका यावनालजे ॥८४॥
चणोत्थे वेसवारो ना पिष्टं माषभवे न ना ।
सर्वं स्याच्चाक्रिकं चूर्णं शिलापिष्टे तु पिष्टिका ॥८५॥
त्रिष्वम्बुना [2]विना पक्को भ्रष्टः पुंसि भरूजकः ।
भरुजः [3]क्लेदितभ्रष्ट[4]उद्दूषः परिवाट्टिका ॥८६॥
खदिका स्त्र्यथ धानानां श्लक्ष्णचूर्णेषु सक्तवः ।
तत्र मन्थेऽ घृतमधुद्राक्षेक्षुरससमिश्रितः ॥८७॥
तस्मिञ्जलविमिश्रे तु चिक्कणो मस्तृणोऽपि च ।
दध्ना संमिश्रितं तत्र करम्भः स्यादतः परम् ॥८८॥
शिंबिधान्यं जलक्लिन्नं साङ्कुरं [5]मणिरूढकम् ।
त्रिषु रिद्धं त्वावसितमृद्धं वृद्धं समृद्धकम् ॥८९॥
प्रणीतमुपसम्पन्नं प्रशस्तं च सुसंस्कृतम् ।
धान्ये बृहति संपन्नमयोग्रं मुसलोऽस्त्रियाम् ॥९०॥
मुशलोप्यथ कण्डन्यामुदुलूभ्यां खलस्त्रिषु ।
स्यात् क्लीबे पवनं शूर्पं सूर्पं प्रस्फोटनं पुनः ॥९१॥
त्रिषु वस्तुनि तत्पूते शोधितं निर्बुसीकृतम् ।
फुल्लफालस्तु तद्वाते स्त्रियां क्लीबे तु चालनी ॥९२॥

---

१ स्थली[B] २ आमपक्के भ्रष्टं[B] ३ भक्तः क्लेदितो[B] ४ विदूषः परिवापिका[B]
५ परिरूढ[KC]

अस्त्रियां तितउ क्लीबे परीपवनमित्यपि ।
स्यात्तद्वत्पारिपवनं[1]पावीरश्चापि पुंस्ययम् ॥९३॥
प्रस्थोऽस्त्रियां स्त्रियां पाली पालिश्चापि स्त्रियामथ ।
स्यात्कटस्त्रिष्वलिञ्जो ना प्रसेवः स्यूत इत्यपि ॥९४॥
[2]कण्डोलः पिटकः पुंसि स्त्री शाला सूदपाकयोः ।
स्त्रियां रसवती तत्राध्यक्षः पौरोगवस्त्रिषु ॥९५॥
सूपकारो वल्लवः स्यात्सूदोप्यारालिकः पुंनः ।
गुणश्चौदनिकोथ स्याद्भक्षपर्यायकारके ॥९६॥
आपूपिकः[3]कान्दविकः क्लीबे[4]श्मन्तकमित्यपि ।
उदोध्यानं च धानं च ह्वानं षण् चुल्ल्यपि स्त्रियाम् ॥९७॥
तथा चुल्लिरपि ज्ञेया तद्वत्साधिश्रयण्यपि ।
अस्तिकाथ हसन्ती तु हसन्यङ्गारधानिका ॥९८॥
अङ्गारात्पात्री शकटी क्लीबेऽलातं तथोल्मुकम् ।
तत्सामिज्वलिते काष्ठे[5]सधूमेथ विधूमके ॥९९॥
अङ्गारेङ्गालो निर्वाणे कोकिलो लाहकोऽपि च ।
आष्ट्राम्बरीषौ द्वावस्त्री स्त्रियां कन्दुः[6]स्थितो नले ॥१००॥
घृतादिना[7]क्लेदिनि स्यात्कटाहस्त्रिष्वलिञ्जरः ।
अस्त्रियां पिठरं कुण्डं क्लीब आस्था[8]ल्युखे स्त्रियौ ॥१०१॥

---

१ पाटीर[KC] २ कडोलः[KC] ३ कादम्बिकः[B] ४ पूमान्तक[KC] ५ विधूमेथसधूमके[C] तत्सामीप्यादिपङ्क्तिद्वयं[K] पुस्तके नास्ति ६ स्थिते नले[B] ७ क्लेदिते[B] ८ ल्युके[B]

चरुः पुमान्स्त्रियां नन्दानन्दिरालूर्गलन्तिका ।
वर्द्धनी करकः पुंसि घटोऽस्त्री कलशो द्वयोः ॥१०२॥
कुम्भश्च कलसोऽपि स्यात्करीरोऽपि कुटोऽस्त्रियाम् ।
निपोप्यथ स्त्रियां पारी दोहनी रोहणीति च ॥१०३॥
तुम्बा निलिम्पा क्लीबे स्यान्निपानमपि वा स्त्रियाम् ।
अलिञ्जरो मणिश्चापि न द्वयोः स्यादुदञ्चनम् ॥१०४॥
करङ्को नारिकेलस्य कटाहः कुठरो द्वयोः ।
वर्द्धमानः शरावेऽस्त्री पुमाञ्शालाजिरोप्यथ ॥१०५॥
भृजीषं स्यादृचीषं च क्लीबे स्यात्पिष्टपाककृत् ।
कंसोऽस्त्री चषकः पानभाजनेपि स्त्रियां च षण् ॥१०६॥
स्थालं पात्रममत्रं स्यात् क्लीबेथापि स्त्रियां करिः ।
दर्वि[1]र्दर्वी कंविरपि दारुहस्तः कडच्छकः ॥१०७॥
तर्दूः स्त्रियां काष्ठलोही[2]शतर्द्धी स्यादथापरा ।
स्यात्[3]पल्लिका कुन्तलिका दध्यादिच्छेदिनी[4]तु या ॥१०८॥
अथ स्त्रियां कुतूः कृत्तेः स्नेहपर्यायभाजनम् ।
[5]सैवाल्पा कुतुपः पुंसि क्लृप्ता[6]ऽसंस्कृतचर्मणा ॥१०९॥
संस्कृतेन दृतिः पुंसि खल्लो स्यात्स्रुश्च चर्मणा ।
कंसपात्री चाथ मेथा मन्थः स्यान्मन्थदण्डकः ॥११०॥

---

1 कुवि[B]  २ शतर्द्धी KC  ३ पीलिका[KC]  ४ च[KC]  ५ सैव स्यात्कुतुपः[B]
६ आर्द्र[B]  ७ स्यात्कृत[B]

लुब्धस्तदर्गले तु स्यात्कुठरोप्यथ मर्कटी ।
स्त्रियां प्रत्यर्गले नेत्रं क्लीबे व्यावर्त्तनं च तत् ॥१११॥
मूलकन्दकरीराग्रफल[1]काण्डविरूढकैः ।
त्वक्पत्रकवकैरेवं शाको दशविधः स्मृतः ॥११२॥
स्व[2]दनं व्यञ्जनं क्लीबे तेमनं स्यादजामिकृत् ।
मूलकोऽस्त्री नीलकण्ठो मृत्क्षारः कन्दमूलकः ॥११३॥
हस्तिदन्तः शङ्खमूलो हरित्पर्णः सितोऽपि च ।
रुचिरोथ स्थूलमूलः स च चाणक्यमूलकः ॥११४॥
विष्णुगुप्तो महाकन्दो वालेयो मरुसम्भवः ।
शालाककटुकश्चापि कौटिल्यश्चाथ गृञ्जनः ॥११५॥
यवनेष्टः शिरामूलो ग्रन्थिमूलोऽपि वर्त्तुलः ।
शिखाकन्दः पिण्डमूलो[3]गजाण्डः पिण्डकः पुनः ॥११६॥
अथ षण्ड गर्जरं पीतमूलं स्यात्पीतकन्दकम् ।
सुमूलं स्वादुकन्दं च नारङ्गमथ शिग्रुकः ॥११७॥
हरिच्छाकः शाकपत्रः सुपत्रश्चोपदंशकः ।
बहुमूलो दशमूलः [4]कामलच्छद इत्यपि ॥११८॥
तीक्ष्णमूलो नीलशिग्रौ[5]तीक्ष्णगन्धो जनप्रियः ।
शोभाञ्जनस्तत्र कृष्णो रुचिराञ्जन इत्यपि ॥११९॥

---

१ काण्डापिकाढकैः B  २ खदनं व्यञ्जनं B  ३ गजाङ्गः B  ४ कामच्छादं B  ५ तीक्ष्णगन्ध इत्यारभ्य श्वेतशिग्रावित्यन्तं B पुस्तके नास्ति ।

मुखामोदः श्वेतशिग्रौ मुखभङ्गश्च रोचनः ।
सुमूलः श्वेतमरिचस्तीक्ष्णः स्यादथ रक्तके ॥१२०॥
मधुरो मधुशिग्रुः स्यात्सुगन्धो बहुलच्छदः ।
अपि केसरिपर्यायोप्यथ वेणुर्महाबलः ॥१२१॥
तृणकेतुर्यवफलो वंशः कर्मार इत्यपि ।
शतपर्वा दृढग्रन्थिर्मसूरोप्याढकीफलः ॥१२२॥
सारशून्यो मस्करः स्यात्त्वकसारोऽपि धनुर्द्रुमः ।
त्वचिसारोपि तद्वत्स्यात् तेजनो रम्भ इत्यपि ॥१२३॥
सच्छिद्राः कीचकास्ते स्युर्ये स्वनन्त्यनिलेरिताः ।
[1]भोरटं पूरणं वंशात्तन्मूलेथ तदङ्कुरे ॥१२४॥
अस्त्री करीरो वंशाग्रं तद्ग्रन्थौ तु द्वयोः परुः ।
पर्वा स्त्री काण्डसन्धिर्ना परुः पारु त्वगस्य तु ॥१२५॥
तमालः पुंसि चाथ स्यान्मृदुपर्वा तु वेत्रकः ।
योगिदण्डः सुदण्डोऽथ माकन्दी बहुमूलिका ॥१२६॥
मोदनी गन्धमूली स्याद्राका[2]विशदमूलिका ।
सौली वनहरिद्रायां वनारिष्टाथ[3] पेडका ॥१२७॥
[4]वन्यार्द्रकाथो रसोने लशुनो[5]रशुनोऽस्त्रियाम् ।
उग्रगन्धो म्लेच्छकन्दो भूतघ्नः षण्महौषधम् ॥१२८॥

---

१ मोरटंB २ विषम B ३ पेडुका C पैंडका B ४ वन्याद्राका B ५ लशुनोB

तत्र रक्ते दीर्घपत्रो यवनेष्टश्च गृञ्जनः ।
स्थूलकन्दः पलाण्डुस्तु तीक्ष्णकन्दश्च दीपनः ॥१२६॥
मुखाद्दूषणगन्धाह्वः शूद्रपर्यायतः प्रियः ।
स्त्रिया[1]मुल्ली कृमिहरो बहु[2]पत्रो विरोचनः ॥१३०॥
विश्वगन्धः स च श्वेतः पीतो राजपलाण्डुकः ।
यवनेष्टो दीर्घपत्रो राजपर्यायतः प्रियः ॥१३१॥
कण्डूरः सूरणः कन्दो मुकन्दः स्थूलकन्दकः ।
दुर्नामारिर्वृत्त[3]कन्दो वातारिः स्कन्दवर्धनः ॥१३२॥
रुच्यकन्दस्तीव्रकन्दः शूरकन्दः सितोपरः ।
सच वन्योप्यतोन्यः स्यादकण्डूरोऽपि पूर्ववत् ॥१३३॥
अम्लिका स्वल्पविटपा सुकुमाराम्ल[4]नामिका ।
अर्शोहिताम्लिकाकन्दः फलकन्दोऽपि चेष्यते ॥१३४॥
मुखालु[5]र्मण्डपारोही दीर्घकन्दः सुकन्दकः ।
स्यात्स्वादुस्थूलवत्सेभ्यः कन्दः स्यादथ रोमशः ॥१३५॥
पिण्डालुर्ग्रंथिलः पिण्डकन्दस्ताम्बूलपत्रकः ।
लोमशः पित्तकोपि स्यान्नानाकन्दोऽथ लोहिते ॥१३६॥
रक्तपिण्डो लोहितालुः कासकन्दस्तु कन्दिलः ।
विशालपत्रश्चालुः स्यात्कासालुः स्यादथापि च ॥१३७॥

---

१ मूल्ली B २ पुत्रो B ३ वृंत्र KC ४ नासिका KC नाडिका B ५ मंडपा B

कर्कोटिका तु कूष्माण्डी कुम्भाण्डी स्याद्बृहद्वला ।
मृदङ्गकुम्भपुष्पेभ्यः फला स्यात्सुफलापि च ॥१३८॥
गोरक्षतुम्बी गोरक्षी [1]नाधाला दुर्घटाह्वया ।
क्षीरतुम्बी दीर्घफला[2]परीवृत्तफला च सा ॥१३९॥
महाफला दुग्धबीजा दन्तबीजा पयस्विनी ।
[3]अलावुः स्यान्महावल्ली श्रमघ्नी सापि चेत्कटुः ॥१४०॥
स्त्रीक्ष्वाकुः क्षत्रियवरा[4]दीर्घबीजाथ भूद्भवा ।
[5]वल्मीकोत्था भूमितुम्बी शक्र[6]चापोद्भवा च सा ॥१४१॥
नागतुम्बी दिव्यतुम्बी देव्यथ श्यामबीजिनी ।
स्याच्चित्तमांसमधुरवृत्तेभ्यः फलिनी च सा ॥१४२॥
घृणायाश्चित्रवल्ली स्यात् कलिङ्गी रक्त[7]बीजका ।
चीनाकी चीनकी चीना तिन्दुकी तिन्दिसी च सा ॥१४३॥
कोशातकी स्वादुफला [8]जालिनी कर्कशच्छदा ।
कर्कोटकी पीतपुष्पा स्या[8]द्दीर्घधारयोः फला ॥१४४॥
धामार्गवः पुमान्[9]पोषानको बहुविधा च सा ।
अन्या हस्तिबृहद्ग्राम्यकोशातक्यथमण्डपी ॥१४५॥
पटो[10]लीदीर्घमधुरशिखिस्त्रादुभ्य एव सा ।
स्यात्पटोलं राजफलं तन्मूलं रम्यकं पुनः ॥१४६॥

---

१ नाधाला B २ परावृत्त B ३ स्यालावुः B ४ चरा B ५ वाल्मी B ६ पापो KOS ७ बीजिका B ८ द्दीर्घाधारयोः कला B ९ कोषातकी B १० पटोलीत्यादिपङ्क्तिद्वयं KOS पुस्तकेषु न दृश्यते ।

द्विविधा फलभेदेन काकाण्डी कोलपालिका
पर्यङ्कपालिका खट्वा खट्वाङ्गी दधिपुष्प्यपि ॥१४५॥
असिपर्यायशिम्ब्यर्थो सुशिम्बी[1]स्थलशिम्बिका ।
कारवल्ली तु कटुका चीरी[2]पत्रा कठिल्लका ॥१४६॥
सितपुष्टाम्बुसूक्ष्माभ्यां वल्ली कण्टफलाप्यथ ।
कर्कोटकी स्वादुफला मनोज्ञा च मनस्विनी ॥१४७॥
वोधना बन्ध्यकर्कोटी देवी कण्टफलाप्यथ ।
व्याघ्री कण्टलता व्याली मांसी चाखुंनखी मृगी ॥१४८॥
मार्जारिण्यथ विम्बी तु तुण्डी रक्तफला च सा ।
अधरोष्ठफला पीलुपर्णी सा रुचिरात्फला ॥१४९॥
कटुस्वादुफला द्वेधा ग्रामतः पविका तु[3]सा ।
मण्डपी कलिका[4]शिम्बी कलिनी नखपूर्विका ॥१५०॥
निःपावी स्याद्गुच्छफला फलिनी चिपिटा च सा ।
विशालाप्यथ वार्त्ताकी वृन्ताकी कण्टपत्रिका ॥१५१॥
कटालुर्मांसलफला शाकश्रेष्ठा च कटफला ।
महोटिका च निद्रालुर्वृन्ताकी महती च सा ॥१५२॥
चित्रफला कण्टकिनी जनप्रियफला पुनः ।
रक्तनीलमिश्रवर्णश्वेतेभ्यः फलसंज्ञका[5] ॥१५३॥

---

१ स्थूल^B २ पान्त्रा कटिल्लिका^B ३ च^B ४ शिम्बकिलिनी^B ५ ज्ञिका^B

वातिङ्ग[1]णोपि वार्त्ताकी वार्त्ताको वातिगो[1]पि च ।
वार्तापि हिङ्गुली भाण्टी वृन्ताको[2]वातिकश्च सः ॥१५६॥
वार्त्ताकुश्च द्वयोश्चैव भतकी[3]बङ्ककी च षण् ।
डङ्गरिः स्त्री[4]गण्डरिः स्याद्दीर्घेर्वारुश्च[5]गण्डरी ॥१५७॥
गजदन्तफला नाग[6]शुण्ड्यथो वृत्तकर्कटी ।
सा खरत्वक्फला[7]तिक्तषड्खाङ्कितसत्फला ॥१५८॥
मधुपाकफलाथ स्यादथच्छर्दालु[8]कर्कटी ।
पीनसा स्या[9]त्कटुदला त्रपुस्या संनिका पुनः ॥१५९॥
अपि लोमशकाण्डा स्याद्धस्तिपर्णी च मूत्रला ।
[10]कन्दालुस्त्रपुषी[11]पीतपुष्पी बहुफलापि च ॥१६०॥
सैव को[12]शफलापि स्यादथेर्वारुस्तु[13]कर्कटी ।
उर्वारुरपि चेर्वारुर्व्यालपुत्री च रोमशा ॥१६१॥
स्थूलतोयहस्तिदन्तपर्यायेभ्यः[14]फला च सा ।
शारदी[15]वासुकी स्निग्धफला बहुफला च सा ॥१६२॥
क्षेत्रकर्कटिका चैव मधुरार्थात्फलार्थका ।
सुचित्रा चिर्भिटी चित्रफलाथ क्षेत्रचिर्भिटी ॥१६३॥
[16]पथ्या पाण्डुफला चिर्भिटिका रोचनतः फला ।
मध्यपीतफला सैव चिक्कणान्तःफलद्रवा ॥१६४॥

---

१ वातिङ्गुणो^B २ वातिकः पुनः^B ३ वङ्ककं च^B ४ गण्डरीश्च^B ५ डङ्गरी^B ६ शुण्ड्य^B ७ तिक्ताषड्खाङ्कितमस्तका^B ८ नु^KC तु^B ९ स्याद्रक्तफला त्रापुस्या संत्रिका^B १० कण्टालु^B ११ दीत^K वीत^C १२ काराफला^B १३ श्च^B १४ कला^KC १५ वासुकी^B १६ पथ्येत्यादिपङ्क्तिचतुष्टयं^B पुस्तके नास्ति ।

कर्कट्यथ मृगाक्षी तु श्वेतपुष्पा मृगादिनी ।
मृगेर्वारुश्चित्रवल्ली कटुफला लघुचिर्भिटी ॥१६५॥
कपिलाक्षी बहुफला मृगचिर्भिटिका च सा ।
मृगेक्षणा चित्रफला देवी पथ्यामरूद्भवा ॥१६६॥
स्या[1]च्चीर्णमर्कटी त्वन्या राजकर्कटिका पुनः ।
श्रीफली[2]पूजितः पत्रफला बहुफला च सा ॥१६७॥
सुषवीकारवीक्षुद्रकारवीकन्दतोलता ।
अथापरे पत्रशाका वास्तूको वास्तुकोऽस्त्रियाम् ॥१६८॥
चक्रवर्त्ती राजशाकः शाकराजः पुनःस्त्रियाम् ।
दलाम्लं चुक्रवास्तूकं लिकुचं स्यादथ स्त्रियाम् ॥१६९॥
[3]दलाग्रलोहिता चिल्ली मृदुक्षारचिरार्थतः ।
पत्रा स्त्रियां वास्तुकी सा श्वचिल्ल्यथ सुपत्रिका ॥१७०॥
क्षुरपत्री पलाक्या स्यात्पालक्या ग्राम्यवल्लभा ।
मधुरा स्नेहपत्रार्था राजार्थाद्रिरिशाकिनी ॥१७१॥
पालक्या नागपालक्या मदशाकस्तु[4] मोहिनी ।
उपोदकी कलम्बी च पिच्छिला पिच्छिलच्छदा ॥१७२॥
विशाला मूलयोती तुवरिः शाकटपोतिका ।
क्षुद्रवल्ली कलंडुस्तु बोली स्यात्कम्बलालुका ॥१७३॥

---

१ स्याच्चीन B २ पूवितः B ३ दलांगू B ४ श्वमोदिनी B

जीवन्ती स्त्री रक्तनालस्ताम्रपत्रः सनालकः ।
शाकवीरो जीवशाको मेषोऽथ षण् सुगन्धिकम् ॥१७१॥
गौरं स्वर्णं गन्धशाकं कटु[1]श्रृङ्गाटमित्यपि ।
भूवारिजं वर्णशाकः शिग्रुपत्राणि जीवनी ॥१७२॥
तर्कारी वसुकः पद्मा वर्षाभूश्चैव फञ्जिका ।
तण्डुलीयकचाङ्गेरीकुसुम्भराजिसर्षपाः ॥१७४॥
कुडञ्जा तिन्दुकः फेडा त्रिपुटाद्याः क्रमादमी ।
पत्रशाका अङ्कुरितं[2]शिम्बिधान्यं विरूढकम् ॥१७५॥
भूमिस्फोटस्तु कवकं छत्राकं स्याच्छिलीन्ध्रकम् ।
सैन्धवोऽस्त्री शीतशिवं नादेयः[3]सितसिन्धुजम् ॥१७६॥
पटूत्तरं वरं शुद्धं धौतेयं च शिलात्मजम् ।
विमलं मणिमन्थं स्या[4]च्छिवं भाष्यं पचा स्त्रियाम् ॥१७७
सौवर्चलं हृद्यगन्धं[5]रुचिकं तिलकं पुनः ।
जरणं कृष्णलवण[6]मक्ष्यं कोद्रविकं पुनः ॥१७८॥
रुच्यं स्यादथ नीलं षण्[7]काचकौचोद्भवं पुनः ।
[8]गालक्यजं हृद्यगन्धं कुरुविन्दमथो विडम् ॥१७९॥
खण्डं द्राविडकं चारं[9]कृतकं धूर्तमासुरम् ।
सुपाक्यमथ शुभ्रं तु महारम्भं च[10]संवरम् ॥१८०॥

---

१ श्रृङ्गार^B २ शिम्बं^B ३ शितिशिग्रुजम्^B ४ च्छिम्बमाष^B ५रुचितं^C रुचकं^B
६ मत्स्य^B ७ काचः काचोद्भवःपुनः^B ८^B पालक्यजं^B ९ कवकं^B १०सांवरम्^B सावरम्^K

पृथ्वीजं गण्डलवणमथान्यल्लवणाब्धिजम् ।
शिवं वशिरमक्षीवं सामुद्रमथ[1]वार्मेयम् ॥१८१॥
[2]द्रौणेयं वारिजं चापि त्रिकूटलवणं पुनः ।
अथोषरं[3]सार्वगणं संसर्गलवणार्थकम् ॥१८२॥
स्यान्मिश्रं बहुलवण[4]मथौर्वसहूमैरिणम् ।
वसुपांशु च वसुकं पांशवं[5]रोमकं पुनः ॥१८३॥
उद्भवं चोषरमथ स्त्रियां शुण्ठी महौषधम् ।
कटूषणं कटुग्रन्थि नागरं विश्वभेषजम् ॥१८४॥
कटुभङ्गं विश्वमथ शृङ्गवेरार्द्रके पुनः ।
सौपर्णं गुल्ममूलं स्यात्कफारिकन्दरं[6] वरम् ॥१८५॥
सैकतेष्टमनूपोत्थं महीजमथ कोलकम्[7] ।
मरीचं मरिचं चापि मिरीचं मिरिचं पुनः ॥१८६॥
यवनेष्टं वृत्तफलं[8]शाकाङ्गं[9] धर्मपत्तनम् ।
[10]वल्लीजमूषणं वीरं पलितं कटुकं च तत् ॥१८७॥
कृष्णं मृष्टं सर्वहितं कफवैर्यथ तत्सिते ।
वश्यंकरं च बहुलं वालकं चन्द्रकं च तत् ॥१८८॥
धान्याकं धान्यकं धान्यं[11]धान्येयं धनिकं समम् ।
[12]उरूवरुनी वरी स्त्री छत्रधान्यं वितुन्नकम् ॥१८९॥

---

१ वार्भ्यम् B २ द्रोणेयं B ३ सावगणं B ४ बहुलवण B ५ रौमकं B
६ चरम् K ७ कौलकम् B ८ शाकाद्यं B ९ धर्बपत्तनम् KC धार्मपात्तनम् B
१० वलीज B ११ धानेयं B १२ उर्वरुन्नीवरी B

पुंसि क्लीबे शालियोग्यः सुगन्धिः सूक्ष्मपत्रकः ।
जनप्रियो बीजधान्यं[1] धान्यं बीजश्च वेधकम् ॥१६०॥
[2]मागधो जरणो दीप्यो जीर्णो जीरकजीरणौ ।
बह्निसस्योप्यजाजी स्त्री श्वेतायाम् तत्र वै कणा ॥१६१॥
कणजीरो दीर्घकणा सुगन्धा तु सितेतरा ।
बहु[3]गन्धा कालमेषी शाली काश्मीरजीरका ॥१६२॥
भेदिनीवान्तिशोधिन्यौ वर्षाकाल्यथ जीरिणी ।
स्यात्स्थूल[4]जीरके कृष्णो दीप्या काल्युपकुञ्चिका ॥१ ॥
पृथ्वी स्थूलकणा चापि[5]मनोज्ञा पृथुरित्यथ ।
मेथिनी दीपनी मेथी बहु[6]पत्रा च बेधिनी ॥१६४॥
वल्लरी चन्द्रिका गन्धफला मन्था च कौरवी ।
पीतबीजा मिश्रपुष्पा[7]कञ्चुकाप्यथ दीर्घका ॥१६५॥
[8]पृथ्वीका कवरी हिङ्गुपत्री चापि तथा पृथुः ।
दार्वी[9]पत्री दारुपत्री[10]विल्की वाष्प्यथ रामठम् ॥१६६॥
[11]आरूढगन्धं जरणं भेदनं सूप[12]दीपनम् ।
सहस्रवेधिरक्तोघ्नं सूपाङ्गं जन्तुनाशनम् ॥१६७॥

---

१ धान्यबीजं च B २ मामधोजरणत्यादितः पूर्वं मागधीकालमेषी च शालीकाश्मीरजीरकेति B पुस्तके दृश्यते ३ बहुगन्धेत्यादिपङ्क्तिद्वयस्य स्थाने बहुगन्धातिशोधिन्यौ वर्षाकाल्यथ जारिणीत्येकैव पङ्क्तिः B पुस्तके समुपलभ्यते ४ स्थूली B ५ मनोला B ६ पत्री च बोधिनी B ७ कुञ्चिका B ८ पृथिका B ९ तन्वी १० विल्की वाप्यथ C विल्वी बाष्प्यथ K ११ आगूढ B १२ धूपनम् B

उग्रवीर्यं च[1]वाह्लीकं हिङ्गुदीप्ता स्त्रियां पुनः ।
भूतारिरुग्रगन्धा स्यादथ स्यात् हिङ्गुनाडिका ॥१९८॥
पलाशा[2]जन्तुका वंशपत्री रामठिका च सा ।
स्यात्पिङ्गाह्वा सुवीर्याथ[3] शतवेधि तु काञ्जिकम् ॥१९९॥
स्त्रियां क्लीबे काञ्जिका स्त्री न स्त्रियामम्लसारकः ।
अवन्तिसोमोभिषुतो धान्या[4] म्लश्चारनालकः ॥२००॥
[5]कुल्माषाभिषवोपि स्यादुन्नाहं कुण्डगोलिकम् ।
रक्षोघ्नमपि कुल्माषं गृहाम्लं स्यान्महारसम् ॥२०१॥
कुञ्जनं कुलजं सिद्धसलिलं धातुनाशनम् ।
आरनालं च धान्याम्लं यवजं तु यवोदकम् ॥२०२॥
गोधूमजं तु सौवीरं तुषोत्थं तु तुषोदकम् ।
द्विरुत्तरं मधुगुडकाञ्जिकं मस्तु धान्य[6]कम् ॥२०३॥
चुक्रं शुक्रं तदेव स्यात्कणा मधुसमन्वितम् ।
मधुचुक्रं न स्त्रियां स्यात्त्रिषु तद्वति वस्तुनि ॥२०४॥
जम्बीररसधान्याम्ला[7]वामासं चौद्रभाण्डगौ ।
धान्याम्लसंज्ञमेवं स्यादथ वेध्याम्लवेतसः ॥२०५॥
अम्लो रसाम्लो राजाम्लः शतवेध्यम्लनायकः ।
अम्लसारो रक्तसारो भीमः स्याद्वीरवेतसः ॥२०६॥

---

१ बाल्हीकं[B] २ जतुका[B] ३ च[B] ४ म्लंचा[B] ५ कल्माषाभिभवो[KC] ६ धान्यगम्[K]
वामास[B]

गुल्मकेतुश्चापि भेदी वेधि स्याच्छङ्गमांसयोः ।
हरिद्रा[१]रञ्जनी स्वर्णवर्णा वर्णवती वरा ॥२०७॥
दीर्घरागा वर्णधात्री जनेष्टा[२]वर्णिनी च सा ।
पवित्रा[३]हरिता पीता वराङ्गी शोभना शिफा ॥२०८॥
गौरी विषघ्नी मङ्गल्या निशार्था च विलासिनी ।
शोभा जयन्ती लक्ष्मीः स्यान्मङ्गला सुभगाह्वया ॥२०९॥
भद्रा दारुहरिद्रान्या स्थिररागा पचंपचा ।
कटंकटेरी पर्जन्या दार्वी कामवती च सा ॥२१०॥
क्लीबे कालेयकं पीतदारु[४]कालीयपीतके ।
रसस्य समलस्येक्षोस्त्रिष्वे कांश[५]मलामलाः ॥२११॥
विकारः फाणितगुडमत्स्यण्डी खण्डशर्करः ।
शिशुप्रियोरुणः खण्डो रसजः फाणितं तु षण् ॥२१२॥
अपि क्षुद्रगुडोथस्याद्गुडः स्वादुश्च[६]मोदकी ।
मधुरो रसपाकोत्थ[७]क्वाथोऽथ क्षुद्रशर्करा ॥२१३॥
मत्स्यण्ड्यपि च मत्स्याण्डी मधुरा पिण्डशर्करा ।
सा खण्डशर्करा चैव गुडपर्यायसंभवा ॥२१४॥
मधुपर्यायधूल्यर्था शर्कराह्वाथ खण्डके ।
तवरांजः खण्डसारः खण्डजः खण्डमोदकः ॥२१५॥

---

१ रजनी[B] २ वरवर्णिनी [B] ३ परिता[B] ४ कीलीय[K] ५ मितामलाः[B] ६ मोदनः[B]
७ त्थः [B]

स सुधामोदकोऽथ स्यात्तवराजसमुद्भवे ।
खण्डे खण्डोद्भवोद्भूतः सुधामोदकतश्च सः ॥२१६॥
ससिद्धमोदकोऽपि स्यात्स चैवामृतसारजः ।
वर्त्तिकाश[1]श्चिवटकाः शर्करालिङ्गकादयः ॥२१७॥
विकाराः खण्डजाश्चाथ सिकता तु सितोपला ।
अहिच्छत्रो[2]पलाकास्याद्विकारा इक्षुजा अमी ॥२१८॥
यावनालरसोत्थोन्यो[3] नारिकेलीरसोद्भवः ।
खर्जूरीरसजस्तालीरसजोऽपि गुडोभवेत् ॥२१९॥
शर्करा चापि सा तु स्यान्मधुजा मधुशर्करा ।
शीता जात्या माधवी स्यात्सोक्ता[4] माक्षीक शर्करा ॥२२०
यावनाली हिमोत्पन्ना हिमानी हिमशर्करा ।
स्यात्क्षुद्रशर्करा क्षुद्रा गुडजा[5]जलबिन्दुजा ॥२२१॥
हैयङ्गवीनं[6]सरजं क्षीरोत्थं दधिसंभवम् ।
मन्थजं नवनीतं स्यात्सारोत्थाभ्यञ्जनं घृतम् ॥२२२॥
सर्पिरायुस्तैजसं स्यात् म्रक्षणं स्नेहनं पुनः ।
अमृताह्वं जीवनीयं पवित्रं नवनीतजम् ॥२२३॥
हौम्यं होमोत्तमार्थं स्या[7]दस्याघाराभिघा[8]रणौ ।
मले घृत[9]स्य विलयोथाख्री क्षीरं तु जीवनम् ॥२२४॥

---

१ श्चवटकाः B २ पलोका B ३ नारीकेला B ४ माक्षिक B ५ लच B ६ शार K
७ दस्त्र्या B ८ रकौ B ९ स्या B

दुग्धं प्रस्रवणं धारि सौम्यमूधस्यमित्यपि ।
पयोमृतं तन्नारीणां दुग्धेस्तन्यमतः परम् ॥२२५॥
अविरिशमविरीशमविसोढमवेः पयः ।
सूतक्षीरोपरिभवा घना संतानिका स्त्रियाम् ॥२२६॥
सद्यः प्रसूतायाः क्षीरं पीयूषोऽभिनवं पयः ।
पेयूषो मलिनं क्लीबे घनं स्यादथ[1]मोरटम् ॥२२७॥
आसप्ताहादथ दधि मङ्गल्यं क्षीरसंभवम् ।
विरलं तज्जलं मस्तु क्लीबेथो कट्वरः सरः ॥२२८॥
दध्युत्तरो दधिस्नेहो दध्यग्रमथ कूचिका ।
दध्ना तक्रेण च क्षीरे पक्वे स्याद्दधितक्रयोः ॥२२९॥
उत्तराथ क्षीरशरा शर्करा सहिता स्त्रियाम् ।
सुबद्धं घनवस्त्रेण दधिभावविवर्जितम् ॥२३०॥
पिण्डीभूतं यद्दधिस्याद्दधिपिण्डः स उच्यते ।
एवं तक्रे तक्रपिण्डो दधिदुग्धविमिश्रितम् ॥२३१॥
चतुर्जातसिताशुण्ठीमरिचैलासमन्वितम् ।
दृढेन शुभ्रवस्त्रेण गालितं केसरान्वितम् ॥२३२॥
मार्जिता सा रसाला स्याच्छिखरि[2]ण्यथ गोरसः ।
सरसं निर्जलं घोलं मथितं रसवर्जितम् ॥२३३॥

---

१ मोरखम्[kc] २ ण्यपि गोरसे[B]

पादाम्बुतक्रमर्द्धाम्बूदश्विद्द्वयांशाम्भसायुतम् ।
कालसेयं[1] द्वयं सार्द्धजलदण्डाहृतं क्रमात् ॥२३४॥
अरिष्टमस्त्रियां क्लीबे रसायनविलोडिते ।
अर्शोघ्नं सारणं श्वेतं कवचं चाथ मन्थरः ॥२३५॥
दधिचारोऽपि वैशाख[2]स्तक्राटः करघर्षणः ।
[3]मन्थो मन्थनमन्थानखजाः पुंसि नपुंसके ॥२३६॥
मन्थदण्डोऽथ तद्रज्जौ नेत्रं क्लीबे ततः पुनः ।
स्त्रियां भिस्सान्नमन्धः षण्जीवनं स्यात्प्रसाधनम् ॥२३७॥
कीलालमायुरशनमन्नाद्यं भोज्यमित्यपि ।
वाजः [4]परिस्रुतमपि[5] दीदिविश्चास्त्रियां पुनः ॥२३८॥
अस्त्रियामोदनः कूरो भक्तो दग्धे तु भिःसटा ।
दग्धिका चाथ मण्डोऽस्त्री भक्तमण्डे स्रवः पुमान् ॥२३९॥
स्राम[6] आचमनिः स्रामम्सारा: प्रस्नवः[7] पुनः ।
युक्तया संसाधिते सूदैः शिम्ब्यन्ने प्रहितोऽस्त्रियाम् ।२४०।
दालिः स्त्रियां पुंसि सूपो दाली स्याल्लवणान्विते ।
शूकशिंबिभवैर्द्धान्यैः संमिश्रो मिश्रितौदनः ।२४१॥
खिच्ची खिच्चे उभे स्त्रीत्वे सुसिद्धा[8] षड्गुणाम्भसि ।
स्त्रियां यवागूर्विरलद्रवाथ [10]कृशरोऽस्त्रियाम् ॥२४२॥

---

१ शेयं B २ स्तकारः KC ३ मथो B ४ परिस्तुत B ५ दीदिविः श्चास्त्रियां KC आचाम B ७ प्रसवः B ८ सासिद्धा B. ९ षड्गुणो B १० कृशरा ।

तिलतण्डुलमाषाणां या सा संयोगसंभवा ।
भूतौदनो दधिनिशा सक्तुलाजतिलान्वितः ॥२४३॥
[1]ब्राह्योदनो[2] यावकः स्याद्यवैः स्विन्नै[3]श्च निस्तुषैः ।
दलितैर्यवगोधूमैः स्थूला सा समिता स्त्रियाम् ॥२४४॥
वाटः पुमांस्तत्र गुडसंमिश्रे[4] कृसरः पुमान् ।
[5]तृसरस्तण्डुलैः सिद्धैः सगुडैः सोप्यथापरः ॥२४५॥
तप्ते घृते विनिक्षिप्य समितां भर्जितां मनाक् ।
ततस्तत्र विनिक्षिप्य खण्डं तेन समं पचेत् ॥२४६॥
कृसरं तं कसारं च कंसारमिति केचन ।
षोडशांशमिते दुग्धे तण्डुलानां पले शनैः ॥२४७॥
सम्यक् संसाधिते क्लीबे परमान्नं ततस्त्रियाम् ।
[6]क्षीरेयी पायसः पुंसि क्लीबे दुग्धार्थत[7]श्चरु ॥२४८॥
विलेपी घनसिक्था स्त्री स्विन्ना तोये चतुर्गुणा ।
पेया सिक्थयुता पथ्या चतुर्दशगुणेऽम्भसि । ॥२४९॥
अष्टादशगुणे तोये श्रितो यूषस्तु शिम्बिजैः ।
एवं मांसरसो मांसैर्मांसयूषस्तु सस्मृतः ॥२५०॥
सस्यात्कृताख्यो लवणकटुस्नेहादिनायुतः ।
अकृतः स्यात्तद्रहितोप्यथ काम्बलिकः खलः ॥२५१॥

---

१ पाक्यो[B] २ पावक[B] : ३ स्तु[B] ४ कृशरः[B] ५ तसर[B] ६ क्षीरेपि[KC] ७ चरुः[B]

फलमूलसमांशो यः कटवम्लो विमलो रसः ।
घृतेन मर्दितां तोयैः समितां मृदु*मर्दयेत् ॥२५२॥
मातुलुङ्गत्वचा खण्डपक्कमार्द्रकपूरितम् ।
विधाय पूपकं वृत्तं गन्धाढ्यं केसरान्वितम् ॥२५३॥
पक्त्वा सर्पिषि खण्डे[1]वगाहितो मधुशीर्षकः ।
समितां मधुदुग्धेन मोदयित्वा सुशोभनाम् ॥२५४॥
पचेद्घृतोत्तरे खण्डे न्यसेत्पक्वे नवे घटे ।
ततो मरिचपक्वैलाखण्डचूर्णावचूर्णितम् ॥२५५॥
कुर्यात्कर्पूरसंयुक्तं संयावमथ शष्कुली ।
शालूकमध्यसंयुक्तैः शालिकोद्रवतण्डुलैः ॥२५६॥
संपिष्टैस्तिलसंयुक्तैः लोहभ्रष्टैस्ततः परम् ।
स्थाली खर्परसच्छिद्रखर्परायसखर्परैः ॥२५७॥
अङ्गारैरपि पिष्टान्नपाकः स्यादथ भास्करी ।
चन्द्रिका रोटि कावृत्ता पिष्टखर्परसंभवा ॥२५८॥
महान्तो विस्तृताः सूक्ष्माः कर्परादिषु पाचिताः ।
स्युर्मण्डका मण्डलिनः स्थूलाः पूपलिका स्त्रियाम् ॥२५९॥
[2]अथाङ्गारेषु संपक्वः सूक्ष्मः सोङ्गारमण्डकः ।
अङ्गारकर्कटी स्थूलाऽथाप्यपक्वे तु पोलिका ॥२६०॥

१ खण्डेच[B] २ यथा [KC]

* भर्जयेदिति पाठः स्यात् ।

पिष्टवर्त्तिस्तु चमसी सूचिका सेविका पुनः ।
पक्वेऽपूपः पिष्टकः स्यात्पूपिका पूलिका स्त्रियाम् ॥२६१॥
पूपली चर्पटा पोली पूलिकावह्निपाचिते ।
पूपो घृतप्लुते पिष्टे समिता गुडवारिणा ॥२६२॥
घृते वाप्यथवा तैले चक्राकारा सुपिष्टिका ।
भर्जिता वृटको नास्या दवसेकिम इत्यपि ॥२६३॥
मिश्रा मण्डलिका पक्वा सम्यगायसखर्परे ।
घृतप्लुते पूरकः स्यादेवं मुद्गादिपिष्टजः ॥२६४॥
माषादि पिष्टका[1] सिद्धः सूर्णाकः पुंनपुंसकः ।
पिव्यां तु स्वेदपकायां[2] मिंडूरं स्याद्द्वयोरथ ॥२६५॥
अष्टा तुल्ये घृते तप्ते समिता तुल्य[3]शर्करे ।
अत्युष्णैरम्बुभिः पक्वा त्रिसरा[4]लप्सिका च सा ॥२६६॥
घृताक्तसमिता पूपं घृते तप्ते मनाक् शृतम् ।
लघुदीप्ता खरतरा घृतपक्वादधिष्टरः ॥२६७॥
चणचूर्णाष्टांशयुता सा पूरी तण्डुलोद्भवैः ।
पिष्टैर्घृतघनीभूतैर्गोलके समिताभवे ॥२६८॥
वेष्टिते स्थूलपूपाभे घृतपक्वे तु खाद्यकः ।
चन्द्रबिम्बाकृति तद्वत्फेणकं तु फणिज्जकम् ॥२६९॥

---

१ सिद्धस्तूर्णकः BO २ सिन्दुरं B ३ शर्करैः B ४ लुप्सिका O

अशोकवर्तिकापि स्यादथ पिष्टभवा भिदः ।
चणकप्रभवा पिष्टी पिष्टिका माषसंभवा ॥२७०॥
यवानीहिङ्गुलवणैः संयुक्ता गर्भसंस्थिता ।
पूरिकेव विधातव्या शमिका वेठिका तु सा ॥२७१॥
[1]कचूटिकाथ समिता [2]घृताक्ता द्राक्षया युता ।
एलालवङ्गकर्पूरमरिचैः परिवारिताम् ॥२७२॥
क्षिप्त्वा तु समितां लम्बपुटे[3]वेष्ट्य घृते पचेत् ।
ततः खण्डे न्यसेत्पक्वे गुह्यकः सोपि चास्त्रियाम् ॥२७३॥
सुशुद्धसमिताप्रस्थं विमर्द्य पयसा सह ।
यावत्तदम्लतां याति तावत्स्थाप्यं घटान्तरा ॥२७४॥
सच्छिद्रोदञ्चने न्यस्तं तप्ते घृतकटाहके ।
परिभ्राम्य परिभ्राम्य पातयेत्कुण्डलाकृतिम् ॥२७५॥
परिपक्वां सितालेहनिर्वापितकदुष्णकाम् ।
सा कङ्कणी कुण्डली स्यान्मोदको गोलकः पुनः ॥२७६॥
लड्डुकोपि च तज्ज्ञेयाः समितां परिशोधिताम् ।
घृते विपक्वामापाकं शीतलां सुसितान्विताम् ॥२७७॥
सघृतां गोलकीभूतां सघृष्टश्चमसीभवः ।
घृतेन मर्दितां तोयैः सम्बद्धां विपचेद्घृते ॥२७८॥

---

१ कर्चूरिका[B] २ घृतार्द्रा[B] ३ वेष्ट[K]

यथाकथंचित्समितां सुपक्कां परिचूर्णयेत् ।
सिताघृताभ्यां संयुक्ते दलजो दलमोदकः ॥२७९॥
घृतमर्दिततोयार्द्रसमितां चमसीघृते ।
पक्कां घृते सिता मिश्रा चमसी संभवाभिधाम् ॥२८०॥
अपूपचूर्णे सगुडे चूरीमोदक इत्ययम् ।
पिष्टे घृतगुडोन्मिश्रे लोपकोथ पुनर्घृते ॥२८१॥
गुडेनैकरसीभूते समितां तत्र पाचयेत् ।
गुडपर्पटकः स स्यात्पिष्टीं माषादिसंभवाम् ॥२८२॥
घृतपक्कां शर्कराढ्यां स तु माषादिमोदकः ।
जलेनालोडितं शालिपिष्टं खण्डविमिश्रितम् ॥२८३॥
धारापूपकवत्पाच्यं[1]वर्वरं चाथ चिक्कणम् ।
मसृणं कर्कशं[2] स्निग्धं पिच्छिलं विजिलं पुनः ॥२८४॥
विज्जलं स्याद्विजिविलमथ संमृष्टशोधिते ।
भावितं वासितं चापि धूपिते वस्तुनि त्रिषु ॥२८५॥
मसृणाद्यं तथोदश्वि[3]दौदश्वित्कमतोपि च ।
उदश्वितं स्याद्वटके त्ववसे[4]किममत्रियाम् ॥२८६॥
निकाथो[5] रसकस्तुल्यावथ स्याद्वेसवारकः ।
शुण्ठीमरिचवैदेहीधान्यकाजाजिदाडिमः[6] ॥२८६॥

१ वर्व्वरं B २ खार्च K ३ दौर्दश्वित B ४ त्ववसंकित K ५ निकाथरसकौ तुल्या B ६ दाडिमैः B

हिङ्गुसामुद्रसंयुक्त इत्येकोथापरः पुनः ।
स्विन्नमुद्गादिजः कल्कः सोन्यः स्याद्वेसवारकः ॥२८८॥
मांसं निरस्थि सुस्विन्नं पुनर्दृषदि चूर्णितम् ।
पिप्पलीशुण्ठिमरिचगुडसर्पिः समन्वितम् ॥२८९॥
ऐकध्यं पाचितं सम्यग्वेसवारोथ[1] सौरकः ।
सौरावो[2] मांसजरसः पक्वः सद्रवचन्दनः[3] ॥२९०॥
स वेसवारसंयुक्तः खानिष्को मांसजो रसः ।
वल्लूरं[4] परिशुष्कं स्याच्छुष्के मांसप्रदिग्धकम् ॥२९१॥
सस्नेहोथाग्निना भ्रष्टे[5] पुनर्भूतिर्भटित्रकम् ।
तथा[6] भरुटकं चाथ शूल्यं शूलाकृतं च तत् ॥२९२॥
पैठरं पिठरे पक्वमौष्यं स्यादुषया[7] श्टतम् ।
लवणोदकसंसिद्धस्वल्पमांसादिसंस्कृतः ॥२९३॥
बहुद्रवः स च[8] रसो दकलावणिकस्त्रिषु ।
दाधिकं चापि सार्पिष्कं [9]सौपिकं तैलिकं क्रमात् ॥२९४॥
दधिसर्पिःसूपतिलसंस्कृते वस्तुनि त्रिषु ।
रागश्च[10] खाडवो भिन्न एकोक्त्या राग[11][12]खाडवः ॥१९५॥
सितारुचकसिन्धूत्थैः सवृक्षाम्लपरूषकैः ।
जम्बूफलरसैर्युक्तो रागो राजिकया युतः ॥२९६॥

---

१ एकध्यं[KC] २ वारःस सौरकः[B] ३ सौरजो[B] ४ सहन ओदनः[B] ५ वल्लरं[K]
६ स्त्रियां भूति[B] ७ भरूजकं[B] ८ दूषया ९ रसःकदला[B] १० सीर्पष्कं[B] ११,१२ खाण्ड[B]

फलैरीषत्स्वादुरसैः कपित्थाद्यैः समन्वितः ।
स्वादुप्रायोम्लुलवणः सराग इति केचन ॥२६७॥
स्पष्टाम्लुलवणः स्पष्टः कषायलवणोषणम्[1] ।
अतिक्तः[2] खाण्डवः कौलः कपित्थाद्युपबृंहितः ॥२६८॥
सट्टकः सोमजोपि स्यात्प्रमोदो वर्द्धमानकः ।
विस्यन्दनोपि च स्त्री स्यात्पानकः पञ्चसारकः ॥२६६॥
वाटिकापर्पटाद्याः स्युः कर्चर्याद्याः प्रभक्षकाः ।
अशनाया बुभुक्षा क्षुत् क्षुधा स्याद्रुचिरित्यपि ॥३००॥
अस्त्रियां रोचकश्चापि तत्र लेपस्तु भोजनम् ।
जेमनं स्वादनं जग्धिर्वेल्लनं[3] चापि जक्षणम् ॥३०१॥
[4]स्वजनं भक्षणं भुक्तिरशनं विघसो घसिः ।
प्रत्यवसानमाहारः क्षुधापर्यायनाशनम् ॥३०२॥
लेहोदनं च तद्वत्स्यादभ्यवहार[5] इत्यपि ।
आदष्काणोप्यवष्काणो[6] निष्काणश्चाथ चर्वणम् ॥३०३॥
वस्तुनश्चूर्णनं दन्तैर्जिह्वास्वादस्तु लेहनम् ।
दद्व्यापारयुतं चोष्यं तद्धीनं पेयकं त्रिषु ॥३०४॥
ग्रासो गुडेरकः पिण्डो द्वयोर्गण्डोलको गुडः ।
क्लीबे स्याद्गिरणं गीर्णिगीर्णी तुल्ये गिरिर्गिटी ॥३०५॥

---

१ षसाम्[B] २ खाण्डवः[B] ३ वेल्भनं[B] ४ स्वदनमिति पाठः स्यात् ५ दभ्यवाहार[B] ६ आइ[B]

पृथगुक्त्यैकयोक्त्या च कशिपुः स्यान्न च स्त्रियाम् ।
भुक्त्याच्छादनयोरेवमथान्नेच्छाविवर्जिते ॥३०६॥
तृप्तस्तु सुहिता[1] घस्ताशितास्तृप्तिस्तु तर्पणम् ।
स्वादाघ्राणं च सौहित्यमथ पिण्डोलिका स्त्रियाम् ॥३०७॥
फेला फेली भुक्तशेषे विघसोनर्थथेन्दुकः[2] ।
सजग्धिश्च ससग्धिश्च तुल्यानां सहभोजने ॥३०८॥
सधर्मिणां तु संभूय भोजनं गणचक्रकम् ।
तुल्यपाने सपीतिः स्त्री तर्षे तातृट् तृषे स्त्रियौ ॥३०९॥
तृष्णोदन्या पिपासा स्यादम्बुपर्यायतः स्पृहा ।
वैकालिकं रात्रिभोज्ये[3] स्वल्पके न द्वयोरथ ॥३१०॥
भुक्तस्योपरि यद्भुक्तं तदध्यशनमित्यपि ।
श्रीरामणं कल्यवर्त्तः प्रातर्भोज्येल्पके पुमान् ॥३११॥
गुल्यस्तु मधुरो मिष्टः[4] स्वादुर्ज्येष्ठो मधूलकः ।
व्याप्नुवल्लिम्पतीवास्यं सचेक्ष्वादावथाम्लकः ॥३१२॥
खट्वरः पावनः* खट्टो दन्तपर्यायतः शठः ।
अम्लः समुखगः स्रावं स्वेदनं च विबोधनम् ॥३१३॥
दन्तानां हर्षणं दाहं विधत्ते मुखकण्ठयोः ।
स च जम्बीरनिम्ब्वादावथ सर्वरसः पटुः ॥३१४॥

---

१ घाता[KC] २ नर्थपेंडकः[B] ३ स्वल्पके[KC] प्यल्पके[B] ४ आरामणं[B] ५ पिण्डः[B]

* पाचन इति स्यात् ।

क्षारोपि लवणः सोपि प्रलिम्पन्विदहन्मुखम् ।
विष्यन्दयन्लाघवयन् क्लेदयन्सैन्धवादिषु ॥३१५॥
संदृश्यतेथ कटुको मुखपर्यायभेद्यपि ।
संवेजयद्यो रसनां निपाते तुदतीव च ॥३१६॥
विदहन्मुखनासाक्षि संस्रावी मरिचादिषु ।
दृश्यतेथापि तिक्तस्तु मुखपर्यायभेद्यपि ॥३१७॥
प्रतिहन्ति निपाते यो रसनं स्वदते न च ।
स चायं मुखवैशद्यशोषप्रह्लादकारकः ॥३१८॥
बिम्बादौ दृश्यते सोथ तूवरो रसनाशठः ।
तुवरोपि कषायः स्यादस्त्रियां स्यात्स चोत्तरः ॥३१९॥
वैशद्यस्तम्भजाड्यैर्यो रसनं योजयेद्रसः ।
बध्नातीव च यः कण्ठं स दृश्यस्तिन्दुकादिषु ॥३२०॥
अमीषां त्रिषु वस्तूनि भेदा एषामनुक्रमात् ।
मधुराम्लक्षारकटुतिक्ता एकैकमूनिताः ॥३२१॥
द्विकाः पञ्चदशैव स्युर्दशषट्त्र्येकसंमिताः ।
मधुरोम्लश्च लवणः कटुकश्चेति ते त्रिकाः ॥३२२॥
विंशतिर्मधुराम्लाह्व[1]लवणेभ्यः कटुः पुनः ।
तिक्तः कषायो गुल्याम्ललवणेभ्यः प्रयोजितः ॥३२३॥

---

१ ह्व B

तिक्तः कषायो मधुरकटुतिक्तेभ्य इत्ययम् ।
कषायो गुल्यलवणकटुकेभ्यश्च तिक्तकः ॥३२४॥
कषायो गुल्यलवणतिक्तेभ्योऽपि कषायकः ।
गुल्यक्षारकटुभ्योऽपि कषायश्च ततः पुनः ॥३२५॥
अम्लक्षारकटुभ्यः स्यात्तिक्तस्तुवरकस्ततः ।
स्यादम्लक्षारतिक्तेभ्यः कषायोम्लकटूत्तरः ॥३२६॥
तिक्तः कषायो लवणकटुतिक्तकषायकः ।
स्यात् क्षारकटुतिक्तेभ्यः कषायः स्युश्चतुष्ककाः ॥३२७॥
एते पञ्चदशैव स्युरतः षट्पञ्चकाः परे ।
मधुराम्लक्षारकटुतिक्तास्तिक्तकषायकौ ॥३२८॥
मधुराम्लक्षारतिक्तकषाया मधुरः पटुः[1] ।
कटुतिक्तकषायोऽपि मध्वम्लकटुतिक्तकः ॥३२९॥
कषायोथाम्ललवणमधुतिक्तेभ्य इत्ययम् ।
षट्क एको[2] रसाः षट् ते पुंस्येते स्युस्त्रिषष्टिकाः ॥३३०॥
रसभेदा दोषभेदा उन्नेया एवमेव तु ।
उद्वेगः क्रमुकः पूगश्चिक्का[3] स्त्री चिक्कणी न ना ॥३३१॥
स्यात्खेचरी तु मधुरा क्लीबे गौल्वं तु तैल्वलम्[4] ।
गुहागारगथो घोराटा[5] कठिनाप्यथ[6] वैटिलम् ॥३३२॥

---

१ कटुः[B] २ एते[B] ३ श्चिक्का[B] ४ तैक्कलम्[B] तल्वलम्[C] ५ घोटा[CK]
६ वैविलम्[B]

पूगीफलं वल्कगुणं[1] होसं पत्तनजं च तत् ।
नागपर्यायवल्ल्यर्था ताम्बूली भक्तपत्रिका ॥३३३॥
सैव सप्तशिरा पर्णलता स्यादथ तद्भिदः ।
श्रीवाटी चाम्लवाटी च पत्रसी च गुहागरी ॥३३४॥
अम्लसारा मालवोत्था मागधी होसणीति च ।
स्यादन्द्र[2] पुष्कलीचाथ चूर्णमस्त्रं सुधार्थकम् ॥३३५॥
कुटार्जुनकरञ्जार्क[3] शिलास्फटिकशुक्तिजम् ।
स्यात् खादिरस्तु खदिरसारः चोदोपि रङ्गदः ॥३३६॥
अथ क्वाथस्तु खदिररसोरङ्गः कषायकः ।
वाच्यलिङ्गस्तु सुरभि रामोदी[4] मुखवासनः ॥३३७॥
शुभवासनश्चापि[5] पुन[6] र्गुरुवासन इत्यपि ।
ताम्बूलं मिलितैरेभिर्वीटकं[7] त्रिष्वथापरम् ॥३३८॥
फलकन्दकरीरादिलवणेन विमिश्रितम् ।
हरिद्राराजिका[8] कल्ककटुतैलसमन्वितम् ॥३३९॥
तत्संधितं तु संधानमास्थानं वस्तुनि त्रिषु ।
शलाटुभिः फलैः शुष्कैर्मिश्रितैर्मधुरादिभिः ॥३४०॥
प्रयुक्तं[9] स्यादिदमपि संधान[10] मुपदंशकम् ।
कटुबीजा च वैदेही कोला दन्तफलोषणा ॥३४१॥

---

१ होसपनजं तथा[B] २ दिन्द्र ३ कुटार्जुनेत्यर्धं सर्वेष्वादर्शेषु शुभवासनइत्याद्यर्धानन्तरं दृश्यते ४ रामोदो[B] ५ शुम्र[B] ६ र्गरु[B] ७ कंत्रिष्वथेत्यादि कल्ककटु पर्यन्तं[B] पुस्तके न दृश्यते ८ हरिद्रेत्याद्यर्धद्वयं[K] पुस्तके नास्ति ९ इदमर्धं[K] पुस्तके नास्ति १० मुपदंशकः[B]

कृष्णोपकुल्या कारञ्जी स्पृतिः[१] स्यान्मागधी कणा ।
पिप्पली पिप्पलिस्तुल्ये ऊषणा[२] चपलापि च ॥२४२॥
शौण्डी च तैजसी स्थूलसूक्ष्मभेदादियं द्विधा ।
गजार्थात्पिप्पली छिद्रपिप्पली श्रेयसी च सा ॥२४३॥
दीर्घग्रन्थिर्वर्तुली[३] च क्लीबे चव्यफलं पुनः ।
सैंहली सर्पदण्डी च लम्बतन्ता च पार्वती[४] ॥३४४॥
प्रलम्बबीजा सर्पाङ्गी तीवनेत्रा[५] च जीवला ।
उत्कटा[६] कुरवीचापि क्षुद्रसूक्ष्म[७]वनार्थतः ॥३४५॥
पिप्पल्यर्था तदुत्थाथ[८] मूलं तु चटिका शिरः ।
ग्रन्थिकं पिप्पली मूलं कटुमूलं च शोषजम् ॥३४६॥
कोलमूलं कटुग्रंथिः सर्वग्रन्थिः कटूषणम् ।
सुगन्धिकं च पत्राढ्यं विरूक्षं ग्रन्थिलं पुनः ॥३४७॥
दीप्योऽस्त्रियां दीपकोऽपि यवसाग्रो[९] यवाग्रजः ।
यवजः पुंसि वातारिभूकदम्बश्च शूलहा ॥३४८॥
स्त्र्युग्रगन्धा दीपनी च यवानी चाथ चव्यकम् ।
कोलं स्त्रियां कटिकणा चविका गन्धनाकुली ॥३४९॥
वल्ली च कोलवल्ली स्याद्वशिरः कृकरः पुमान् ।
तीक्ष्णोथ पालका पाठी ज्योतिष्कः[१०]शूरदारुणौ ॥३५०॥

१ स्मृतिः[CK] २ ऊषणं तृफला[B] ३ वँचुली[B] ४ पर्वती ५ नेत्री[B] ६ उत्कुठा[B]
७ सूक्ष्मा[B] ८ तद्वन्या[B] ९ यवसाह्वो[B] १० ज्योतिष्यः[B]

अग्निर्व्याघ्राभिधश्चापि चित्रकः शंवरः कुटः ।
कृष्णो व्यालः कालमूलो मार्जारोप्यतिदीप्यकः ॥३५१॥
रक्ते रुद्रो गुणाढ्यः स्यान्महाङ्गश्चाथ गह्वरा ।
कपाली कैरवी मोघा कृमिघ्नी चित्रतण्डुला ॥३५२॥
वातारिस्तण्डुली चामि सैवोक्ता मृगगामिनी ।
तण्डुलीया विडङ्गापि त्रिष्वथोग्रातु मङ्गला ॥३५३॥
यचोग्रगन्धा गोलोमी जटिला लोमशा च सा ।
रक्तोघ्नी विजया भद्राथ श्वेता विजया च सा ॥३५४॥
तीक्ष्णगन्धा हैमवती मङ्गला दीर्घपत्रका ।
षड्ग्रन्थापि च मेध्याथ कुलञ्जस्तु कुलञ्जनः ॥३५५॥
गन्धमूलस्तीक्ष्णमूलोऽथैला तु लवली हिमा ।
निः कुटी निः कुटिरपि द्राविड्यल्पा त्रुटी[1] त्रुटिः ॥३५६॥
कपोतपर्णी बहुलगन्धा चैवोपकुञ्चिका ।
कायस्था चन्द्रिका चापि गोरङ्गी[2] महती तु सा ॥३५७॥
कपिस्था गोपुरा कान्ता घृताची गर्भसंभवा ।
सुरभित्वग्दिव्यगन्धा महैला त्रिदिवोद्भवा ॥३५८॥
रुद्रैला त्रिपुटा[3] पृथ्वी कल्पाप्यैन्द्री कुमारिका ।
[4]खरीका त्वजमोदापि वार्कटी हस्तिकारवी ॥३५९॥

---

१ त्रुटाB २ गौरङ्गीK कोरङ्गी अम ३ त्रिपुरा KC ४ खारीका KC

गन्धपत्री गन्धदला मयूरी वह्निदीपिका ।
शिखिमोदा प्रमोदाढ्या ब्रह्मकोशा च मोदिनी ॥३६०॥
फलमुख्या गन्धरता विशाला चाथ नन्दिनी ।
रेणुका कपिला कान्ता महिला राजपुत्र्यपि ॥३६१॥
हरेणुकायां[1] दुष्पुत्रा द्विजा रेणुर्हिमा धवा ।
धर्मिणी कपिला नृत्ता शान्ता हैमवती ह्युमा ॥३६२॥
अस्त्री रक्तापहं बोलं सौरलं[2] रक्त गन्धिकंम् ।
रसगन्धं महागन्धं सुरसं पिण्डकं विषम् ॥३६३॥
निर्लोहं वर्वरं मुण्डं विश्वं गन्धरसं पुनः ।
विश्वगन्धं व्रणारिः स्यात् स्मृत्याह्वमथ दुर्लभः ॥३६४॥
कर्चूरो द्राविडः काशो जटालो गन्धमूलकः ।
वेधमुख्यो गन्धसार[3]स्तवक्षीरं तु तालजम् ॥३६५॥
गोधूमजं पिष्टिकोत्थं पवनं[4] तण्डुलोद्भवम् ।
वनगोदुग्धजं चापि[5] पयः क्षीरमथापि च ॥३६६॥
तालीसपत्रं तालीसमन्नाद्यं च शुकोदरम् ।
धात्रीपत्रं चार्कवेधं करिपत्रं तमाह्वयम् ॥३६७॥
तालं नीलाम्बरं [5] नीलं तुङ्गा तु [6] वंशरोचना ।
क्षीरी वांशीच शुभ्रापि वनेन्दुर्वंशशर्करा ॥३६८॥

१ हरेणुका पाण्डुष्पुत्राणु हरेणुका पाण्डुपुत्रीB २ सौरलं रत्नB ३ सारः स्तवKC यवनंB ५ वापि नीलंचरं B ६ तुङ्गनुर्वंश K

मञ्जिष्ठा हरिणी रक्ता गौरी योजनवल्ल्यपि ।
मङ्कला विकसा पद्मा रोहिणी कालमेषिका ॥३६९॥
भंडी चित्रलता चित्रा चित्राङ्गी जननी[1] च सा ।
मण्डूकपर्णी विजया रागाढ्या[2] रक्तयष्टिका ॥३७०॥
ज्वरहन्त्र्यरुणा छत्रा भण्डीरी[3] वस्त्रभूषणा ।
रागाङ्गी चाभिमण्डीर[4]लता नागकुमार्यपि ॥३७१॥
सिंहली योजनी कौन्ती चोलो[5] ना स चतुर्विधः ।
लाक्षा खदिरिका रक्ता रङ्गमाता पलंकषा ॥३७२॥
जतुरस्त्री कृमिघ्नी स्त्री द्रुमार्थादामयार्थकः ।
दीप्तिः पलाशी जतुका जतूका[6] गन्धमादिनी ॥३७३॥
पित्तघ्नी स्याद्द्रवरसा लक्तको मुद्रिणी च सा ।
निर्भर्त्सनो जतुरसो जननी जनकार्यपि ॥३७४॥
चक्रवर्त्तिनी[7] संघर्षा लोध्रो रोध्रश्च शांवरः ।
हेतुपुष्पः[8] काण्डचीलस्तिलको हस्तिलोध्रकः ॥३७५॥
तिरीटस्तिलको भिल्लतरुश्चाथ बृहद्दलः ।
कटुकः पट्टिकारोध्रः[9] पट्टी लाक्षाप्रसादनः ॥३७६॥
वल्कलोध्रो बृहद्वल्कः शीर्णवल्कोऽक्षिभेषजम् ।
मालवो[10]जीर्णबुध्रोऽपि वह्निपुष्पी तु धातकी ॥३७७॥

---

१ जघाननी K २ राथा K E ३ भण्डारी K E ४ चापि भण्डीरेति पाठःस्यात् ५ चाळो B ६ जंतूका K संब्वेषा B ७ सघर्षा K ८ हेतK B ९ रोध्रा १० मालवः भ्रम

अग्निज्वाला मद्यपुष्पा कुञ्जरा मद्यवासिनी ।
धाविन्यपि सुभिक्षा स्याद्बहुपुष्पा च पार्वती ॥३७८॥
गुच्छसंघादिपुष्पान्ता कुमुदा[1] कुञ्जराप्यथ ।
स्यात्समुद्रार्थोत्तरग[2]फलपर्याय्यथो वृकी ॥३७९॥
श्रेयसी स्वापनी[3] पाठा प्राचीना पापचेलिका ।
[4] अम्बष्ठा पथिका तिक्ता बृहत्तिक्ता च दीपनी ॥३८०॥
एकाष्ठीला विद्धकर्णी कुचेली शिशिरा करा ।
वरतिक्ता वृत्तपर्णी चूषा[5] देवी च मालवी ॥३८१॥
कटुका जननी तिक्ता रोहिणी शकुलादनी ।
मत्स्यपित्ता च चक्राङ्गी शतपर्वा व[6]सादनी ॥३८२॥
तत्र कृष्णा काण्डरुहाप्यरिष्टा कटुरोहिणी ।
आमघ्न्यरिष्टा केदारकटुः कट्वञ्जनी[7] कटुः ॥३८३॥
अशोकरोहिणी चापि महौषध्यथ भङ्गुरा ।
विरूपातिविषा श्वेतकन्दा विश्वा महौषधी ॥३८४॥
विषरूपा श्यामकन्दा शृङ्गी श्वेतवचारुणा ।
उपात्र प्रत्यो[8] विषाथ सुगन्धिर्ग्रन्थिला हिमा ॥३८५॥
कुरुविन्दी[9] भद्रमुस्ता वाराही क्रोडवल्लभा ।
गुन्द्रा कसेरुर्भद्रापि मेधा[10]ह्वास्यात् द्वयोरपि ॥३८६ ॥

---

१ कुमुदेति पदं पुस्तके न दृश्यते B २ तरङ्ग B ३ स्थापनी K E ४ अम्बष्ठेत्यर्धं-द्वयं K पुस्तके न दृश्यते ५ अवषा K E ६ वसादिनी B ७ कट्वञ्जनी K B ८ पत्योरितिपाठःसर्वत्र ९ विन्दा १० मेधाह्वा

गाङ्गेया[1] वनजा राजकसेरुः कच्छजापि सा ।
अन्या नागरमुस्तास्यात्सैव प्रोक्ता घनार्थका ॥३८७॥
नगरोत्था च चक्राङ्का पिण्डमुस्ता कलापिनी ।
नादेयी[2] शिशिरापि स्याच्चूडाला वासकेसरा ॥३८८॥
ध्वाङ्क्षयुच्चटा कचरुहा मधुकं तु मधुस्रवा ।
मधुवल्ली मधूकं षण् यष्ट्याह्वं यष्टिकामधु ॥३८९॥
अथान्यत् क्लितनीयं स्यात् क्लीतनं[3] मधुवल्ल्यपि ।
शोषा[4]पहा मधुरसा सातिसौम्या मधूल्यपि ॥३९०॥
भार्गी[5] गर्दभवल्ली स्यात फञ्जिकाङ्गारवल्लरी ।
सुरूपा भ्रमरेष्टापि शक्रमाताथ मूलके ॥३९१॥
वीरं पुष्करमूलं स्यात् पौष्करं पद्मपत्रकम् ।
सारिपद्मं ब्रह्मतीर्थं शृङ्गी तु वनमूर्द्धजा ॥३९२॥
कुलीरशृङ्गी चक्राङ्गी घोषा चण्डा कलिङ्गका ।
महाघोषा चेन्दुखण्डा कर्कराह्वा[6] लताङ्ग्यपि ॥३९३॥
निकुम्भो तु श्योनघण्टा नागस्फोता[7] च रेचनी ।
भद्रा[8]रूचा पवित्रा स्यादनुकूला विशोधनी ॥३९४॥
एरण्डफलपत्रापि विशल्या तरुणीत्यपि ।
उदुम्बरदला कुम्भी साथ केशरुहापरा ॥३९५॥

१ गाङ्गेयो वनजो २ निदेयीK ३ क्लीवनम् B ४ वहेतिपाठः सर्वत्र ५ भोगीB
६ कर्कटाह्वेतिपाठः स्यात् ७ सूताB ८ सूक्ष्माB

भिषग्भद्रावर्त्तका च भद्रा दन्ती[1] जयावहा ।
नराङ्गी[2] सारकस्त्वस्त्री जयपालोऽपि रेचकः ॥३९६॥
दन्तीबीजं[3] मलद्रावि तिन्तिडीफलमित्यपि ।
कुम्भी घण्टाभवं बीजमथ मालविका त्रिवृत ॥३९७॥
श्यामार्द्धचन्द्रा विदला कालिङ्गी कालमेष्यपि ।
मसूरा सुषर्णी काली त्रिवेला स्यादथापरा ॥३९८॥
कालिन्दी त्रिपुटा काकनासिका ताम्रपुष्प्यपि ।
अमृताथ त्वचं भृङ्गं वल्कं वल्कलमित्यापि ॥३९९॥
कलशं सिंहलं वन्यं वराङ्गी मुखशोधनम् ।
बहुगन्धं च सुरसमुत्कटं रामवल्लभम् ॥४००॥
तदेवोक्तं विज्जलं[4] स्याल्लटवर्णं[5] नवप्रियम्[6] ।
गन्धवल्कं तापसं तु सुरगन्धं च गोपनम् ॥४०१॥
सुकुमारं च पत्राह्वमंशुकाह्वं च पत्रकम् ।
तमालपत्रमथ च किञ्जल्कं कनकाह्वयम् ॥४०२॥
चाम्पेयं नागपर्यायकेसरे नागनामकम् ।
स्यान्निर्विषा[7]त्यपविषा विषहन्त्री विषादिनी ॥४०३॥
महौषधं विषं चोग्रं वत्सनाभः पुमानयम् ।
नागपर्यायकश्चाथ षड्ग्रन्थाम्लनिशा वधूः ॥४०४॥

---

१ भद्रदन्ती २ ज्वराङ्गी ३ दन्ति B ४ विज्जुलं Ke ५ लचुटपर्णं ६ तव C
७ तूप K

सुगन्धमूला च सठी[1] गन्धारी पृथुपर्ण्यपि ।
समुद्रा तृणपूर्वापि हिमजा गन्धतो वधूः ॥४०५॥
समुद्रार्थोत्तरं फेनमथ फेनं निफेनकम्[2] ।
फेनं च खस्खसरसो[3] लोहद्रावी तु टङ्कणः ॥४०६॥
रसाधिको रसघ्नश्च रङ्कक्षारोऽपि रङ्कदः ।
सुभगष्टङ्कणक्षारो मलिनो धातुवल्लभः ॥४०७॥
वर्त्तुलः कणकः क्षारश्चाथन्यच्छ्वेतटङ्कणम् ।
मालतीतीरसंभूतं शिवो द्रावकरश्च सः ॥४०८॥
स्यात्कुरण्डो ग्रन्थिफलो विटपो वस्त्रभूषणः ।
हिमावली च हृद्धात्री[4] कुष्ठघ्नो रागकुष्ठकः ॥४०९॥
ग्रन्थिलोङ्गारग्रन्थिः स्यात्सुवर्चास्तु सुवर्चिकः ।
स्वर्जिकः स्वर्चिकक्षारो लवणासुरमेदजे ॥४१०॥
जलजं लवणक्षारमथ पाक्यो यवाग्रजः ।
यवक्षारो यताह्वः स्याद्यवशूकोऽथ षण् सरम् ॥४११॥
वज्रक्षारं च धूमोत्थं[5] क्षारश्चेष्टं विदारकम् ।
वज्रकं स्यादथ पुनर्मलारिः क्षारमेलकः ॥४१२॥
सर्वक्षारो बहुक्षारो महाक्षारोऽथ मायिका ।
मायाफलं मायिफलमपि[6]च्छिद्राफलं पुनः ॥४१३॥

---

१ सटी B २ कफेनकम् B महिफेने निफेनकमिति पाठः स्यात् ३ खसृवशीरम् । B
४ कुष्ठघ्नोरागकुष्ठकः B ५ क्षारश्रेष्ठमिति स्यात् क्षीवश्रेष्ठं B ६ च्छिद्र B

पानीयालुरनूपालुर्नीलालुः[1] शुक्लकन्दकः ।
शुभालुर्महिषीकन्दः[2] सर्पाख्यो वनवास्यपि ॥४१४॥
विषकन्दोथातिहस्तिस्थूलेभ्यः कन्दपत्रकाः ।
बृहत्वग्दीर्घपत्रो[3]ऽथ कृमिघ्नो वस्त्रपञ्जरः ॥४१५॥
कोलकन्दश्च पेटालुः सुपुटः पेटकन्दकः ।
पिञ्जरोप्यथ[4] वाराही ब्रह्मपुत्री च यष्टिका ॥४१६॥
विष्वक्सेनप्रिया चापि त्रिनेत्राथ हरिप्रियः ।
विष्णुकन्दो विष्णुगुप्तः सुपुटो बहुसंपुटः ॥४१७॥
जलवासी बृहत्कन्दो दीर्घपत्रोऽथ धारणी[5] ।
चिरपत्री धारणीया कन्दालुश्च सुकन्दकः ॥४१८॥
वनकन्दश्च कन्दाढ्यो दण्डकन्दोथ नाकुली ।
सर्पगन्धी[6] रक्तपत्री सुगन्धा स्वरसेश्वरी[7] ॥४१९॥
संमादन्यपरा तु स्यात्सुवहा गन्धनाकुली ।
महासुगन्धा सर्पाक्षी फणिभुग्विषमर्दिनी ॥४२०॥
नकुलाढ्या पङ्क्तिमालावारिभ्यः कन्द इत्ययम् ।
ग्रन्थिपर्णी[8] कन्दलता त्रिशिखाथ विदारिका ॥४२१॥
शीतशुक्ला[9] स्वादुकन्दा गजेष्टा वाजिवल्लभा ।
शृगाली वृष्यगन्धा च विडाली वृष्यवल्ल्यपि ॥४२२॥

---

१ पानीयालुरित्यर्धं K पुस्तके नास्ति २ शुक्लालु KC ३ पत्रा B ४ पञ्जरो B
५ धारिणी B ६ सर्पगन्धा B ७ सुरसेश्वरी B ८ पर्णी ९ शुक्ली B

भूकूष्माण्डी कन्दफला सैव स्वादुलतापरा ।
क्षीरात्कन्दो विदारी स्यादिक्षोर्गन्धा च वल्लरी ॥४२३॥
पयस्विनी मलघ्नस्तु वनवासी च विजुलः ।
अपि स्याच्छाल्मलीकन्दश्चाथ चाण्डालकन्दकः ॥४२४॥
एकद्वित्रिचतुःपञ्चपत्रः सोक्तश्च पञ्चधा ।
तैलकन्दो द्रावकन्दस्तिलाङ्कितदलश्च सः ॥४२५॥
करवीराख्यकन्दः स्यात्स चोक्तस्तिलचित्रकः ।
त्रिपर्णिका[1] बृहत्पत्रा छिन्न[2]ग्रन्थिनिका च सा ॥४२६॥
कन्दालुः कन्दबहुला साम्लवल्ली विषापहा ।
लक्ष्मणा पुत्रकन्दास्यात्पुत्रदा मानिनी च सा ॥४२७॥
नागाह्वा फलिनी मज्जा चासृग्बिन्दुच्छदाप्यथ ।
कामं प्रकामं पर्याप्तं[3] निकामेष्टे यथेप्सितम् ॥४२८॥
रासस्तु गोदुहां क्रीडा गीतिः पारावती स्त्रियाम्[4] ।
गोपगोपालगोसंख्यगोधुगाभीरवल्लवाः ॥४२९॥
गोदुहोऽप्यथ तद्भेदा गोजाव्युष्ट्रादिपालनात् ।
गोमहिष्यादिकं पादबन्धनं पदबन्धनम् ॥४३०॥
गोविन्दो गोष्वधिकृते महिषस्तु रजस्वलः ।
स्याद्धंसकालीतनयो दंशपर्यायभीरुकः ॥४३१॥

---

१ त्रिकर्णिका B २ग्रन्थनिका B ३ निकामेष्टम् B ४ स्त्रियम् B

महो जरन्तो रक्ताक्षो धीर[1]स्कन्धश्च सैरिभः ।
यमार्थे[2] वाहनार्थोऽपि कृष्णश्रृङ्गश्च कासरः ॥४३२॥
श्चङ्कुः[3] स्कन्धश्च हेरम्बो ह्राहः स्याद्रुद्रदस्वरः ।
अश्वपर्याय[4]शत्र्वर्थौ [5]लालिकोऽथ वनोद्भवः ॥४३३॥
गवलो महिषी तु स्याद्धंसकाली तु[6] सैरिभी ।
कलुषा[7] मन्दगमना महाक्षीरा पयस्विनी ॥४३४॥
जायमानविषाणाग्रे कटाहस्तच्छिशुर्द्वयोः ।
गोमी गवेश्वरो[8] गोमान्गोकुलं गोधनं धनम् ॥४३५॥
अस्त्री त्रिष्वाशितं[9]गव्यं गावो यत्राशिताः पुरा ।
गवीनं चाथ वृषभः[10]शाक्करो गोवृषो वृषः ॥४३६॥
गौरनड्वान्सौरभेयः ककुद्मान्पुंगवो वृषा ।
उक्षा भद्रो वलीवर्दः[11]शष्करिर्गन्धमैथुनः ॥४३७॥
मदकोहलगोभर्त्तृर्षभाः शाङ्करइट्चरः ।
श्रृङ्गी च श्रृङ्गिणोऽपि स्याद्वहतिर्वहतुः[12]समौ ॥४३८॥
अथ स्याद्गोपतिः शण्डः शण्ठः षण्डश्च षण्ढवत् ।
महान्महो[13]क्षश्चोक्षतरश्चाथापि स्याज्जरद्गवे ॥४३९॥
वृद्धोक्षश्चापि जातोक्षः संजातोक्षश्च नूतने ।
गव्या गोत्रा च धेनूनां संहतौ धैनुकं पुनः ॥४४०॥

---

१ स्कन्दश्चB २ पयार्थे Ck ३ श्वङ्ककन्दश्च ४ रिप्वर्थौ B ५ नालिको kc ६ सैरभी B ७ कालुषा b ८ गवीश्वरो b ९ यत्र kc १० शाष्करो[B] ११ शाक्करि[B] १२ वैहत्तुः[B] १३ क्षोक्षतर[B]

उक्ष्णां स्यादौक्षकं चाथ वत्सानां वात्सकं पुनः ।
सद्योजातस्तर्णकः स्याद्दोग्धा वत्सः शकृत्करिः ॥४४१॥
आटीकनं क्रमस्तेषां दम्यो वत्सतरः पुनः ।
आर्षभ्यः [1]षण्डतायोग्यः कूटो भग्नविषाणकः ॥४४२॥
खण्डार्द्धश्रृङ्गो वण्डस्तु च्छिन्नपुच्छार्थकस्त्रिषु ।
कालेप्यजातश्रृङ्गस्तु मुण्डस्तुवरतूवरौ ॥४४३॥
भुग्नश्रृङ्गस्तु[2] मीठः स्यात्स्कन्धश्रृङ्गस्तु दोलितः ।
मृगश्रृङ्गे तु हरिणः कूटाद्याः स्युरमी त्रिषु ॥४४४॥
स्त्रियां ककुत्त्वंसकूटं ककुदं पुनरस्त्रियाम् ।
स्कन्धप्रदेशे वाहः स्यात्सास्ना तु गलकम्बलः ॥४४५॥
कण्ठला[3] जालगोणी स्यात्स्त्रियां रेभा तु रेभणम्
पुंसि प्रोथो नासिकाग्रं शफं क्लीबे खुरः पुमान् ॥४४६॥
श्रृङ्गमस्त्री विषाणं च स्यात्क्लीबे कूचिका स्त्रियाम् ।
नसिप्रोतस्तुनस्योतो न स्यितो न स्तितः समाः ॥४४७॥
अथ स्यान्नासिकारज्जुः स्त्रियां नस्ता[4] नसोतिनी ।
पृष्ठवाड्युगपार्श्वस्थयुग्यप्रासङ्ग्यशाकटाः ॥४४८॥
हालिकः सैरिको रथ्यस्तत्तद्वोढरि धूर्वहः ।
धुर्यो धुरीणो धौरेयो धूर्द्धरश्च धुरन्धरः ॥४४९॥

---

१ षण्ढता^B २ मीढ^B ३ कण्ठाला स्यात् । कंगला^B ४ नस्मेतिनी^B ।

तुल्यावेकधुरीणौ द्वौ स्यातामेकधुरावहौ ।
स तु सर्वधुरीणः स्या[1]द्यस्तु सर्वधुरावहः ॥४५०॥
गलिर्दुष्टवृषः[2] स स्याद्यः समर्थोऽप्यधूर्वहः ।
स्थौरी पृष्ठी पृष्ठवाट् स्यात् स्कान्धिकः[3] स्कन्धवाहिकः ॥४५१॥
षोडन् द्विदन् क्रमात् षड् द्विजातदन्ते वृषेऽथ च ।
उस्रा स्त्रियां[4] मही माता सुरभी सुरभिर्गवी ॥४५२॥
अनड्वाही सौरभेयी वन्दनीया च शृङ्गिणी ।
अर्जुन्यनडुही[5] चेडा रोहिणी जगती मह्या ॥४५३॥
शृङ्गी शृङ्गिश्च माहेयी पुनरघ्न्या च गौः स्त्रियाम् ।
कर्बुरा पाटला श्वेता शवली च निलिम्पिका ॥४५४॥
तुभ्रेत्याद्यभिधास्ताः[6] स्युराक्रान्ता वृषभेण या ।
संधिनी चाप्यथ स्त्री स्याद्देहद्गर्भोपघातिनी ॥४५५॥
वृषोपगा स्रवद्गर्भा वतोका संधिनी वशा ।
प्रजनोपसरौ[7] कालः प्रस्त्रवासन्नकालके ॥४५६॥
काल्योपसर्या तत्कालयुताथो बालगर्भिणी ।
स्यात्पलिक्नी तु प्रष्ठौह्यामेकाब्दा त्वेकहायनी ॥४५७॥
एवं द्वित्रिचतुर्भ्यः स्या[8] द्वर्षपर्यायवाचिका ।
स्यादचण्डी तु सुकरा वत्सकामा तु वत्सला ॥४५८॥

---

१ द्योवै B २ गडि सिकौ ३ कांधिकः B ४ उस्रो K ५ लेडा KC ६ नीभ्रे B.
७ कालेतिपाठः सर्वत्र ८ दृब्द BC

गृष्टिः सकृत्प्रसूता स्याद्धेनुः स्त्री स्यान्नवप्रसूः ।
चिरप्रसूर्वष्कयणी[1] वस्कयण्यथ नैचिकम् ॥४५६॥
निचिकं च शिरस्तस्या बहुसूः स्यात्परेष्टुका[2] ।
दुःखदोह्या तु करटा दुर्दोह्या चाथ सुव्रता ॥४६०॥
सैवोक्ता सुखसंदोह्या पीनोध्नी पीवरस्तनी ।
स्याद्बहुद्रोणपर्यायक्षीरपर्यायिनीत्यपि ॥४६१॥
वञ्जुली चाथ धेनुष्या द्यूतादिबन्धने[3] स्थिता ।
पीतदुग्धा चाथ समां समां यातु विजायते ॥४६२॥
समांसमीनाथापीनमूधः क्लीबे तु पुंसि वा ।
स्याद[4]स्त्रियां गोमयं तु पवित्रमुपलेपनम् ॥४६३॥
शुष्के तत्र करीषो[5]ऽस्त्री त्रिषु गव्यं गवामिदम् ।
शिवः [6]पुष्यलकः कीलोऽस्त्रियां संदानबन्धने ॥४६४॥
क्लीबे [7]दामं स्त्रियां रज्जुर्दामन्युष्ट्रः क्रमेलकः ।
वक्रग्रीवो [8]बहुकरो वासन्तः कण्टकाशनः ॥४६५॥
तालुनाशश्च लम्बौष्ठोऽध्वगो भोलिर्मरुप्रियः ।
शलो महाङ्गश्च[9] मयो दुर्गपर्यायलङ्घनः ॥४६६॥
द्विककुत्करभस्तु स्याद्व्यब्द उष्ट्रः शिशुश्च सः ।
करभाः[10] स्युः शृङ्खलकादारवैः पादबन्धनैः ॥४६७॥

---

१ वस्कराण्यथ नैचिकी B २ ष्ठुका B ३ घृतादिवधने KC ४ स्यास्त्रियां गोमयं गव्यं B ५ करीशो B ६ पुष्पलकः C पुष्पलकः B पुष्कलकः सि० कौ० ७ द्दाम KC ८ वहकरो CK ९ पयो CK १० कार CK

अजा संजा सर्वभक्षा चुलुंपा च[1] गलस्तनी ।
छागी चाथ पशुश्छागो लम्बकर्णश्च बर्करः ॥४६८॥
शिवादेवप्रियो वस्तः स्तुभः स्याच्छगलोप्यजः ।
वुष्कोल्पायुश्छागलोऽपि[2] मेनादः पर्णभोजनः ॥४६९॥
स्थागः परिक्रमसहो जावालस्त्वजजीवनः ।
मेध्यो मेका महागन्धो भकरश्च पयस्वलः ॥४७०॥
मेषो रभ्रो[3]रणोर्णायुर्मेंढो[4] वृष्णिर्हुडु[5]र्हुरः ।
उरभ्रो[6] लोमशः शृङ्गी स्यादविश्चैडको बली ॥४७१॥
पुच्छपर्यायमांसार्थः स्याद्देशान्तरसंभवे ।
कुररी स्याज्जाल[7]किनी मेषी वेण्यविलारुजा ॥४७२॥
अविः स्त्री शिशुवाह्यः स्यादिडिश्चाथ कदम्बके ।
उष्ट्रच्छागोरभ्रकाणामौष्ट्रकं छागकाजके[8] ॥४७३॥
उरभ्रकं चाथ खरः शुद्धजङ्घश्च धूसरः ।
शङ्कुकर्णः स्मरस्मर्यः[9] श्चक्रीवान् रासभोऽपि च ॥४७४॥
ग्राम्याश्वश्चिरमेही स्याद्वालेयो रेणुरूषितः ।
गर्दभः स्यादेकशफः क्रायिकः क्रयिकः क्रयी ॥४७५॥
एते स्यु र्वैः सार्थवाहः स्याद्वैदेशिक इत्यपि ।
पण्याजीवश्चापणिके व्यापारी निगमोऽपि सः ॥४७६॥

---

१ चु लुंपा[CK] २ वुक्को[B] ३ रभ्रे[K] ४ मैंठो[K] ५ हुंडः[B] ६ उरस्लो[B]
७ जालुकिनी[B] ८ छागकाजकौ[B] ९ स्मरः स्मर्यः[KC]

स्यान्नागरो[१] नैगमोऽपि वाणिजोऽपि वणिक् पणिः[२] ।
नीवी परिपणं चापि भाण्डं नीविरपि स्त्रियाम् ॥४७७॥
अपि मूलधनं चाथ तत्रलाभोऽधिकं[३] धनात् ।
वाणिज्यं च वणिज्या स्यान्मूल्यं वस्नोप्यवक्रयः ॥४७८॥
वणिक् स्त्रियां वाणिजकं वाणिज्यं स्याच्च तत्र तु ।
वास्नोप्यथ स्यान्नैमेयः स्यात् क्लीबे परिवर्त्तनम् ॥४७९॥
परिवर्त्तः परीवर्त्तः परीवर्त्तनमित्यपि ।
प्रतिदानं परिदानं दीर्घमध्ये उभे अपि ॥४८०॥
प्रतिहारः परावर्त्तौ विन्योर्मैयमयावथ ।
स्यान्निक्षेपस्तूप[४]निधिन्र्यासश्चाथ तदर्पणम् ॥४८१॥
प्रतिदानं प्रतीदानं परिदानमतः परम् ।
परीदानमथ क्रय्यं त्रिषु पण्ये प्रसारितम् ॥४८२॥
क्रेतव्यमात्रे स्यात् क्रेयं विक्रेयं[५] पणितव्यके ।
पण्यं चाथ स्त्रियां सत्याकृतिः सत्यापना न ना[६] ॥४८३॥
सत्यंकारोऽपि पुंसि स्यादथाधिः पुंसि लग्नकः ।
प्रतिभूकः प्रतिस्थेयः साक्षी स्यादथ विक्रयः ॥४८४॥
विपणश्चाथ संख्याः स्युर्गणेयं गण्य[७]मित्यपि ।
संख्येय एक एकत्वे द्वित्वे तु द्वावुभावपि[८] ॥४८५॥

---

१ नगरो इति पाठः सर्वत्र २ पणी^B ३ धिके^KC ४ स्तु परिधि^B ५ विक्रेय^CK
६ सत्यापणं^B ७ गण्य^CK ८ द्वाउमा^B

त्र्यादयोष्टादशान्ताः स्युर्वाच्यप्रकृतयः पुनः ।
एकोनविंशतिस्त्रिंशदित्याद्याः स्युस्त्रिलिङ्गकाः ॥४८६॥
अष्टादशभ्य एकाद्याः संख्याः संख्येयगोचराः ।
ऊनविंशत्यादिकाः स्युः सर्वाः संख्येयसंख्ययोः ॥४८७॥
विंशत्याद्याः सदैकत्वे स्त्रियां संख्येयसंख्ययोः ।
संख्यात्वे द्विबहुत्वे स्युस्तासुचा नवतेस्त्रियः ॥४८८॥
ह्रस्वान्ता अपि दीर्घान्ताः स्युरेते विंशतिः पुनः ।
षष्टिश्च सप्ततिस्तद्वदशीतिर्नवतिः पुनः ॥४८९॥
एकोनविंशतिश्चैवमेवमेकान्नविंशतिः ।
एकादूनविंशतिश्चैवमेकान्नत्रिंशदादयः ॥४९०॥
द्वाविंशतिर्द्विविंशतिः सप्ताविंशतिरित्यपि ।
सप्तविंशतिरित्येवं द्वाषष्टिश्च द्विषष्टिभिः ॥४९१॥
द्वासप्ततिर्द्विसप्ततिरित्याद्यूह्या यथाक्रमम् ।
द्वौ त्रयो वेत्येवमाद्या द्वित्रा त्रिचतुरा अपि ॥४९२॥
त्रिपञ्चा एवमेकद्वाः षट्सप्ता अपि पञ्चषाः ।
भूचन्द्रभुजनेत्राग्निगुणवेदयुगाश्चापि ॥४९३॥
भूतेन्द्रियर्तुतर्कर्षिवाजीभवसवो ग्रहाः ।
नन्दादिशश्चपङ्क्तिश्च संख्या संज्ञाह्यनुक्रमात् ॥४९४॥
यथोत्तरं दशगुणमेकं दशशतं पुनः ।
सहस्रमयुतं लक्षं प्रयुतं कोटिरर्बुदम् ॥४९५॥

अब्जं[1] खर्वं निखर्वं च महाब्जं शङ्खवारिधी ।
अन्त्यं मध्यं परार्द्धं च परार्द्धद्विगुणं परम् ॥३९६॥
एतदायुः परंधातुः शतवर्षमितं हि तत् ।
शतं क्लीबे पुंसि वा स्यात् क्लीबे साहस्रमित्यपि ॥४९७॥
सहस्रमयुतं लक्षा स्त्रियां क्लीबे कचिन्मतम् ।
स्त्रियां क्लीबे तु नियुतं कोटी कोटिरुभे स्त्रियौ ॥४९८॥
अस्त्र्यर्बुदं शङ्कुरस्त्री[2] क्लीबे वा पद्ममस्त्रियाम् ।
पुंसि चाथ महापद्मं तद्वदन्यानि न द्वयोः ॥४९९॥
चमत्कारावहा लोके कलाः स्युश्चतुरुत्तराः ।
षष्टिर्गीतं वाद्यनृत्ये[3] नाट्यमालेख्यमेव च ॥५००॥
तिलकं पुष्परचना पुष्पास्तरणमेव च ।
रञ्जनं दन्तवस्त्रादेर्मणिबद्धावलिक्रिया[4] ॥५०१॥
शय्याम्बुवाद्य मस्तम्भश्चित्रोपायाश्च[5] माल्यकम् ।
केसरापीडनेपथ्ये कर्णभूषासुगन्धकौ ॥५०२॥
भूषणं चेन्द्रजालं च सुकुमारेण केनचित् ।
कृता उपाया रूपादौ हस्तलाघवमित्यपि ॥५०३॥
चित्रशाकं च पूपादि पानकादि च सूचिका ।
पुत्तलीचालनं वीणा प्रहेलीज्ञानमेव च[6] ॥५०४॥

---

१ अर्वं B २ शङ्कुःस्त्री Kc ३ नृत्ते B ४ बद्धो B ५ मस्तम्भ इति स्यात्
६ ज्ञानमेव B

सर्व[1] प्रतिकृतिकृतिरन्यदुर्वचलेखनम्[2] ।
पुस्तस्य वाचनं शीघ्रं नाटिका ख्यायिकासु धीः ॥५०५॥
समस्यापूरणं वाणवेत्रादिपट्टिकाकृतिः ।
तर्कुसाध्यं[3] सूत्रकर्म तक्षणं वास्तुकर्म च ॥५०६॥
रत्नज्ञानं धातुवादो मण्यादेरपि रञ्जनम् ।
तदाकारपरिज्ञानं वृक्षायुर्वेद एव च ॥५०७॥
मेषादियुत्सारिकादिलापमुल्लापनं तथा ।
वेणीमुष्टिज्ञता म्लेच्छशास्त्रभाषासु नैपुणम् ॥५०८॥
पुष्पस्य शकटीज्ञानं यन्त्रं तद्धारणं तथा ।
अभेद्यस्यापि हीरादेर्भेदसंपादनादिकम् ॥५०९॥
मनः समस्यारचनं छलं[4] कोषाद्यभिज्ञता ।
वस्त्रान्यथाकृतिर्द्यूतमाकर्षः शिशुचेष्टितम् ॥५१०॥
विघ्नज्ञानं[5] जयज्ञानं वैतालिककवित्वधीः ।
तुलाद्यैः[6] पौतवं मानं द्रुवयं कुडवादिभिः ॥५११॥
पाय्यं[7] हस्तादिभिरथ जालान्तरगते रवेः ।
किरणोन्तर्गतं सूक्ष्मं रजसः कणमुत्तमम् ॥५१२॥
त्रिंशांशस्तस्य विज्ञेयः परमाणुर्द्वयोरयम्[8] ।
तत्त्रयं त्रसरेणुः स्यात्तद्द्वयं वंशिका स्त्रियाम् ॥५१३॥

---

१ सर्वप्रतिकृतिरन्यस्त्वे K २ लेखनी k C ३ तर्क CK ४ कोशाद B ५ जप B
६ यौवतं B ७ याप्य B ८ रथ B

षड्भिस्ताभिर्मरीचिः स्त्री षड्भिराभिस्तु राजिका ।
ताभिस्त्रिभिः सर्षपः स्यात्सर्षपैरष्टभिर्यवः ॥५१४॥
द्वाभ्यां यवाभ्यां गुञ्जा स्यात्पञ्च ता माषमाषकौ[1] ।
स एव हेममधान्यो ना तैश्चतुर्भिस्त शाणकः ॥५१५॥
टङ्कोऽस्त्री धरणं शाणद्वयं कोलस्तु दंक्षमः[2] ।
क्षुद्रमोवटकः[3] कोलौ कर्षः पुंसि नपुंसके ॥५१६॥
अस्त्री हेम्नः सुवर्णं तच्चतुर्भिस्तैः पलं तु षण् ।
द्वयोर्मुष्टिः स्त्रियां मुष्टी[4] सूपाटं पुंसि वा स्त्रियाम् ॥५१७॥
तद्वदन्येऽपि विज्ञेयास्तत्र पाणितलं पिचुः ।
किंचित्पाणिः पाणिमानी करमध्यं च तिन्दुकम् ॥५१८॥
नाक्षो हंसपदं वर्णं विडालपदमित्यपि ।
उदुम्बरं षोडशी स्यात् कवलग्रहकः पुनः ॥५१९॥
प्रथमं न स्त्रियां पुंसि तृतीयं स्त्री चतुर्दशम् ।
चतुष्टयं तु कर्षाणां पलमित्यभिधीयते ॥५२०॥
सुवर्णाक्षे स्वर्णविस्तं कुरुविस्तं[5] तु तत्पले ।
तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः ॥५२१॥
आचितः पुंसि वा क्लीबे द्वयं वा दशभारिकम् ।
मानभेदे भरः पुंसि सहस्रद्वितयैः पलैः ॥५२२॥

---

१ मापकौ B २ द्रक्षमः C ३ कोलःकोलः B ४ सूपाटःपुंसि चा B ५ विस्तस्तु B

स एव शाकटो भारः शतमानं तु पुंसि वा ।
दशभिर्द्धरणैस्तुल्यमथ कार्षापणः पुनः ॥५२३॥
अपि स्यात्कार्षिकस्तत्र कार्षिके ताम्रिके पणः ।
पणैश्चतुर्भिः कुडवस्तावद्भिः कुडवैरपि ॥५२४॥
प्रस्थौ स्त्रियामाढकः स्यात् त्रिषुद्रोणोऽस्त्रियां पुनः ।
खारी स्त्री षोडशद्रोणैस्ताभिः षोडशभिः पुनः ॥५२५॥
कलशी दशभिर्मुण्डः परीमाणमिदं स्मृतम् ।
काकिणिः काकिणी तुल्ये काकिनिः काकिनी समे ५२६
काकणिः काकणीतद्वत्काकनिः काकनीत्यथ ।
उड्डी मण्डः[1] स्त्रियां तूर्या[2] सैवोक्ता दशमानिका[3] ५२७
देशे देशे स्वस्वराज्ये राजभिर्मानकल्पनात् ।
विशिष्टमविशिष्टं वा ज्ञेयं तत्र-तदुक्तिभिः ॥५२८॥
परिमाणप्रमाणज्ञैस्तुलादण्डो द्वयोर्धटः ।
कण्टकी[4] पुंसि तत्रत्य[5]तौल्यभेदास्तु देशजाः ॥५२९॥
सेरादिका ये[6] मणान्तास्ते म्लेच्छपरिकल्पिताः ।
स्वर्णं सुवर्णं कनकं पुरटं निष्कहाटके ॥५३०॥
चन्द्रमष्टापदं जाम्बूनदमेते [7]नवास्त्रियाम् ।
तपनीयं शातकुम्भं [8]च द्वयोर्हिमहेमनी ॥५३१॥

---

१ उद्‌ग्री KC २ जूर्या B ३ मालिका B ४ कटकी B ५ तोल B ६ शेरा B
७ नवा B ८ न द्वयोर्हे १ B

गैरिकं वसु कल्याणं रजतं भर्म कर्वुरम् ।
चामीकरं जातरूपं चाम्पेयं वित्तमर्जुनम् ॥५३२॥
कार्त्तस्वरं लोहवरं महारजतगारुडे ।
अग्निपर्यायबीजार्थं शुक्रं जीवनमोजसम् ॥५३३॥
[1]नारं दाक्षायणं श्रीमत्कुम्भे[2] वेणुतटीभवम् ।
द्रव्यं च स्वापतेयं च रिक्थमृक्थं धनं मघम् ॥ ५३४॥
काञ्चनं हिरणं भर्म[3] गाङ्गेयं शतकुम्भजम् ।
तपनीयं शातकौम्भमभ्रं कर्बूरमित्यपि ॥५३५॥
जाम्बूनदं चोरुसारं रुक्मं कार्त्तस्वरं पुनः ।
द्रविणं वरिवः श्वात्रं हिरण्यं रक्तमित्यपि ॥५३६॥
द्युम्नं स्त्रियौ रा रयी ना कोशोर्थौ विभवोऽपि च ।
शोभोजनं[4] वैणवं च दीप्तं दीप्तकमुज्ज्वलम्[5] ॥३३७॥
कान्तिस्वरं[6] जाम्बवं स्यात्कलधौतमपि द्वयोः ।
तद्भूमिजं रसोत्थं च[7] बहुलोहोद्भवं त्रिधा ॥५३८॥
अलंकारसुवर्णं स्याच्छृङ्गी शृङ्गिः स्त्रियामुभे ।
कोषोऽस्त्रियामथापि स्याद्धेमरूप्ये कृताकृते ॥५३९॥
कुप्यं षण् तद्द्वयादन्यदाहृतानाहृते समे ।
तारहेम्नी तु संश्लिष्टे[8] घन[9]गोलकमस्त्रियाम् ॥५४०॥

---

१ नारंदं दाक्षायणं श्रीमात्कुम्भे[K] २ ऽकुम्भ[B] ३ भर्म[B] ४ शोभाञ्जनं च वैणेयं[B] ५ दीप्तकु[KC] ६ कार्तस्वरं[BC] ७ रक्तजं च[B] ८ संश्लिष्टं[K] ९ घृतं गोलक[B]

दुर्वर्णं पुंसि वा रूप्यं रूपं रौप्यं यवीयसम् ।
तारं लोहं वसुश्रेष्ठं रजतं रुचिरं पुनः ॥५४१॥
कलधौतं रूपसाध्ये[1] श्वेतस्येन्दोर्हिमस्य च ।
कुमुदस्य च हंसस्य पर्यायि ब्रह्मवर्द्धनम् ॥५४२॥
सूर्यपर्यायिगात्रार्थं[2] ताम्रं शुल्बमुदुम्बरम्[3] ।
[4]मर्कटम्लेच्छवक्त्रार्थं वरिष्ठं च कनीयसम् ॥५४३॥
उदुम्बरं च तद्वत्स्यादौदुम्बरमुदुम्बरम् ।
नेपालिकं त्र्यम्बकं स्याद्रक्तपर्यायिवर्णकम् ॥५४४॥
वङ्गं स्यादस्त्रियां रङ्गं पूतिगन्धं हिमस्रवम्[5] ।
त्रपु क्लीबे[6] पुंसि वा स्यात्त्रपुषं चीनचिप्पटे ॥५४५॥
नागार्थकं स्यादात्यूषं[7] कुरूप्यं मुखभूषणम् ।
मधुरश्वेतरूप्यार्थं मृद्वङ्गं गुरुपत्रकम् ॥५४६॥
मालीनकं सिंहलकं कास्तीरं घनजीवने[8] ।
अस्त्रियां त्रापुसं चाथ शीसको[9] ऽस्त्री दृगौषधम् ॥५४७॥
गजं गण्डूपदभवं नागं[10] वप्रे च न स्त्रियाम् ।
योगीष्टं यवनेष्टं स्यात् कुवङ्गं परिपिष्टकम् ॥५४८॥
वप्रं नीरः सुवर्णारिः सीरपत्रकमित्यपि ।
मृदुकृष्णायसं पक्ष्यं[11] बन्धकं[12] तारशुद्धिकृत् ॥५४९॥

---

१ रूप्य^B २ गात्रार्थे^K ३ मृदुर्वरम्^B ४ मर्कटे^K ५ हिमं सवम्^B ६ त्रपुक्लीबे त्रपुषि वा त्रपुचीनोऽपि चिप्पटम्^B· ७ ह्रात्युष^B ८ घनजीवनम्^B ९ शीशको^B १० नागंवप्रे^C नागवप्रे^B ११ यक्ष्य^B १२ भधकं^K

शिरावृत्तं[१] च वङ्गारि वप्रं चापि महाबलम्[२] ।
कांस्य सौराष्ट्रकं घोषं कंसीयं[३] ब्रह्मवर्द्धनम् ॥५५०॥
वह्निदीप्त्यर्थलोहार्थं घोरपुष्पं पवित्रकम् ।
खर्णं[४] लोहजं वङ्गं शुल्बजं च प्रकाशकम् ॥५५१॥
घण्टाशब्दं विद्युदर्थास्त्रियाह्वमसुराह्वयम्[५] ।
कंसोऽस्त्रियां च ताम्रार्द्धमारमस्त्री तु पित्तलम् ॥५५२॥
पीतलोहितपर्यायि क्षुद्रस्वर्णार्थसिंहले[६] ।
रीतिः स्त्रियां[७] रिरी रीरी न स्त्रियामारकूटकम् ॥५५३॥
अथान्या राजरीतिस्तु ब्राह्मी राज्ञी महेश्वरी ।
काका तुण्डी[८] च कपिला पिङ्गला लोहसंकरम् ॥५५४॥
वर्त्तलोहं नीललोहं वर्त्तकं नालिका स्त्रियाम् ।
[९]कान्तायसमयस्कान्तं कान्तं कृष्णोत्तरं[१०] च तत् ॥५५५॥
महालोहं तच्चतुर्द्धा भ्रामकं चुम्बकं पुनः ।
मुण्डं कृष्णायसं चेति लोहसारं [११]तथाश्मजम् ॥५५६॥
अश्मलोहोऽस्त्रियां सारं न स्त्रियां कृमिलोहकम् ।
तीक्ष्णं शस्त्रायसं कालपिण्डं पिण्डायसं शठम्[१२] ॥५५७॥
आयसं निशितं तीव्रं लोहं ख ं च मुण्डनम् ।
अयश्चीनोद्भवं धीनं[१३] धीवरं कृष्णमामिषम् ॥५५८॥

---

१ वृत्त॑[B] २ वनम्[B] ३ घासीयं[B] ४ स्वर्णलोहजवङ्गं च शूलवज्रं प्रकाशनम्[B] ५ त्रियार्थे[B] ६ सैंहले[B] ७ रिरीरीच[B] ८ काक्तुण्डी[BC] ९ कालायस[B] १० कृष्णोतरं[B] ११ श्मरम् १२ शटम्[B] १३ धीरं[B]

आयः कालायसे चास्य विकारे तु कुशी स्त्रियाम् ।
सिंहाणधूर्त्त[1] मण्डूर सारणान्यस्य किट्टके ॥५५६॥
मनःशिला तु कुनटी मनोज्ञा नागजिह्विका ।
नेपाली[2] [3]रसभेत्ता च मनोगुप्ता च रोचनी ॥५६०॥
करवीरापि कल्याणी शिलारोगः शिलाऽपि स्त्रा ।
सिन्दूरोऽस्त्री [4] रागरेणुर्द्वयो [5]र्वीररजश्च षण् ॥५६१॥
नागार्थाद्दर्म[6]पर्यायि रक्तार्थं मङ्गलार्थकम् ।
गणेशार्थाद्भूषणार्थं संध्यापर्यायि[7] रागि च ॥५६२॥
सौभाग्यमपि शृङ्गारमथ हिङ्गुलमस्त्रियाम् ।
सुरङ्गं कर्बुरं रक्तं हिङ्गुलं चूर्णपारदम् ॥५६३॥
रञ्जनं दरदं म्लेच्छं चित्राङ्गं चापि रञ्जकम् ।
[8] बर्बरं [9]सुगरं चाथ गैरिकं[10] गिरिमृद्भवम् ॥५६४॥
गवेधुकं पुंसि रक्तधातुरन्यत्सुरक्तकम् ।
सुवर्णं गैरिकस्वर्णबभ्रुभ्यो धातुरित्यपि ॥५६५॥
संध्याह्वमथ सौराष्ट्री सुजाता सुरमृत्तिका ।
स्तुत्याकाच्चीतुमृद्वीस्यान्मृत्सा[11] [11]संघोपिमृत्तलम्[12]॥५६६॥
विडालोऽस्त्री चित्रगन्धो हरितालोऽपि तालकः ।
चित्राङ्गं पिञ्जरं क्लीबे गौरं च नटमण्डनम् ॥५६७॥

---

१ पूर्तB २ नैपालीB ३ नेत्रीB ४ रज्जुB ५ वीरं ६ द्रक्तB ७ पर्यायिB
८ कर्वरंC ९ सुरतंB १० गौरिकंB ११ न्मृत्स्नाB १२ मृत्त्वलम्B मृन्तलम्B

पीतं काञ्चनकं गौरीललितं कनकद्रवः ।
शिलार्थाज्जन्तु[1]पर्याय मश्मोत्थं गिरिसंभवम् ॥५६८॥
गन्धको गन्धपाषाणो गन्धमादनमस्त्रियाम् ।
पूतिगन्धोऽदिव्यगधः सुगन्धः क्रूरगन्धकः ॥५६९॥
वटसौगन्धिकः कुष्ठकीटयोररिरित्यपि ।
गन्धाद्रसोयं श्वेतादिवर्णभेदाच्चतुर्विधः ॥५७०॥
काशीसं धातुकाशीसं [2]केशरं हंसलोमशम् ।
शोधनं पांशुकाशीसं शुभ्रमन्यन्मलीमसम् ॥५७१॥
वत्सकं वत्सकाशीसमथ माक्षीकपीतके ।
पीतमाक्षिकमापीतं माक्षीकं धातुमाक्षिकम् ॥५७२॥
ताप्यंहेमाह्वयं तारमाक्षिकं स्यादथाञ्जनम् ।
नादेयं यामुनं कृष्णं चक्षुष्यं वारिसंभवम् ॥५७३॥
कापोतंदृक्प्रदं स्रोतोञ्जनं नीलाञ्जनं पुनः ।
सौवीरमथ चक्षुष्या दृक्प्रसादा मलापहा ॥५७४॥
कुलाल्यपि कुलत्थाथ कौसुम्भं[3] कुसुमाञ्जनम् ।
रीतिकं रीतिकुसुमं पौष्करं पुष्पतोञ्जनम् ॥५७५॥
पुष्पकेतुः पुमांश्चाथ रसोद्भूतं रसाञ्जनम् ।
वीर्याञ्जनं तार्द्यशैलं [4]रसगर्भं रसायनम् ॥५७६॥

---

१ ज्जतु इति पाठः स्यात् २ केशरमित्यादि पांशुकाशीसमित्यन्तं B पुस्तके नोपलभ्यते
३ कौस्तुभं B ४ रसभं च ।

कृतकं बालभैषज्यं दार्वीकाथ समुद्भवम् ।
रसनाभामिसारौ द्वावस्त्रियां रसराट् पुमान् ॥५७७॥
रीत्यां तु धम्यमानायां यत् किट्टं तद्रसाञ्जनम् ।
तदभावेऽपि कर्त्तव्यं दार्वीकाथसमुद्भवम् ॥५७८॥
वल्मीक [1]सारं सौवीरसारं स्रोतोञ्जनं पुनः ।
कपोतसारं जलजमथ [2]कम्पिल्लकः पुमान् ॥५७६॥
लोहिताङ्गो [3]रेचनः स्यादञ्जनो[4] रक्तचूर्णकः ।
तुत्थं नीलाञ्जनं नीलं [5]सामृगर्त्ताम्‌तोद्भवम् ॥५८०॥
मयूरतुत्थं[6] नीलाश्म मथान्यद्रयकं[7] पुनः ।
खर्परी[8] खर्परीतुत्थ[9] चक्षुष्यं रसकं पुनः ॥५८१॥
अमृतोत्थं च सूतस्तु पारदः पारतो रसः ।
रसराजो महातेजा रससिंहो महारसः ॥५८२॥
सूतो रसोत्तमो जैत्रश्चपलो रुद्रजः प्रभुः ।
शिवाह्वः शिवबीजाह्वो लोकेशो दुर्द्धरोऽमृतः ॥५८३॥
देवः स्कन्दाङ्गजः स्कन्दो देहतो मृत्युनाशनः ।
रसधातुर्हरतेजो [10]यशोदः खेचरः पुनः ॥५८४॥
व्योमार्थाह्वं तु गौरीजमभ्रकं[11] बहुपत्रकम् ।
शृङ्गं स्यादथ वर्णैश्च शुक्लाद्यैस्तच्चतुर्विधम् ॥५८५॥

---

१ शीर्षं[B] २ कम्पिल्लकः[C] ३ रेचनं[B] ४ टूअने[B] ५ साम्र[KC] ६ तूभ[B]
७ द्रर्पकं[K] ङ्गवकं[B] ८ कर्परी[B] ९ तुल्ये[B] १० यशादे:[B] ११ जं ताम्रकं[B]

स्फटी तु स्फटिकी[1] श्वेता रङ्गाङ्गा रङ्गदा पुनः ।
अपि रङ्ग दृढा चाथ खटिनी खटिका खटी ॥५८६॥
[2] सितधातुर्धवलमृदथ[3] चीरी तु दीप्तिकः ।
[4] वज्रभोपि च गोमेदसंनिभः सौध इत्यपि ॥५८७॥
स्याद्दुग्धी दुग्धपाषाणोप्यथ कर्पूरनामतः ।
मण्यन्तः सच कर्पूरमणिः स्यादेवमेव तु ॥५८८॥
आखुनाम [5]पुरः कार्यं मतः पाषाण इत्यपि ।
स च स्यादाखुपाषाणो लोहसंकरकारकः[6] ॥५८९॥
कङ्कुष्ठं[7] विमलं स्वच्छं तारहेमाभमित्यथ ।
माणिक्यं शोणरत्नं च तरुणीरत्नमित्मपि ॥५९०॥
शृङ्गारि रक्तमाणिक्यं रागहृद्रत्नमित्यपि ।
तत्र रक्ते पद्मरागोऽरुणे सौगन्धिकोऽस्त्रियाम् ॥५९१॥
कुरुविन्दस्तु पीते स्यादति[8]रक्तेऽथ नीलके ।
गन्धिनीलं चाथमुक्ता स्त्रियां सौम्यापि मुक्तिका ॥५९२॥
तारोऽस्त्रियां शुक्तिमणिः स्यात् पुंसि च रसोपलः ।
क्लीबे मुक्ताफलं स्वच्छं बिन्दु[9]रत्नं च मौक्तिकम् ॥५९३
शौक्तिकेयं शीतलं स्यादम्भःसारं च नीरजम् ।
अपि स्याच्चन्द्ररत्नं च लक्षहैमवतं शुभम् ॥५९४॥

---

१ स्फाटिका K २ शित B ३ मृत अथ B ४ वज्राभो B ५ धु (ध) रः B ६ कारकाः B
७ कङ्कुष्टं B ८ रक्तो B ९ विद्रु B

शशिप्रियं बिन्दुफलं नक्षत्रं शौक्तिकं च तत् ।
शंखवंशाब्दशुक्तीनामुदरेभ्यश्च योनयः ॥५९५॥
शिरोम्भःकरिकोलाहिमकरेभ्यो[1] भवन्त्युत ।
भौमरत्नं प्रवालोऽब्धेः विद्रुमो नाब्धिवल्लभः[2] ॥५९६॥
रक्ताङ्कुरोङ्गारमणिः शोणाङ्गश्च लतामणिः ।
रौहिणेयो मरकतश्चाश्मगर्भो हरिन्मणिः ॥५९७॥
गारुत्मतो [3]गरारातिर्गरुडोद्गीर्ण इत्यपि ।
पुष्परागः पीतरत्नं पीताश्मा पीत इत्यपि ॥५९८॥
बुधरत्नं बालवायो रत्नमुख्यस्तु हीरकः ।
अस्त्रियां वज्रपर्यायनामाभेद्यो[4] शिरोऽपि च ॥५९९॥
सूचीमुखश्च षट्कोणो दृढरत्नं वरारकः[5] ।
श्वेतादिवर्णैर्विप्राद्या वर्णाः स्युः क्रमशोस्य तु ॥६००॥
पुमान्नीलं सौरिरत्नं नीलाश्मा नीलरत्नकः ।
स्वर्भानवस्तु गोमेदः सचोत्तममणिः पुनः ॥६०१॥
वैदूर्यं केतुरत्नं स्यात् प्रावृषं वालवायजम् ।
माणिक्यमभ्रलोहं च पिचं चापि[6] विदूरजम् ॥६०२॥
अभ्रलोहश्चाङ्कुरेऽथ गोमेदो वालवायजः ।
बृहस्पतिमणिश्चाथ स्पटिकस्तु सितोपलः ॥६०३॥

---

१ मकराणामिति स्यात् २ वार्धि॰B ३ गरारीतिरितिसर्वत्र पाठो दृश्यते ४ नामा मेघोत्थितोB ५ वराटकःB ६ पिचु॰KC

अथि स्यान्निर्मलमणिः स्वच्छोथ तपनोपलः ।
सूर्यकान्तस्तापनः[1] स्यादपि दीप्तोपलश्च सः ॥६०४॥
अग्निगर्भोऽथ वैक्रान्तो विक्रान्तो नीचवज्रकः ।
गोनासो गोनसः क्षुद्रवज्रोऽथो संस्रवोपलः[2] ॥६०५॥
इन्दुकान्तः[3] सिताश्मा स्यादथावर्त्तमणिः पुनः ।
राजावर्त्तस्तथावर्त्तः पेरोजो[4] हरिताश्मके ॥६०६॥
पद्मरागः शौक्तिकेयं विद्रुमो गरुडोद्भवः ।
पुष्परागो वज्रमभि[5] नीलो गोमेदको वृषः ॥६०७॥
विदूरजोऽपि रव्यादि ग्रहाणां मणयः क्रमात् ।
अथ लोहितको वज्रस्तथा नीलमहोपलः ॥६०८॥
मुक्ता मरकताद्यानि महारत्नानि सर्वतः ।
विदूरजः प्रबालोऽपि गोमेदः पुष्परागकः ॥६०९॥
इत्यादीन्युपरत्नानि प्रवदन्ति मनीषिणः ।
मधूली स्त्री मधु क्लीबे पवित्रं पितृदैवतम् ॥६१०॥
पुष्पपर्यायासवार्थस्तद्भेदाः स्युः क्रमादमी ।
माक्षीकं माक्षिकं तत्स्या[6] त्तैलाभमथ[7] भ्रामरम् ॥६११॥
विहितं भ्रमरैः स्वल्पैः[8] श्वेतं स्यात्क्षौद्रकं तु तत् ।
वर्णेन कपिलं चाथ पीताभिः परिनिर्मितम् ॥६१२॥

---

१ स्तपनः[B] प्रवः[K] ३ कान्तः[B] ४ पेरोजी[B] ५ मथ[B] ६ चस्या[B]
७ संचाथ[B] ८ स्वयैः[B]

पैतिकं घृतवर्णं तदपरं पुत्तिकाकृतम् ।
पौत्तिकं स्यात् सारघं तु छात्रं तदपि पिङ्गलम्[1] ॥६१३॥
यदार्घ्यमपि पिङ्गं स्यादावन्त्यमपरे जगुः ।
क्षवकं चाथ मधुकवृक्षपुष्परसैश्रितम् ॥६१४॥
जरत्कार्वाश्रमभवं जगुरन्ये मधूत्तमम् ।
कुद्दालं स्वर्णसदृशं प्रायो वल्मीकमध्यगम् ॥६१५॥
तच्चभू[2]कृत्तिकन्दालं पत्रोपरिभवं[3] तु यत् ।
जलप्रसरणं[4] तैलं चिक्कणं वह्निवल्लभम् ॥६१६॥
दीपाहारः पुमान् स्नेहश्चाथ तयोनयः क्रमात् ।
तिलसर्षपकौसुम्भ क्षुमा खस्खस तूवरी ॥६१७॥
राजिकैरण्डनिर्गुण्डी करजेङ्गुदचित्रिका[5] ।
निम्बाक्ष शिग्रु कोशाम्राभयाङ्कु[6]ल्लमधूलिकाः ॥६१८॥
राजादनं नारिकेलः कर्पूरं त्रपुसं तथा ।
ईर्वारुरपि कर्कारुः कूष्माण्डालावु चैत्यपि ॥६१९॥
ज्योतिष्मती तिलादीनां स्वस्वपर्यायजं क्रमात् ।
तिलजं सर्षपोद्भूतं तैलं च सार्षपं क्रमात् ॥६२०॥
उन्नेयमेवं धीमद्भिर्मधूच्छिष्टं तु मादनम् ।
मधुजं विघसं सिक्थं द्रवकं मक्षिकाश्रयः ॥६२१॥

१ निर्मितम्B २ कृतिB ३ पैत्रंपरिB ४ प्रसरणेB ५ चिचिकाB ६ ङ्कोल्लB

मधुशेषं पीतरागं मधूत्थं मक्षिकामलः ।
अपि स्निग्धं मधुलको मधुशेषोऽपि न स्त्रियाम् ॥६२२॥
कल्पद्रौ केशवकृते फलिते नाम सत्फलैः ।
षष्ठः प्रकाण्डो वैश्याख्यः[1] सम्यक् सिद्धिमुपागतः ॥६२३॥

इति वैश्यप्रकाण्डः

---

शून्यस्कन्धातकौ शूद्रे[2] यज्ञो दासो महत्तरः ।
ग्रामकूटोऽवरवर्णो वृषलश्च जघन्यजः ॥१॥
आचण्डालं तु संकीर्णा अनुलोमविलोमजाः ।
त्रिष्वङ्कपाशन्यायेन नखस्था[3] अनुलोमजाः ॥२॥
विलोमजास्तु तावन्त[4] ऐक्येन[5] नवयास्तु ते ।
ब्रह्माज्ञया कर्मकरा विहिता विश्वकर्मणा ॥३॥
एषां परस्परोत्पत्त्या बहुभिर्भूरियं वृता ।
अनूढायां ब्राह्मणस्य क्षत्रियोदरसंभवः ॥४॥
पुत्रो मूर्द्धावसिक्ताख्योम्बष्ठो वैश्योदरोद्भवः ।
शूद्रोदर्यः पारशवः क्षत्रियस्य विशोदरात् ॥५॥
महिष्यः स्यात्तु शूद्रायामुग्रपुत्रस्ततः परम् ।
वैश्यात् शूद्रोदराज्जातः करणश्चानुलोमजाः ॥६॥
षडेते षड् विलोमोत्थाः क्षत्रियाद्ब्राह्मणीभवः ।
सूतो वैश्याद्ब्राह्मणीजः स्याद्वैदेहिक इत्यपि ॥७॥

---

१ वैश्याख्यांB २ शूद्रोB ३ स्वंस्थानंB खरथा ७२० इति पाठः स्यात्
४ तावन्त इत्यस्मात्परंB पुस्तके ७२० अङ्को दृश्यते ५ नवचपाB

मागधः क्षत्रियायां स्याच्छूद्राद्वैश्यातनूभवः ।
आयोगवः क्षत्रियायां क्षत्ताथ ब्राह्मणीभवः ॥८॥
चण्डालोऽपि च चाण्डालोऽधमः सर्वाधमेषु सः ।
माहिष्यात्करणीजातो रथकार इतीह दिक्[१] ॥६३२॥
अथ पारशवो[२]भिल्लो निषादः पर्वताश्रयः ।
त्रिष्वितः पुष्करान्ताःस्युः शिल्पी कारुश्च कारुकः ॥१०॥
स्त्रियां प्रकृतिः श्रेणिस्तु द्वयोः स्थाने सजातिभिः ।
कुलकश्च कुलश्रेष्ठी कुलबीजः कुलोद्भवः ॥११॥
स च स्यात्कुलमित्रो ना मालाकारस्तु मालिकः ।
आरामिकः पुष्पलावः कुम्भकारश्च मृत्करः ॥१२॥
दण्डभृच्चक्रजीवोऽपि कुलालोऽप्यथ लेपकः ।
पुलगण्डः[२] सुधाजीवी तन्तुवायः कुविन्दकः ॥१३॥
कुपिन्दो[३] वायोथ पुनस्तुन्नवायस्तु सौचिकः ।
रङ्गाजीवः कृणुश्चित्रकारश्चित्रकरोऽपि च ॥१४॥
शस्त्रमार्जः शस्त्रमार्गः शाणजीवोऽसिधावकः ।
भ्रमासक्तोऽथ पादूकृच्चर्मकारश्च चर्मरुः ॥१५॥
कुरटो लोहकारस्तु व्योकारोप्यथ मुष्टिकः ।
स्वर्णपर्यायतः कारस्तालो[४]गोजिक इत्यपि ॥१६॥

१ हादिकः B २ शिवो B ३ पल B ४ कुपिन्द B ५ स्सौक्तिक KC

नाडिंधमः कलादः स्या[1]च्छौल्बिकस्ताम्रकुट्टकः ।
कायस्थः कूटकृत्पञ्जीकरः करण इत्यपि ॥१७॥
स्याच्छांखिकः काम्बविक[2]स्तैली धूसरचाक्रिकौ ।
तिलादिपर्यायतुदः स्नेहकारक इत्यपि ॥१८॥
मणिकारो नैकटिको रथकारस्तु वर्द्धकिः ।
काष्ठतट् स्थपतिस्त्वष्टा तक्षाथ ग्रामगृह्यके ॥१९॥
ग्रामतक्षोऽथ स्वच्छन्दे कौटतक्षोऽथ नापितः ।
वात्सीपुत्रो दिवाकीर्त्ति र्मुण्डकोन्ताऽवसाय्यपि ॥२०॥
तण्डिवाहो[3] ग्रामणीर्वा[4]क्षौरिको[5] भाण्डिकः पुनः ।
नखकुट्टः क्षुरी मुण्डी चण्डिलः क्षुरमर्द्यथ ॥२१॥
निर्णेजकः कर्मकीलो रजकः पवनिश्च सः ।
पवनो[6] वस्त्रपात्रोऽथ शुण्डारः शुण्डिशौण्डिकौ ॥२२॥
मण्डहारः कल्प[7]पालो मानपर्यायतो वणिक् ।
अजाजीवस्तु जाबालो देवाजीवस्तु देवलः ॥२३॥
अधमद्विजपर्यायो मायिकः प्रतिहारकः ।
प्रतीहारः कामलोऽपि कर्मार[8] प्रतिहारकः ॥२४॥
कारावी जङ्गमकुटी सा स्यादभ्रमकुटीत्यपि ।
वारित्रा खर्परी मूर्द्धखोलं पत्रपिशाचिका ॥२५॥

---

१ च्छौम्लिक[B] २ स्तैली[B] ३ तुण्डि[B] ४ नाश्चौ[K] ५ भाङ्गि[C] ६ ययनी[K]पयनी[C]
७ पालः पाव[B] ८ कर्मारः[B]

मायाकारः शाम्बरीस्यान्मायी च शाम्बरी[1]त्यपि ।
शैलालयस्तु शैलूषा जायाजीवाः कृशाश्विनः ॥२६॥
भरताश्च नटाश्चापि चारणाश्च कुशीलवाः ।
मार्दङ्गिका मौरजिकाः पाणिघाः पाणिवादकाः॥२७॥
स्याद्वेणुध्मा वैणविको वीणावादी तु वैणिकः ।
जीवान्तकः शाकुनिको वागुरी जालिकः समौ ॥२८॥
वैतंसिको हिंसकः स्यान्मांसिको मांसविक्रयी ।
भृतिभुग् भृतिकः कर्मकरो वैतनिकश्च सः ॥२६॥
वार्त्तावहो वैवधिको भारवाहस्तु भारिकः ।
भारवाडथ नीचस्तु विवर्णः पामरेतरौ ॥३०॥
प्राकृतोऽपसदो जाल्मो निहीनश्च पृथग्जनः ।
[2]त्तुल्लकप्रैष्यदासेयदासदासेरचेटकाः ॥३१॥
नियोज्यकिङ्करप्रेष्यभुजिष्यपरिचारकाः ।
पराचितपरिस्कन्न[3]परजातपरैधिताः ॥३२॥
भृत्यः कडारो मन्दस्तु तुन्दोनुष्णोलसोपि च ।
आलस्यः स्यात्परिमृजः[4] शीतो दक्षस्तु पेलवः ॥३३॥
सूत्थान उष्णश्चतुरः पेशलः पेसलः पटुः ।
चण्डालोऽपि च चाण्डालः श्वपाचः श्वपचः श्वपक्[5] ॥३४॥

---

१ साम्बरी^C २ क्षुद्रकः^B ३ स्तुब^K ४ मितः^C ५ श्वपाक्^B

अन्तेवासी दिवा कीर्तिर्मातङ्गोऽपि च पुल्कसः ।
जनंगमः [१]पुल्कशोऽपि निषादश्च निषत् प्लवः ॥३५॥
पुलिका नाहला[२] निष्ठ्याः शवरा वरुटा भटाः ।
माला भिल्लाः किराताश्च ते सर्वे भिन्नजातयः[३] ॥३६॥
व्याधो [४]मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः ।
कौलेयकः सारमेयः शुनको रात्रिजागरः ॥३७॥
शालावृकः शुनिः श्वानः कुक्कुरो मृगदंशकः ।
व्रणोर्वुको[५] स्थिभुक्कीषो[६] रसनालिड्रुतव्रणः ॥३८॥
वान्ताशी दीर्घसुरतः शयालुररतत्रपः ।
कुर्कुरः शुनकोपि स्या[७]द्भषोपि च शुनिः शुनः ॥३९॥
मुहुःक्रोधी रसायायी[८] शिवारिः सूचको रुरुः ।
वनंतपः स्वजातिद्विड् दीर्घनादश्च मण्डलः ॥४०॥
कृतज्ञः स्यात्पुरोगामी स्यादिन्द्रमहकामुकः ।
कपिलो भषको यक्षो ग्रामार्थेभ्यो मृगार्थकः ॥४१॥
श्वा श्वानो मङ्गलो वक्रपुच्छो भलुह इत्यपि ।
विश्वक[९]द्रुस्तु मृगयापर्यायकुशलार्थकः ॥४२॥
तत्र रोगिण्यलर्कः स्याद्विविधा देशदेशजाः ।
शुन्यं शुनीरं द्वे तुल्ये स्त्रियां शुन्या समूहके ॥४३॥

---

१ पुष्कशो[B] २ निष्ठ्या[BK] ३ म्लेच्छ[B] ४ मृगं च भाजिष्टो[B] ५ व्रणोन्दुको[B] व्रणान्दुको ६ क्कीशो[K] क्कीशो[K] ७ द्भषकोपि[B] ८ पाप्नी इति पाठः स्यात् ९ विश्वकद्रुरित्या र्धद्वयं[K] पुस्तके नास्ति ।

एषां माता तु सरमा तज्जातिः स्त्री शुनिः शुनी ।
भषी श्वानी कुक्कुरी च[१] कुक्कुरी भषणीत्यपि ॥४४॥
श्वसंकोचे तु शौनः स्याच्छौवनोऽन्यत्र कथ्यते ।
स्याच्छुनः सविधं यत्तत्स्थलं ह्युपशुनं पुनः ॥४५॥
आच्छोटनं न ना क्लीबे मृगव्यं मृगया स्त्रियाम् ।
पापर्द्धिः पुंसि चाखेटो[२] लुब्धैर्यो दक्षिणो हृतः ॥४६॥
दक्षिणेर्मा दक्षिणारुर्लुब्धपर्याययोगवान् ।
चोरः पटच्चरो दस्युश्चौरः पाटच्चरः परः ॥४७॥
मोषकस्तस्करः स्तेन ए[३]कागारिककुम्भिलौ ।
पुंसि क्लीबे स्तेनमपि खनिकाखनिकौ[४] समौ ॥४८॥
रात्रिंचरो रात्रिचरप्रतिरोधिमलिम्लुचाः ।
शङ्कितात्तर आस्कन्दी [५]वन्दीकारस्तु माचलः ॥४९॥
कुजम्भिलः सुरङ्गाहे [६]चिल्लभो हठमोषके ।
काव्यचोरे चन्द्ररेणुः स्त्रीचोरे रतहिण्डकः ॥५०॥
संधिः सुरङ्गा खानिः स्त्री [७]संधिवेलाथ तद्भिदः ।
श्रीवत्सगोमुखाद्याः स्युः क्लीबे स्तैन्यं तु चौरिका ॥५१॥
चुरा चौरी च चौर्यं षण् स्तेयं लोप्त्रं तु तद्धनम् ।
कर्णीसुतो मूलदेवो मूलभद्रः कलाङ्कुरः ॥५२॥

---

१ कुर्करी^B २ व्याख्येये^B ३ °एका^K ४ खनकौ^C ५ वन्दि ६ चिल्लाभो^B
७ संधिवैला^B

करण्टको धौर्त्यमार्गस्तेयशास्त्रप्रवर्त्तकः ।
भ्राता शशोस्य [1]भृत्यस्तु विपुलश्चाचलस्तथा ॥५३॥
वीतंसो स्त्री पक्षिमृगबन्धोपकरणे पुमान् ।
उन्माथः कूटयन्त्रं स्याद्वागुरा च द्वयोः स्त्रियाम् ॥५४॥
मृगाणां बन्धनी रज्जुः शुल्वोऽस्त्री नाव राटकः ।
रज्जुः स्त्रियां त्रिषु वटी वरत्रा गुण[2]दोरकौ ॥५५॥
स्त्रियां तन्त्री घटीयन्त्रं स्यादुद्घाटनमित्यपि ।
कूपाज्जलोद्वाहनं स्यादरघट्टः पुमानयम् ॥५६॥
करणी लेपनी वेमा वायदण्डश्च पुंस्युभौ ।
सूत्राणि तन्तवः पुंसि वाणिर्व्यूतिरुभे स्त्रियौ ॥५७॥
वानी च वानं क्लीबे स्यात्तूलिस्तूली तुरिस्तुरी ।
स्त्रियः स्युस्तन्त्रकाष्ठेऽपि[3]स्त्रियां सूची तु सेवनी ॥५८॥
वायदण्डे पुंसि वेमो न वा वेमाथ तत्र तु ।
तन्त्रवायशलाकायां प्रवाणं च प्रवाण्यपि ॥५९॥
सेवनं सीवनं स्यूतिस्त्रिषु स्यूतप्रसेवकौ ।
त्रसरः सूत्रवेष्टे स्याच्चूची[4] सूत्रं तु पिप्पलम् ॥६०॥
पाञ्चालिका पुत्रिका या वस्त्रदन्तादिनिर्मिता ।
सालभञ्जी लेप्यमयी या सैवाञ्जलिकारिका ॥६१॥

---

१ भृत्यौ तु २ डोरकौ[B] ३ स्तन्त्रकोशेऽपि[B] ४ स्सूची[B]

स्त्रियः पादूस्तु पन्नध्री मोची प्राणहिता पुनः ।
उपानत्पादुका[1] पादात्सैवं वीथी रथी हिता ॥६२॥
विरजा रक्षिणी तद्वदायता पादुरित्यपि ।
स्त्रियां क्लीबे पादपीठपर्यायमथ तद्विदः ॥६३॥
चर्मवल्कलवस्त्रत्वक्तृणकाष्ठादिनिर्मिताः ।
नध्रीवध्री वरत्री[2] स्यादुपनीनो पदायता ॥६४॥
नद्ध्री वद्ध्री वरत्राथ प्रतिष्कषप्रतिष्कशौ ।
कशाश्वादेस्ताडनी स्यादथारा चर्मवेधिका ॥६५॥
स्या[3]त्संदंशः कङ्कमुखं यन्त्रं कुन्दं[4] भ्रमुः पुमान् ।
तैजसावर्तनी मूषा मूषिका मूष इत्यपि ॥६६॥
स्त्रियामावर्त्तनी चाथ भस्त्राका[5] भस्त्रिका पुनः ।
प्रसेविका सेविका च चर्मणो वारिपूरणी[6] ॥६७॥
आस्फोटनी वेधनिका कृपाणी कर्त्तरी समे ।
दक्षिणोत्तरधारस्तु काष्ठपर्यायतक्षकः[7] ॥६८॥
वंशोथ वेधनी तु स्याच्छेदन्यथ[8] शरारिका ।
[9]रन्ध्रकारिण्यथ पुनरारिका करपत्रिका ॥६९॥
स्यादीषीका तूलिकापि शाणस्तु निकषः कषः ।
पिञ्जनं स्याद्विहननं धूननं तूलशोधनम् ॥७०॥

---

१ पाद्या २ स्यानुपदीना[B] चानुपदीनेति पाठः स्यात् ३ त्सुदंशः[B] ४ कुन्द[B]
५ भस्त्रिकी[B] ६ चर्मयद्वारिपूरणम्[B] ७ तक्षणः ८ न्यपि[B] ९ रन्धCK

तूलस्फोटनधन्वथ[१] पिञ्जनी तूलशोधिनी ।
पिचुः पुंस्यस्त्रियां तूलं बादरं तन्तुकारणम् ॥७१॥
कपाललासिका तूललासिका[२] पितिकापि च ।
तर्कुः स्त्रियां पुनः क्लीबं तद्वत् कर्त्तनसाधनम् ॥७२॥
वर्त्तनी तूलपीठी च तर्कुशाणस्तु जामिकः[३] ।
त्रिषु द्वारायणं सूत्रपर्णं यत्तेन वेष्ट्यते ॥७३॥
निर्वेष्ट[४]नं नाडिनीरमेकाष्ठी तूलशर्करा ।
नाराच्येषणिकाथ स्यात् संपुटस्तु समुद्गकः ॥७४॥
त्रिषु पेटा पेटिका स्त्री पेटिकः पेटकोऽस्त्रियाम् ।
स्यान्मञ्जूषा मञ्जुषिका पेडा पेडिरुभे समे ॥७५॥
मञ्जूषापि स्त्रियां चाथ द्वयोर्विवधवीवधौ ।
पर्याहारो भरो भारोप्यथापि स्या[५]द्विहङ्गमा ॥७६॥
विहङ्गिका भारयष्टिस्तदालम्बिनि जालके ।
शिक्यं क्लीबे पुंसि काचष्टङ्कोऽस्त्री ग्रावदारणः ॥७७॥
वासी तु तक्षणी पत्रदारकः क्रकचोऽस्त्रियाम् ।
करपत्रं पुनः क्लीबे शिल्पं कर्मकलादिकम् ॥७८॥
स्यादयःप्रतिमा सूर्मी शूर्मी स्वर्णविनिर्मिता ।
हरिताथ प्रतिच्छाया प्रतिमा प्रतियातना ॥७९॥

---

१ धन्वर्था[B] २ पिनिका[B] ३ सामकः[B] ४ निवेष्टनं नाडिचीरमेकाष्ठी तल[3]
५ द्विहंनमा[B]

उपमार्चा प्रतिनिधिः पुंसि प्रतिकृतिः स्त्रियाम् ।
प्रतिबिम्बं प्रतिमानमुपमानं नपुंसकम् ॥८०॥
वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक् ।
साधारणः समानश्च ते तूत्तरपदे स्थिताः ॥८१॥
निभसंकाशनीकाशप्रतीकाशोपमादयः ।
कर्मण्यातु विधा भृत्या भृतिः[1] स्त्री कर्मवेतनम् ॥८२॥
भरण्यं भरणं मूल्यं निर्वेशः पण इत्यपि ।
स्त्रियां कुटी तु तरला परिस्रुन्मा[2]दिनीवती ॥८३॥
गन्धोत्तमेरा मदिरा मदिष्ठा वारुणी हला ।
प्रसन्ना मदना हाला काचमाची परिस्रुता ॥८४॥
वाल्कली[3] कपिशा वीरा काहला [4]कालवाब्धिजा ।
शुण्डा दैत्या देवसृष्टा[5] माधवी मद्यमस्त्रियाम् ॥८५॥
कत्तोयं[6] हार[7]हूरं च कापिशायनमित्यपि ।
चषको[8]रसकः सीधुरस्त्रियां कापिशं च शुण् ॥८६॥
हालाहलोऽस्त्रियां चापि[9] माधवी माधवोपि च ।
मदो मध्वासवस्तुल्यौ मधु माध्वीक इत्ययम् ॥८७॥
कपिनाशनमाध्वीके[10] स्यादि[11]रा गन्धमादनी ।
आसवोलिः पुमान् क्लीबे कल्पमासुतिकृन्मधु ॥८८॥

---

१ भर्मं B २ दनावती B ३ काल्कली B ४ वार्धजा B ५ दैवसृष्टा B ६ कृतोऽयं B
७ हारहरं K ८ वषको CK ९ माध्वी च B १० कपिलाशन B ११ मुदिरा B

अरिष्टं[1] कश्यं तत्रैव शालिपिष्टकृता सुरा ।
मैरेयमस्त्रियां क्लीबे माध्वं माधूकमस्त्रियाम् ॥८९॥
मधूकपुष्परसजा माध्वी साथ गुडोद्भवा ।
गौडी न ना शर्करोत्थं शार्करं स्यात्तदैक्षवम् ॥९०॥
मृद्वीभवं स्यान्माद्वींकं तत्कालमक्षवल्कजम् ।
आक्षं सर्वे सीधवः स्युः शीतोष्णादिविभेदतः ॥९१॥
पक्वापक्वविभेदेन चतुर्द्धा तद्विदा अथ ।
कादम्बरी नारिकेलतालखर्जूरसंभवा ॥९२॥
एवं बहुविधं मद्यं देशदेशसमुद्भवम् ।
कैलातादि[2] समुन्नेयमथ भक्षणचक्षणे ॥९३॥
उपदंशोवदंशः स्यान्मद्यपायनमित्यपि ।
शुण्डापानं[3] मदस्थानं[4] मधुवारा अनुक्रमाः ॥९४॥
जाङ्गलो[5] जगलः पङ्के मद्यसंधानमासुतिः ।
आसवो भिषवोऽपि स्यात् किण्वं तु मद्यबीजकम् ॥९५॥
नग्नहुर्नग्नहूः पुंसि सुरामण्डाग्रभागके ।
क्वापि कारोत्तरः कारोत्तमः स्यात्पुनरित्यपि ॥९६॥
स्त्रीप्रसन्ना [6]षणापानं पानगोष्ठी स्त्रियामियम् ।
स्युर्गल्वर्कश्च रसकश्चषकश्चास्त्रियामिमे ॥९७॥

---

१ अरिष्ट-मित्याद्यर्द्धद्वय B पुस्तके न दृश्यते २ कैलासादि B ३ पान K ४ मधिस्थान B
५ मङ्गल: B ६ प्रसन्न B

पानार्थात्पात्रपर्यायमनुतर्षोनुतर्षणम् ।
वेश्यापतिः पल्लवको भुजङ्गश्च विटश्च सः ॥९८॥
उपप्लुतस्तु व्यसनी पञ्चभद्रोप्यवप्लुतः ।
धूर्तोक्षदेवी कितवो द्यूतकृत्[1] कृष्णकोहलः ॥९९॥
तथैव द्यूतकारश्च दुरोदरदरोदरौ ।
अक्षधूर्त्तो देवसभ्यः सभिकः साभिकोऽपि च ॥१००॥
लग्नकः प्रतिभूर्द्यूतकारकस्तृणमत्कुणः ।
द्यूतोऽस्त्रियामक्षवती दरोदरदुरोदरे ॥१०१॥
द्यूतबीजं वटी वा ना हिरण्यं च वराटकः ।
द्वयोर्वराटो वटकः कपर्दः श्वेतकोऽपि च ॥१०२॥
श्वेता कपर्दिका श्वेती चूर्णिः षण्कितवं[2] पणः ।
परिणायस्तु[3] सारीणां समन्तान्नयने[4] स्त्रियाम् ॥१०३॥
शारिर्द्वयोः स्त्रियां शारी शारोना पाशकः पुनः ।
अक्षविन्दुत्रिक[6]द्वन्द्वे दुन्दुभी दुन्दुभिः स्त्रियौ ॥१०४॥
अपि स्यात्फलकः[7] पुंसि ततः क्लीबे तु पुंसि वा ।
अष्टापदं[8] सारिफलं[9] पणद्यूतं समाह्वयः ॥१०५॥
कृतं द्वापरमित्याद्यास्तद्भेदाः[10] स्युरनेककाः ।
स्याच्चञ्चुरी[11] तिन्तिडी च पञ्चमीसारि[12] शृङ्खला ॥१०६

१ कृष्ट^B २ दैव^B ३ पुनः^B ४ शारीणां^B ५ अयनो^K ६ द्वये^CK
७ स्फलकः^B ८ शारि^B ९ प्राणि^B १० उन्नेयाःस्युरनेकशः^B ११ चम्बुडी^B
१२ शारि^B

अष्टनागं नयवटी नयः स्याज्जतुपुत्रकः ।
अग्लहं चतुरङ्गं स्यान्नयपर्यायतो बलम् ॥१०७॥

कल्पद्रौ केशवकृते फलिते नाम सत्फलैः ।
प्रकाण्डः सप्तमः शूद्रसंज्ञः[1] सिद्धिमुपागतः ॥१०८॥

इति शूद्रादिप्रकाण्डः ।

स्त्रादाराद्यं यद्विशेष्यं यादृशैः प्रस्तुतं पदैः ।
गुणद्रव्यक्रियाशब्दा[2] विज्ञेयास्तस्य भेदकाः ॥१॥

क्षेमंकरोरिष्टतातिः शिवतातिः शिवंकरः ।
पुण्यवान् सुकृती धन्यो महेच्छस्तु महाशयः ॥२॥

उदात्त उद्भटोदीर्णमहात्मानो महायशाः ।
महामनाः कृतार्थस्तु महोत्साहो महोद्यमः ॥३॥

तदर्थकारश्चापि स्यात्कृतकृत्योऽथ शिक्षितः ।
निष्णातश्चतुरो विज्ञः प्रवीणो निपुणः पटुः ॥४॥

छेकश्छइल्लश्छेकालो विदग्धश्छेकलोऽपि च ।
तद्वत्स्यात्कृतकर्मापि छेको दक्षो लघुक्रियः ॥५॥

विद्रपी[3] तु सहृदयो हृदयालुः कृतीत्यपि ।
तथा सहृदयोपि स्यादथ वैज्ञानिकः पुनः ॥६॥

---

१ पूर्ति[B] २ स्तथाते तस्य[B] ३ विद्रूपी[B]

सैवोक्तः[1] कर्महस्तोपि कुशलश्च कृताननः ।
पूज्यः प्रतीक्ष्यः सांशयिकः संशयापन्नमानसः ॥७॥
दक्षिणीयो दक्षिणार्हस्तत्र[2] दक्षिण्य इत्यपि ।
स्युर्वदान्यस्थूललक्षदानशौण्डा बहुप्रदे ॥८॥
वदान्यो दानशीलः स्यादुदारश्चानुदारवत् ।
त्यागी च[3] स्थूललक्षोपि वरदस्तु समर्द्धकः ॥९॥
संयद्वरोप्यभयदे पिङ्गलस्तु बहुश्रुतः ।
व्रतानुष्ठानसमये कान्तया कामितोपि सन् ॥१०॥
तदानुकूल्यं न चरेदसिधाराव्रती च सः ।
सदा लक्षणसंपन्नः पुमान्भालाङ्क उच्यते ॥११॥
मनस्वी बहुविघ्नेऽपि कार्ये सुस्थिरमानसः ।
जैवातृकः स्यादायुष्मानन्तर्वाणिस्तु शास्त्रवित् ॥१२॥
व्युत्पन्नः प्रहृतः क्षुण्णः कारणी तु परीक्षकः ।
तारतम्यविचारज्ञः श्लिकुतः[4] संशयावहः ॥१३॥
हृषमाणो विकुर्वाणः प्रमना हृष्टमानसः ।
दुर्मना विमना अन्तर्मनाः स्यादुत्क उन्मनाः ॥१४॥
उत्सुकोत्कण्ठितौ चाथ सरलोदारदक्षिणाः ।
अपि स्यात्सुकलोर्थस्य दानभोगसमन्विते ॥१५॥

---

१ सैवोक्ते$^{K}$ २ दक्षिण$^{B}$ ३ स्यागी$^{KC}$ ४ शिकुंतः$^{B}$

दोषैकदृक् पुरोभागी साधुसभ्यार्यसज्जनाः ।
तत्परे प्रसितासक्ता विष्टार्थोद्युक्त उत्सुकः ॥१६॥
प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः ।
गुणैः प्रतीते तु कृतलक्षणाहृतलक्षणौ ॥१७॥
आढ्योस्तिमान्धनी स्वामीभ्येश्वरौ पतिरीशिता ।
भर्त्तेशेनेन्द्रनाथार्या नायकस्त्वधिभूः प्रभुः ॥१८॥
नेताधिपः परिवृढोऽधिकर्द्धिस्तु समृद्धकः ।
डिङ्गरः किङ्करो भृत्यो दासः प्रेष्यः पराचितः ॥१६॥
परिकर्मी परिस्कन्दनियोज्यपरिचारकाः ।
भुजिष्योऽभ्यागारिकस्तु कुटुम्बव्यापृतः स यः ॥२०॥
पुंस्युपाधिः सुन्दराङ्गः सिंहसंहननो हि सः ।
निर्वार्यः[1]कार्यकर्ता यः संपन्नः सत्त्वसंपदा ॥२१॥
सत्कृत्यालंकृतां कन्यां यो ददाति स कूकुदः ।
वीक्षा[2]पन्नो विलक्षेथाधृष्टे शालीनशारदौ ॥२२॥
लक्ष्मीवांल्लक्ष्मणः श्रीमांल्लक्ष्मणो लक्षणोपि च
अथ स्निग्धो वत्सलोऽथ दयालुरपि सूरतः ॥२३॥
स्यात् कृपालुः कारुणिकः स्वतन्त्रस्तु निरङ्कुशः ।
अपावृतो यथाकामी स्वच्छन्दो निरवग्रहः ॥२४॥

---

१ निर्वार्यः B २ व्रीडा B

स्वैर्यधीनस्तु परवान्नाथवान्निघ्नगृह्यकौ ।
अस्वच्छन्दः पराधीनः परतन्त्रो वशोऽपि च ॥२५॥
[1]आयत्तश्चाथ खलपूः स स्याद्बहुकरोऽपि च ।
चिरक्रियो दीर्घसूत्रो जाल्मोऽसमीक्ष्यकारिणि ॥२६॥
सेवाहीनः श्लिकुतमस्थूत्कृतः[2] कुष्ठपीडितः ।
कुसृत्या विभवान्वेषी पार्श्वकः संधिजीवकः ॥२७॥
तीक्ष्णोपायेन यो जीवेत्स आयःशूलिकः पुनः ।
क्रियासु मन्दः कुण्ठः स्यात् क्रियावान् कर्मसूद्यतः ॥२८॥
कर्मक्षमोऽलंकर्मीणः कर्मशूरस्तु कर्मठः ।
सकार्मः कर्मशीलो यः कर्मकारस्तु तत्क्रियः ॥२९॥
कर्मण्यभुक्[3] कर्मकरः कर्मकारस्तु निर्भृतिः ।
भृतिको भृतिभुक्कर्मकरो वैतनिकोऽपि सः ॥३०॥
अपस्नातो मृतस्नान आमिषाशी तु शौष्कलः ।
शौष्कलः[4] शष्कुलः[5]शास्ता देशकोऽथ बुभुक्षितः ॥३१॥
अप्स्नातः क्षुधितश्चाथ जिघत्सुरशनायितः ।
परान्नः परपिण्डाद आशितो घस्मरोद्मरः ॥३२॥
भक्षकः स्यादथ पुनर्विजिगीषाविवर्जिते ।
आद्यूनः स्यादौदरिकोऽप्यथ स्वोदरपूरके ॥३३॥

---

१ अयत्त[B] २ स्थूकृतः[K] ३ भरण्यभुक् भ्रमः ४ शौष्कलः[KC] ५ शुष्कुलः[B]

कुक्षिंभरिः स्यादुदरंभरिरात्मंभरिः पुनः ।
सर्वान्नीनस्तु सर्वान्नभोजि[1]पर्याय इत्यपि ॥३४॥
तथोदरपिशाचः स्यात्तर्षितश्च पिपासितः ।
पिपासुस्तर्षित[2]स्तृष्णक् पिपासस्तृषितोऽपि च ॥३५॥
लालसो लोलुपो लिप्सुर्लम्पटश्चाभिलाषुकः ।
लुब्धो गृध्नुर्गर्द्धनः स्यात्मायी कुरकजालिकौ ॥३६॥
दण्डाजिनी व्यंसकोथाविनीतः[3] स्यात्समुद्धतः ।
उन्मदस्तून्मदिष्णुः स्यात्कामुके कमितानुकः ॥३७॥
कम्रः कामयिताभीकः कामनः कमनोभिकः ।
कामिः कामी च कमुको[4] लुब्धे लोलुपलोलुभौ ॥३८॥
मत्ते शौण्डोत्कटक्षीबाः पञ्चभद्रः[5] परिप्लुते ।
व्यसनी निर्लक्षणस्तु पाण्डुरपृष्ठ इत्यपि ॥३९॥
अथ श्लिकुतमो बालः पितृहीनो विनायकः ।
गेहेनर्दी गृहेशूरः पिण्डीशूरोऽथ दुष्टधीः ॥४०॥
वित्रशोऽनिष्टबुद्धिः स्यादीर्ष्यालुः कुहनः पुनः ।
स्यादस्थिरे संकुसुको द्वेष्टात्वनुपदीत्यपि ॥४१॥
व्युत्पन्नः संस्कृतः क्षुण्णः प्रहृतोऽथ स्थिरोऽपि च ।
नीलीरागो विश्रथः स्यात् स्थिरसौहृद इत्यपि ॥४२॥

---

१ भोगी (गि)CK २ स्तर्षुलB ३ व्ययिनीत इति सर्वत्र पाठः ४ कुमुकोB
५ पञ्चभद्रKC उपप्लुतस्तु व्यसनी पश्चभद्रोप्यवप्लुत इति पूर्वं मद्यशब्दानन्तर-
मुक्तम् । ६ सेयाहीनः, श्लिकुतमः, श्लिकुतः संशयावह इति पूर्वमुक्तम् ।

कुसुम्भरागोऽतोन्यः स्याद्धरिद्राराग इत्यपि ।
सुनिश्चितः [1]संशितः स्यात्पुत्रान्नादः कुटीचकः ॥४३॥
विदग्धो नागसंचारजीवी च शरणार्थकः ।
अभ्यापन्नश्च[2]तद्वत्स्याद्दीक्षापन्नो विलक्षितः ॥४४॥
आसीन उपविष्टः स्यादूर्ध्वस्थोर्ध्वंदमौ समौ ।
उत्पश्य उन्मुखे गृह्यः [3]पक्ष्ये न्युब्जस्त्वधोमुखे ॥४५॥
प्रेतवाहित आविष्टः शान्तो दान्तोऽथ दातरि ।
दाको दारुश्च मुदिरो वचने स्थित आश्रवः ॥४६॥
वश्यः प्रणेयो निभृतो विनीतः प्रश्रितः समाः ।
विधेयो विनयग्राही प्रगल्भः प्रतिभान्विते ॥४७॥
प्रौढोथ सूक्ष्मदर्शी तु कुशाग्रीयमतिश्च सः ।
प्रत्युत्पन्नमतिस्तत्कालधीर्मेधाविमेधिरौ ॥४८॥
धृष्टे धृष्णो वियातश्च धृष्णक् स्यादस्तिमान्धनी ।
स्यादधृष्टे तु शालीनः शारदोऽथातिकुत्सिते ॥४९॥
[4]कट्वरश्चाथ[5]षट्प्रज्ञः कामकेलिर्विदूषकः ।
[6]पिङ्गः पाठविकः पट्टो व्यलीको धूर्त्त इत्यपि ॥५०॥
पीठकेलिः पीठमर्दो भविलश्छिदुरोविटः ।
प्रघटाविच्छास्त्रगण्डः [7]प्रपञ्चलविपश्चितौ ॥५१॥

---

१ शंसितः[BK] २ अभ्यपन्न इति पाठः सर्वत्र ३ पक्के[CK] ४ कट्टर[B] ५ षड्वज्ञः[B]
६ सिङ्गः[B] षिङ्गइति स्यात् ७ प्रपञ्चिलविपञ्चिलौ[B]

समावर्थो विप्रलब्धो वञ्चितो विकृतोऽपि च ।
ग्रामेयकस्तु ग्रामीणो ग्राम्यो ग्रामचरोऽप्यथ ॥५२॥
दुर्विगाह्यं दुःप्रधृष्यं विषमं स्थपुटं पुनः ।
अगम्यमनवस्थं स्यात्समे बहलपीवरे ॥५३॥
प्रेषितस्तु विसृष्टः स्यात्प्रहितः परिसृष्टकः ।
उल्वणस्तूत्करोद्गाढ उद्धतश्चाथ दैष्टिकः ॥५४॥
स्याद्दैवतत्परोऽजिह्मः प्रगुणः प्राञ्जलोप्यृजुः ।
सरलः [1]प्रोष्यः पथिकः समीचीनः समञ्जसः ॥५५॥
खट्वारूढोऽविनीतः स्यान्मसार[2] मसृणौ समौ ।
अग्र्योग्रगण्यो ग्रामण्यः श्रेष्ठः शाल्युत्तमः पुनः ॥५६॥
क्लीबे ऽव्ययं प्रधानं स्यादुपाग्रं प्रमुखं पुनः ।
उत्तमानुत्तमे[3] तुल्ये स्यात्प्रवेकोऽपि राजघः ॥५७॥
[4]स्थगस्तीक्ष्णोप्यथाशंसुराशंसितरि पातुके ।
पतयालुः संशयालुः स्यात्संशयितरीत्यपि ॥५८॥
श्रद्धालुः श्रद्धया युक्ते ग्रहयालुर्ग्रहीतरि ।
हृदयालुः सहृदये वन्दारुरभिवादके ॥५९॥
लज्जाशीलो[5]ऽपत्रपिष्णुः स्याद्वर्द्धिष्णुस्तु वर्द्धनः ।
उत्पतिष्णु[6]स्तूत्पतितोऽलंकरिष्णुस्तु मण्डनः ॥६०॥

---

१ प्रोथः[B] २ न्मसणमसृणौ[CK] ३ नुत्तमौ तुल्यौ[B] ४ मृग[CK] ५ शीले[B]
६ स्तूत्पतिता[B]

भूष्णुर्भविष्णुर्भविता वर्त्तिष्णुर्वृष्णुवर्त्तनौ ।
निराकरिष्णुः क्षिप्नुः स्यात्प्रभूष्णुस्तु सहाः पुनः ॥६१॥
क्षमावांश्चापि शक्तः स्यादथ रोचिष्णुरोचनौ ।
शरारुर्घातुको हिंस्रो रुष्टेऽमर्षणरोषणौ ॥६२॥
क्रोधनः कुहनेर्ष्यालू चण्डस्त्वत्यन्तकोपनः ।
जागरूको जागरिता वासदायी तु शङ्कुरः ॥६३॥
शरणार्थ्यभिपन्नः स्या[1]त्सान्द्रः स्निग्धश्च मेदुरः ।
ज्ञाता तु विदुरो विन्दुर्वेदिताथ नमस्यितः ॥६४॥
अपा[2]चितो नमसितोऽचित[3] आचित इत्यपि ।
विसृत्वरो विसृमरो विकासी तु विकस्वरः ॥६५॥
विसारी तु प्रसारी स्याद्घूर्णितः प्रचलायितः ।
स्वप्नक् शयालुर्निद्रालुर्निद्राणशयितौ पुनः ॥६६॥
सुप्तःश्लथस्तु शिथिलः प्रतीकप्रतिकौ समौ ।
प्रतिकूलेऽथापि पुनः पराचीनः पराङ्मुखः ॥६७॥
प्रतीपोथाप्यवा चीनोऽधोमुखेऽप्यथ संमुखे ।
[4]संमुखीनोथ देवद्र्यङ् देवानञ्चति यः पुनः ॥६८॥
सहाञ्चति स सध्र्यङ् यो विष्वद्र्यङ् विष्वगञ्चति ।
यस्तिरोऽञ्चति तिर्यङ् स सम्यङ् यः सममञ्चति ॥६९॥

---

१ त्सान्द्रस्निग्धश्च[B] २ अयाचितो[B] ३ श्रित[B] प्रतीपइत्यर्धद्वयं[K] पुस्तके नास्ति
४ संमुखोप्यथ[CK]

प्रथमामुख्यवचने किमः कव्यङ् भवेदिति ।
सहिष्णुः सहनः क्षन्ता तितिक्षुर्दमिता दमी ॥७०॥
वदो वदावदो वक्ता वाचोयुक्तिपटुः पुनः ।
वागीशो वाक्पतिर्वाग्मी वावदूकोऽतिवक्तरि ॥७१॥
जञ्जपूकस्तु जल्पाको वाचालस्तु विगर्ह्यवाक् ।
वाचाटः कुरवेऽबद्धमुखे मुखरदुर्मुखौ ॥७२॥
सूचकोथापि शक्रे[1] तु[2] सुमुखस्तु प्रियंवदः ।
श्लक्ष्णः प्रगल्भवचनः कुवादः कुवचोऽपि च ॥७३॥
कद्वदो गर्ह्यवाग्दुर्वाग्यद्वदोनुत्तरेपि च ।
अथानेडो [3]वर्कटः स्यादधरो हीनवादिनि ॥७४॥
एडो मूकः [4]कडोऽवाचि स्यादसौम्य [5]स्वरेऽस्वरः ।
रवणः शब्दनो नान्दीवादी नान्दीकरः समौ ॥७५॥
डमरोड्डमरौ तुल्यौ क्रीडासंरम्भनिर्भरे ।
शास्त्रेष्वधीती मन्त्रेषु नाधीती[6] शिलकुतोऽप्यथ ॥७६॥
एडमूकोऽनेडमूको वक्तुं श्रोतुमसज्जिते ।
तूष्णींशीलस्तु तूष्णीको नग्नोऽवासा दिगम्बरः ॥७७॥
देशिके [7]शासकः शास्ता धार्मिको धर्मिकः समौ ।
निःकाशितोऽपकृष्टोपध्वस्ते न्यक्कृतधिक्कृतौ[8] ॥७८॥

---

१ शक्तेंB शक्ने इति कोषान्तरेषु पाठः २ सुमुखे तुKC ३ वर्करःB ४ कुडाB
५ स्वरीB ६ रलकुतोK ७ शासिताB ८ विकृतौKC

आत्तगन्धोऽभिभूतोरि[1]त्याजिताहंकृतिश्च सः ।
दण्डितो दापितश्चापि साधितोऽथ निराकृतः ॥७९॥
प्रत्याख्यातः प्रतिक्षिप्तः पत्यादिष्टोपविद्धवत् ।
निरस्तश्चाप्यधिक्षिप्तस्तुल्यौ विक्लवविह्वलौ ॥८०॥
प्रतिबद्धः प्रतिहतो हृतश्चापि मनोहृतः ।
नद्धे बद्धो निगडितः संयतः कीलितः सितः ॥८१॥
आलानितो यन्त्रितोऽपि स्यात्संदानित इत्यपि ।
स्थिरेऽ[2]संकसुकश्चाथ विहस्तव्याकुलौ समौ ॥८२॥
व्यग्रोऽथापि पुनः स स्यात्समुत्पिञ्जश्च पिञ्जलः ।
भृशाकुलोत्पिञ्जलौ च क्षारिताक्षारितौ पुनः ॥८३॥
अभिशस्तेऽथोपरक्तो व्यसनार्तो [3]वधोद्यते ।
संनद्ध आततायी स्यात् कशार्हः कश्य इत्यथ ॥८४॥
आपन्नश्चापत्प्राप्तोथ प्रत्याख्याते पुनः पुनः ।
प्रतिशिष्टो [4]नारकीटः स्वदत्ताशाविहन्तरि ॥८५॥
द्वेष्यस्त्वक्षिगतो वध्यः शीर्षच्छेद्यो विषेण यः ।
वध्यो विष्यो मुसल्यस्तु यो वध्यो मुसलेन च ॥८६॥
शिश्विदानः कृष्णकर्मा निकृतस्त्वनृजुः शठः ।
दोषैकदृक् पुरोभागी द्विजिह्वो मत्सरी खलः ॥८७॥

---

१ पिस्माज्जिता B २ ऽसंकुसुक B ३ विघो B ४ वारकीट इत्यभिधानन्तरेषु पाठः

कर्णेजपः सूचकः स्यान्नीचः कुरवदुर्जनौ ।
पिशुनोऽथ नृशंसः स्यात्क्रूरो घातुक इत्यथ ॥८८॥
स्याद्धूर्तो वञ्चकः पापः क्षुद्रो वञ्चूक इत्यपि ।
कीनाशश्च कदर्यः स्यात्किंपचानो मितंपचः ॥८९॥
दृढमुष्टिर्बद्धकरो [1]निस्वो दुस्थश्च दुर्विधः ।
[2]दुस्थितो दुर्गतो दीनो दरिद्रोऽकिंचनोऽपि च ॥९०॥
यद्भविष्यो दैवपर[3]स्तर्कुकस्तुवनीयकः ।
स्याद्याचको याचनको मार्गणोऽथ शुभार्थिनि ॥९१॥
शुभंयुः स्यादहंकारिण्यहंयुर्मित्रवत्सले ।
मित्रंयुरथ शंवःस्याच्छंयुरात्मसुखार्थिनि ॥९२॥
स तु पञ्चजनीनः स्या[4]द्भाण्डादिनिरतो हि यः ।
अनुग्रे सोम्यसौम्यौ द्वौ दीर्घे व्यायतश्चायतः ॥९३॥
हर्षणो हर्षुकस्तुल्यौ श्वेतविन्दुयुते[5] द्वयम् ।
स्यात्पृषत् पृषतस्तद्वत् कान्दिशीको भयद्रुते ॥९४॥
स च कान्दिशिकोऽपि स्याद्विलीने विद्रुतो द्रुतः ।
प्रतिवेशी प्रतीवेशी स्यादासन्ननिवासिनि ॥९५॥
ब्रह्मण्यो ब्राह्मणहितो व्रतदम्भस्त्वकल्कनः ।
वैरङ्गिको विरागार्ह[6]श्चक्षणः कलिलक्षितः ॥९६॥

---

१ निःस्वोB २ दुस्थितिदु°B ३ स्तर्कंकB ४ द्भाण्डादिB ५ युतंद्वयम्B
६ श्रक्षुपाः

स्याच्चक्षुष्यस्तु सुभगः स्यात्प्रणाय्यस्त्वसंमतः ।
स्वस्था[1]नस्थः परान्द्वेष्टि यः सगोष्ठश्च उच्यते ॥९७॥
[2]दिव्योपपादुका देवा नृगवाद्या जरायुजाः ।
[3]स्वेदजाः कृमिदंशाद्याः पक्षिसर्पादयोऽण्डजाः ॥९८॥
उद्भिज्जास्तरुगुल्माद्या उद्भिदुद्भिज्जमुद्भिदम् ।
मनःपर्यायतो हारि हृरं ज्ञं रममित्यपि ॥९९॥
[4]सुन्दरं रुचिरं चारु कान्तं [5]वल्गु च पेशलम् ।
अभिरामं रामवामे मञ्जुलं मञ्जु[6] पेसलम् ॥१००॥
वन्धूरं वन्धुरं तुल्ये पेलवं चापि शोभनम् ।
रुच्यं चापि च चोक्तं स्यान्मनोज्ञं मञ्जु वञ्जुलम् ॥१०१॥
अपि स्यात्सुषमं चाथाभीप्सितं दयितं प्रियम् ।
अभीष्टं वल्लग[7]हृद्यमथासेचनकं हि तत् ॥१०२॥
निकृष्टे प्रतिकृष्टावरेफयाप्यावमाधमाः ।
रेपरेपारमा रेवो [8]निकृष्टः संडमस्त्रियाम् ॥१०३॥
कुपूयकुत्सितावद्यखेटगर्ह्याणका अपि ।
स्युर्वाच्यलिङ्गा मलिनं कल्मषं च मलीमसम् ॥१०४॥
स्यान्म्लानं कच्चलं तु स्यान्मलदूषितमित्यथ ।
निर्णक्तं विमलं वीध्रं पूतं मेध्यं पवित्रकम् ॥१०५॥

१ वस्थः[B] २ दिव्यौ[B] ३ उद्भिज्जाइत्यर्धद्वय[K]पुस्तके नास्ति ४ सुन्दरमित्यर्धद्वय[C] पुस्तके नास्ति ५ वल्यु[K] ६ पेशलं[B] ७ दूष्व[K] ८ निकृष्ट[B]

समूढं शोधितं मृष्टं निःशोध्यमनवस्करम् ।
शून्यं तु वशिकं तुच्छमिरिणं शुन्यमीरिणम् ॥१०६॥
पुंसि क्लीबे नितानं स्यान्मसारं फल्गवथापि च ।
अग्रं प्राग्रं प्राग्रहरमाग्र्यमग्रीयमग्रियम् ॥१०७॥
मुख्यं वर्य्यं वरेण्यं च प्रबर्हं च प्रबर्हणम् ।
पराध्यानवराध्यौं द्वे पूरणः पूरकः समौ ॥१०८॥
विनाकृतं विरहितं व्यवच्छिन्नं विशेषितम् ।
भिन्नं स्यादथ [1]निर्व्यूहे मुक्तं [2]यो वातिशोभनः ।१०९।
पुष्कलः सत्तमश्चापि श्रेयान् श्रेष्ठो [3]महत्तमः ।
स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः ॥११०॥
सिंहशार्दूलवृषभपुण्डरीकवृषा अपि ।
वराहधुर्यधौरेयाः सपर्यायाः क्रमादमी ॥१११॥
श्रेष्ठार्थगोचराः पुंसि स्त्रियौ मल्लीमचर्चिके ।
क्लीबे प्रकाण्डमुद्घश्च तल्लजश्चापि पुंस्युभौ ॥११२॥
सर्व एते प्रशस्तार्थाः स्युरुत्तरपदे स्थिताः ।
क्लीबे[4]ऽप्रधाने तु[5] प्राग्र्यमुपसर्जनमित्यपि ॥११३॥
विशंकटं[6] पृथु महद्विशाला च विसंकटा ।
स्त्रियां क्लीबे च विकटं पुंसि क्लीबे स्त्रियामिमे ॥११४॥

---

१ निर्व्यूह[B] २ चाथा[B] ३ महीतमः[B] ४ क्लीत्वप्रधानं[B] ५ तुप्राग्र्य[KC] त्वप्राग्र्यमिति स्यात् ६ विसंकट[B] ७ बहुलकं बृहत्[B] ८ बड्डोरु[B]

विसंकटो विशालो द्वे वद्रं वड्र[1] बृहत्पृथु ।
पीनं तु पीवरं पीवा [2]बहूरु विपुलं पुनः ॥११५॥
पीवपीवरभूरिष्ठपुष्टे स्थूलानि भूरि च ।
स्तोकं पत्रमुत्तमल्पं त्तुल्लकं [3]खुल्लकं पुनः ॥११६॥
सूक्ष्मं श्लक्ष्णं कृशं दभ्रमथ मात्रा स्त्रियां त्रुटिः ।
लवलेशकणाः पुंसि स्यादत्यल्पेप्यणुः कणाः ॥११७॥
स्वल्पमल्पं[4] कणीकं च कणिका च कणिः कणी ।
कणीयोल्पीयमल्पिष्ठमणीयो वहुलं बहु ॥११८॥
प्रभूतं प्रचुरं प्राज्यमदभ्रं पुरुहुः पुरुः ।
भूयो भूरि स्फिरं गाढं निविडं विरलं पुनः ॥११९॥
निविरीशं[5] च भूयिष्ठं पिण्डितं गुणितं हृतम् ।
करम्बितं तु खचितं विरलं शिथिलं श्लथम् ॥१२०॥
गणनीयं गणेयं च संख्यातं गणितं पुनः ।
सर्वविश्वसमाशेषसमस्तनिखिलानि च ॥१२१॥
अनूनाखण्डसंपूर्णसमग्रसकलानि च ।
निःशेषाखिलकृत्स्नानि घनं सान्द्रं निरन्तरम् ॥१२२॥
समीपनिकटासन्नसनीडसविधानि च ।
संनिकृष्टसमर्याद[6]सवेशान्यभितोऽव्ययम् ॥१२३॥
स्याच्चोपकण्ठमभ्यर्णं सदेशाभ्यग्रके पुनः ।
अभ्यासमभ्याशमपि संसक्ते त्वपदान्तरम् ॥१२४॥

---

१ बहुलकं वृहत्[B] २ वड्रोरु[B] ३ सुल्लकं[B] ४ स्यल्पमित्यर्धं[K] पुस्तके नास्ति
५ निवरीशं[KC] ६ संदेशा[B]

नेदिष्ठमन्तिकतमं चाव्यवहितमित्यपि ।
[1]सुदूरेप्यायतं दीर्घं वृत्ते निस्तलवर्त्तुले ॥१२५॥
विषमोन्नत स्थपुटं बन्धुरं तून्नताननम् ।
उच्चे प्रांशून्नतं तुङ्गमुदग्रमपि [2]वाच्यवत् ॥१२६॥
स्यादुच्चैस्त्वकैर्नीचैर्नीचकैर्न्यक् च नीचकः ।
वामनो ह्रस्वखर्वौ चावागग्रेऽवनतानते ॥१२७॥
प्रेङ्खोलितस्तरलितो ललितः प्रेङ्खितः पुनः ।
अरालं वृजिनं जिह्ममूर्मिमन्नतमित्यपि ॥१२८॥
[3]स्यादावनतमाविद्धं नम्रं बन्धूरबन्धुरे ।
वक्रं[4]वेकं च कुटिलं [5]भुग्नं वेल्लितमित्यपि ॥१२९॥
वक्रं चाथ प्राञ्जलं स्यात्सरलं पगुणं पुनः ।
अजिह्ममाकुलं तु स्याद्व्यस्ते प्रगुणमित्यपि ॥१३०॥
अनाकुलं शाश्वतस्तु ध्रुवो नित्यः सनातनः ।
सदातनश्च स्थास्नुस्तु स्थेयान् स्थिरतरोऽपि च ॥१३१॥
एकरूपतया कालव्यापी कूटस्थ उच्यते ।
स्थावरं स्थावरादन्य[6]च्चरिष्णु जङ्गमञ्चरम् ॥१३२॥
चराचरं त्रसं द्रङ्गं[7] कम्प्रं चरनकम्पने ।
चटुलं चपलं लोलं चञ्चलं च चलाचलम् ॥१३३॥

---

१ सुदूरेइत्यर्धद्वयं[K] पुस्तके नास्ति २ चाव्ययम्[K] ४ स्यादादनत[B] ३ वंकं[B] ५ सम्नं[B] ६ जङ्गमं च चरिष्णु च[B] ७ त्रसमिङ्ग[B]

[1]चलं स्यात्तरलं चाथ पारिप्लवपरिप्लवे ।
अतिरिक्तः समधिको दृढसंधिस्तु[2] संहतः ॥१३४॥
क्रूरं करेरं जठरं जरठं दृढनिष्ठुरे ।
मूर्त्तं निवातं निःसंधि निर्भरं प्रौढमेधितम् ॥१३५॥
प्रवृद्धं प्रतनं प्रत्नं पुराणं च पुरातनम् ।
प्राणं चिरंतनं चापि स्त्रीपुराणा पुराण्यपि ॥१३६॥
नवीनो नूतनो नव्यः प्रत्यग्रो नूतनो नवः ।
अथ स्यात्सुकुमारं तु कोमलं मृदुलं मृदु ॥१३७॥
क्लीबेऽव्ययं त्वनुपदं वाच्यलिङ्गमिदं त्रयम् ।
अन्वगन्वक्षमनुगमनध्यक्षमतीन्द्रियम् ॥१३८॥
प्रत्यक्षं स्यादैन्द्रियकमेकाग्रस्त्वेकतानकः ।
एकायनोनन्यवृत्तिः पुंस्यादिः पूर्व आदिमः ॥१३९॥
पौरस्त्यः प्रथमोन्तोऽस्त्री जघन्यश्चरमोन्तिमः ।
पाश्चात्यः पश्चिमोऽन्त्यश्च स्फुटं स्पष्टं निरर्थकम् ॥१४०॥
अव्यक्तमुल्वणं मोघं मध्यसीयं दिने पुनः ।
अग्र्यं स्यादग्रिमं साधारणं सामान्यमित्यपि ॥१४१॥
सर्वैर्गुणैरविकलं वस्तु सस्यकमुच्यते ।
एकाकी त्वेककश्चैकोऽथान्योन्यतर इत्यपि ॥१४२॥

---

१ चलं चरं च तरलं चापिप्लवपरिप्लवेB २ श्च[KC]

इतरस्त्वस्त्वदेकः स्यादन्यार्थेऽन्यतरत्पुनः ।
द्वन्द्वभिन्नेप्यथोच्चण्डमुत्ताल[1]मविलालितम् ॥१४३॥
निरर्गलमबाधं स्यात्प्रसव्यं प्रतिकूलकम् ।
अपसव्यमपष्ठु स्यादपष्ठुलमपि क्वचित् ॥१४४॥
अपसव्यं॰शरीरस्य दक्षिणं चाथ संकटम् ।
संबाधः पुंसि कलिलं गहनं चापि संकुले ॥१४५॥
संकीर्णाकीर्णके चाथ तते विस्तृत[2]विस्तृते ।
अन्तर्गतं विस्मृतं स्यात् प्राप्तं प्रणिहितं च तत् ॥१४६॥
वेल्लितप्रेङ्खिताधूतविधुतानि प्रकम्पितम् ।
आधुतं चाथ निष्ठ्यूतं नुत्तं नुन्नं[3]तथास्तवत् ॥१४७॥
ईरितः क्षिप्त आविद्धः स्यात्परीष्टं तु वेष्टितम् ।
परिविष्टं परिक्षिप्तं[4]निवृत्तं परिखादिना ॥१४८॥
वेष्टिते[5] मुष्टितं तु स्यान्मुषितं च बलोद्धते ।
अच्छिन्नमुद्धतं तु स्यादवबर्हितमित्यपि ॥१४९॥
उत्पाटितं[6] प्रवृद्धे तु प्रसृतं शाततेजिते ।
[7]न्यस्तं निसृष्टं निर्दिष्टं[8] पूजितोपचिते समे ॥१५०॥
गूढं गुप्तं गुण्ठितं च [9]मूषितं चाप्यथ द्रुतम् ।
उदीर्णं स्यादथोद्गीर्णं उद्यते काचितं पुनः ॥१५१॥

---

१ मविलम्बितम्[B] २ विस्मृते[B] ३ नुन्नमथा[B] ४ निर्वृत्तं[B] ५ मुषितं तु स्यान्मूषितं[B] ६ उत्पादितं[KC] ७ न्यस्ते[B] ८ पूजितापचिते इति पाठः स्यात् ९ मूषितं

शिक्यितो लज्जितो ह्रीतो ह्रीणो रोमाञ्चितस्त्वसौ ।
हृष्टरोमाथ[१] पष्कः स्याद्विनाशोन्मुख इत्यपि ॥१५२॥
व्यावृत्तस्तु वृतो वृत्तः संयोजित उपाहितः ।
स्यान्मारितः संगमितः संस्थितो मृत इत्यपि ॥१५३॥
प्राप्यं गम्यं समासाद्यं स्यन्नं रीणं स्नुतं स्रुतम् ।
संगूढस्तु संकलितोवगीतः[२] ख्यातोवगर्हणः ॥१५४॥
अथापि[३] चैवं सर्वस्तु विश्वः समसिमावपि ।
इदं प्रत्यक्षनिर्देश्यमेतन्नेदिष्ठवर्त्ति तत् ॥१५५॥
विप्रकृष्टं च तददः परोक्षे तत्त्यदित्यपि ।
तदर्थप्रतियोगी यः स्वात्माहं त्वं परात्मनि ॥१५६॥
पूज्ये भवान् किं जिज्ञास्ये कतरस्त्वन्तरे[४] द्वयोः ।
कतमो भूयसामित्थं ज्ञेया अन्यतरादयः ॥१५७॥
[५]प्रत्यनन्तरपार्श्वस्थानन्तरं चापदान्तरम् ।
स्याद्विविधो बहुविधो नानारूपः पृथग्विधः ॥१५८॥
अधरीणो[६] धिक्कृतः स्यादवध्वस्तोवचूर्णितः ।
अनायासकृत[ं] फाण्टमबद्धोच्छृङ्खले [७]समे ॥१५९॥
स्यादसंबद्धमुद्दामं [८]निष्पक्वं क्वथितं समे ।
क्षीराज्यपयसां पाके [९]श्रितं निर्वाणमित्यपि ॥१६०॥

---

१ पक्कः$^{B}$ २ ख्यातावगर्हणः इति पाठः स्यात् ३ अथापीत्यर्धं द्वयं$^{K}$ पुस्तके न दृश्यते
४ स्त्वितरे$^{B}$ ५ पार्श्वस्थानन्तरमिति$^{K}$ पुस्तके नास्ति ६ धिक्कृतः$^{B}$ ७ क्षमे$^{B}$
८ निपक्वं$^{B}$ ९ श्रृतमितिपाणिनिः

मुनिवह्ह्यादिके चाथ निर्वातो विगतानिले ।
गूतं गूनं [1]हत्तं ह्न्नं मूत्रिते मीढमित्यपि ॥१६१॥
पुष्टे तु पुषितं सान्त्वे स्रान्त उद्भ्रान्तउद्धते ।
दान्तस्तु दमिते शान्तः शमिते प्राथितेर्दितः ॥१६२॥
ज्ञप्तस्तु ज्ञापितेच्छन्नश्छादिते पूजितेऽर्चितः ।
पूरिते भरितः पूर्णः क्लिष्टस्तु क्लेशिते पुनः ॥१६३॥
सितस्त्ववसिते दग्धे[2] प्रुष्टः प्लुष्टस्तथोषितः ।
वेधितश्छेदितो विद्धे विन्नो वित्तो विचारितः ॥१६४॥
निष्प्रभे विगतारोकस्तनुप्रत्तू तनूकृते ।
सिद्धे निर्वृत्तनिष्पन्नौ दारिते भिन्नभेदितौ ॥१६५॥
ऊतं स्यूतमुतं तद्वत्प्रोतं [3]स्यात्रं तु संतते ।
नमस्यितं नमसितं तथा स्याद[4]पचायितम् ॥१६६॥
अचितोपचिते चाथ वरिवस्यितमित्यपि ।
वरिवसितोपचरिते स्यादुपासितमित्यपि ॥१६७॥
संतापितस्तु संतप्तो दूनो धूपायितोऽपि च ।
धूपितोथ प्रमुदितः प्रह्लन्नस्तृप्त इत्यपि ॥१६८॥
प्रीतो हृष्टश्च मत्तोथ दातं छिन्नं दितं छितम् ।
वृक्तं[5] छातं च लूनं च कृत्तमप्यथ विच्युतम् ॥१६९॥

---

१ हत्तं^OK २ ह्रुष्ट इति सर्वेष्वादर्शपुस्तकेषु पाठः ३ स्या (स्यो) तं^B ४ दपचामितं ^B
५ वृक्णं^B

स्रस्तं ध्वस्तं स्कन्नभृष्टे गलितं निचिताचिते ।
अपवाहितं[1] स्थगितं पिहितान्तर्हिते समे ॥१७०॥
लब्धमासादितं प्राप्तं [2]भूतं विन्नं च भावितम् ।
अन्वेषितं तु मृगितं मार्गितं च गवेषितम् ॥१७१॥
असंयुक्ते त्वमिलितमन्तर्गडु निरर्थके ।
सान्द्रमार्द्रं[3] तथा क्लिन्नं तिमितं स्तिमितं समम् ॥१७२॥
समुन्नमुत्तं [4]त्रातं तु गुप्तं गोपायितं पुनः ।
अवितं रक्षितं त्राणमथावगणितं पुनः ॥१७३॥
अवज्ञातं [5]चावमतं परिभूतेवमानितम् ।
उत्सृष्टे[6] विधुतं धूतं त्यक्तं हीनं समुज्झितम् ॥१७४॥
अवकीर्णमधःक्षिप्ते न्यञ्चितं स्यादुदञ्चितम् ।
ऊर्ध्वक्षिप्तेथ क्षुरितं रचितं दत्तमर्पिते ॥१७५॥
[7]कृष्टं स्यादर्चितं श्यानं शीनं चापि सितेन्विते ।
अन्वीतं स्यादथाख्यातं जल्पितं [8]लपितं पुनः ॥१७६॥
भाषिताभिहिते चोक्तमुदितं चाथ बुद्धिते ।
बुद्धं च मनितं चाथ विदितं प्रतिपन्नकम् ॥१७७॥
अवगतं चाथसितमूरीकृतमुरीकृतम् ।
अङ्गीकृतं प्रतिज्ञातमाश्रुतं चोररीकृतम् ॥१७८॥

---

१ असवाहित' B २ धूत' KC ३ साद्र (सार्द्रं) B ४ मुन्नतं त्रात' CK ५ वनत' CK ६ उत्सृष्टमित्यर्धद्वयं KB पुस्तकयोर्न दृश्यते ७ कृष्ण' B ८ कलित' B

स्यात्संगीर्णं त्वविदितं संश्रुतं च समाहितम् ।
उपश्रुतं चोपगतं प्रकाशे प्रकटं पुनः ॥१७९॥
विशदं चाथशस्तं स्या[1]दीडितं च पणायितम् ।
पनायितं च पणितं पनितं प्रणुतं पुनः ॥१८०॥
स्तुतं स्यादीडितं गीर्णं वर्णितं चाप्यभिष्टुतम् ।
भक्षितं चर्वितं भुक्तमाशितं ग्रस्तखादिते ॥१८१॥
गिलितं प्रत्यवसितं लिप्तं प्सातं तथा पुनः ।
जग्धं चैवाभ्यवहृतमन्नं चोपिष्ठ इत्यपि ॥१८२॥
प्रेष्ठो वरिष्ठः चोदिष्ठो [2]बंहिष्ठश्च स्थविष्ठकः ।
स्फेष्ठो द्राघिष्ठसाधिष्ठौ गरिष्ठोऽपि तथा पुनः ॥१८३॥
ह्रसिष्ठश्च वसिष्ठश्च प्रकर्षार्था अमी पुनः ।
पीवरोभीप्सितः क्षुद्रः पृथुः क्षिप्रो बहुस्तथा ॥१८४॥
वृन्दारको वामनस्तु [3]गुरुर्वद्रो गुरुस्तथा ।
वाढश्च व्यायतश्चैतेऽतिशयार्थाः स्मृता इति ॥१८५॥
कल्पद्रौ केशवकृते फलिते नाम सत्फलैः ।
विशेष्यायत्तकाण्डोयमष्टमः पूर्णतामगात् ॥१८६॥

इति विशेष्यनिघ्नकाण्डः ।

प्रकृतिप्रत्ययार्थाद्यैः संकीर्णं लिङ्गमुन्नयेत् ।
विधिर्विधानं कर्मास्त्री[4] क्रिया कृत्या विधा कृतिः ॥१॥

---

१ दीप्तिB दीप्तिOK २ बर्हिष्ठश्चkC ३ बंहुगरुB ४ स्त्रीKC

अपि तत्कर्मसातत्ये स्युरेवमपरस्पराः ।
साकल्यं साङ्गवचने पारायणपरायणे ॥२॥
अतिवेगेन वेदादेः सम्यक् पारस्य दर्शने ।
तुरायणं तत्र स्यात्त्वरया[1]ऽत्वरयापि वा ॥३॥
तदेव[2] पारणं क्लीबे स्युरेते पुरतः स्त्रियाम् ।
यदृच्छा स्वैरिता हेतुशून्या त्वस्या[3] विलक्षणम् ॥४॥
शमथस्तु शमः शान्तिः प्रशान्तिः प्रशमः पुनः ।
उपशान्तिश्चोपशमो दान्तिस्तु दमथो दमः[4] ॥५॥
अवदानं कर्मवृत्तं काम्यदानं प्रवारणम् ।
वशक्रिया संवननं स्यात्संवदनमित्यपि ॥६॥
विधूननं विधुवनं मूलैः[5] कर्म तु कार्मणम् ।
पर्याप्तिः स्त्री परित्राणं तर्पणं प्रीणनावने ॥७॥
स्याद्धस्तवारणं चाथ [6]स्यूतिः सेवनसीवने ।
स्त्रियां भिदानो विवरः स्फुटनं तु नपुंसकम् ॥८॥
परिवारः परीवारः स्वीये परिजने मतः ।
परिवापः[7] परीवापः स्थाप्ये बीजे परिच्छदे ॥९॥
परिहारः परीहारोऽधीकारोप्यधिकारवत् ।
प्रस्रावस्तु स्रवः स्रावोऽनुहारोप्यनुकारवत् ॥१०॥

---

१ ऽत्वरयापि वेति[B] पुस्तके नास्ति २। देवपारणमक्लीबे स्युरेते पुनरस्त्रियाम्[B]
३ त्वास्था[B] ४ दमतो[B] ५ मूलकर्म[B] ६ सूतिः[B] ७ परिवायः परीवायः[CK]

..................प्रेषणे स्यान्मदे मादोऽथ धारणम् ।
धरणेथ भरो भारः प्रणयः सान्त्वनापि च ॥११॥
तथा चानुनयोऽथ स्यान्मृगया मृगणा मृगः ।
स्यान्मार्गणा[1] मृगो घाते प्याघातश्च विघातकः ॥१२॥
अभिषङ्गस्त्वभीषङ्गः स्यादाक्रोशनमित्यपि ।
संमूर्छनमभिव्याप्तिः संवेदो वेदना नना ॥१३॥
व्याप्यं[2] तु साधनं कर्म करणं साधकोत्तरम् ।
स्तनाभोगस्तनभरश्चाजर्यं[3] संगते युतम् ॥१४॥
अपि स्याल्लहुडस्वल्पे सोमालं कुसुमाकरे ।
पुंस्यखट्टिः स्त्रियां खाटी खाटिर्गरणगूरणे ॥१५॥
स्नपनं स्नापनं तुल्ये परभागः स्वसंपदि ।
गुणोत्कर्षोऽपि भङ्गिस्तु वाक्कृता[4] वप्लुते प्लवः ॥१६॥
स्त्रियां श्लिषाङ्कपालिः स्यादङ्कपाल्युपगूहनम् ।
क्लीबे परीरम्भणं च स्यादालिङ्गनमित्यपि ॥१७॥
आश्लेषश्च परीरम्भः संश्लेषः परिरम्भणम् ।
समुद्रपर्यायगृहं जलयन्त्रगृहे पुनः ॥१८॥
क्रीडाक्रीडकयोर्देवसेवायां सेवकेन यः ।
स दायो दानं दुर्जातं दुःसमं चासमञ्जसम् ॥१९॥

---

१ स्यान्मार्गणो KC २ व्याप्तं B ३ संगतं पुनः B ४ विकृता वाप्लवे प्लवः B

विषाक्तबाणनिहतौ [1]कलञ्जौ मृगपक्षिणौ ।
याञ्चा तु याचना भिक्षाऽभ्येषणाप्यर्दनाऽपि च ॥२०॥
अर्दनी चार्दनिरपि स्त्रियः स्युः प्रार्थनार्थना ।
अभ्यर्थना भिक्षणा च मार्गणामूः स्त्रियश्च षण् ॥२१॥
अथाप्यानन्दनं [2]चाप्रच्छनं चापि सभाजनम् ।
ग्रन्थनं ग्रथनं गुम्फः प्रतिपत्तिः प्रगल्भता ॥२२॥
प्रभुता प्रभवन्ती स्यात्संदर्भो रचना न ना ।
दवथुः परितापः स्याद्दाक्षिण्यमनुकूलता ॥२३॥
प्रणिपातस्त्वनुनयः प्रणतिः सान्त्वनं पुनः ।
अपि ग्लानिस्तु क्लमथुरनुतापो विसूरणम् ॥२४॥
[3]कल्पानुताप्यकौ मान्द्यमालस्यं चयने चयः ।
वर्द्धना वञ्चनापि स्या[4]द्विचेष्टा विक्रमे समे ॥२५॥
अथावृतं त्वाशयः स्यादपज्ञानमपात्ययः ।
निभालनं निशमनं द्योतनं चावलोकनम् ॥२६॥
निशामनं शिते शातं [5]निशितं तेजितं समम् ।
स्यादाशंसनमाघोषो विगानं वचनीयता ॥२७॥
स्याद्वितर्को विकल्पोऽपि ह्यत्याधानमतिक्रमः ।
वीप्सा क्रमोथ [6]प्लवनं प्लवोथाप्यवसन्नता ॥२८॥

---

१ कलजौ[B] २ चाप्रच्छन्नं[CK] ३ कल्पान्तताप्यकौ[K] कलातुलातुकौ[B] ४ द्विवेष्टा-विक्रमेष्टमे[B] ५ निशातं निशितं[B] ६ प्लवनमाप्लवोथा[B]

साढः खेदश्च निर्वेद उपादानं च संग्रहः ।
क्रीडावियोगौ हानं च परित्यागोऽप्यथापि च[1] ॥२९॥

भणितं स्यादाच्छुरितं[2] गोमुखं तूपलेपनम् ।
वर्द्धापनार्थं यत्पूर्णपात्रं पूर्णानकं च तत् ॥३०॥

लेशस्तूपपदं गन्धोऽनुबन्धेषत्करावपि ।
गालिर्गाली स्त्रियौ क्लीबे विकल्पेप्यवमर्षणा[3] ॥३१॥

स्यादाक्रोशनमाक्रोशः शपनं शमनं शमः ।
वप्रस्तु धूलिकेदारः [4]प्सा वीतिर्भक्षणं च सा ॥३२॥

मैत्रेयिका मित्रयुद्धं प्रत्ययाः सहकारिणः ।
अथ हेतुरुपादानं व्याप्यं लिङ्गं च साधनम् ॥३ ॥

अनुमा त्वनुमानं [5]स्यात्पुंसि चानुमितिः स्त्रियाम् ।
प्रत्यक्षोपात्तमध्यक्षं प्रमाणं प्रमितिः प्रमा ॥३४॥

आप्तः प्राप्तः प्रणिहिते [6]दोहनं तूपयाचितम् ।
भ्रमो ना विस्मृतिश्च स्त्री धन्धो धान्ध्यमपाटवम् ॥३५॥

ऋषिः शास्त्रकृदाचार्यः शास्त्रं तु स्मृतिरागमः ।
रामेण रावणवधो रामायणमथोच्चयः ॥३६॥

वस्त्रग्रन्थिश्च नीवी स्यात्कौमुदी कार्त्तिकोत्सवः ।
आवेशारम्भसंरम्भाः प्रियवाक् चटुचाटुनी ॥३७॥

---

१ वा[B] २ प्चुरितं[B] ३ मर्शना[B] ४ स्फा[KC] ५ त्संधा[B] ६ डोहनं[B]

प्रतिरूपं [1]प्रतिच्छेदः सवेशनरतिक्रिये
शालीनीकरणन्यग्भावने गन्धनसूचने ॥३८॥
भावः पदार्थो धर्मः स्यात्सत्त्वं तत्त्वं च वस्तु च ।
वर्धनं छेदनं व्युष्टिः फलमाम्नाय इत्यपि ॥३९॥
संप्रदायोऽथ विश्रम्भो विश्वासोऽथ[2] क्षये क्षिया ।
ग्रहे ग्राहो वशः कान्तौ रक्षा त्राणे रणः क्वणे ॥४०॥
[3]व्यधा वेधे पचा पाके विपाकः पचनं पुनः ।
विश्रामविश्रमौ तुल्यौ ह्वो हूतौ वरो वृतौ ॥४१॥
श्रोषः श्लोषे नयो नाये ज्यानिर्जीर्णिर्भ्रमो द्वयोः ।
स्त्रियौ भ्रमिर्भ्रमी च द्वे स्फातिर्वृद्धौ च भक्षणे ॥४२॥
वृत्तेनुवृत्तमावृत्तं[4] प्रीणने तर्पणेऽवनम् ।
बोधे बोधिः प्रथा ख्यातौ स्पृष्टिः पृक्तौ स्तुतिः स्तवे ॥४३॥
विधा समृद्धौ स्फुरणं स्फुलनं स्फुरितेऽपि च ।
उत्कर्षोऽतिशये संधिः श्लेषे विषय आशये ॥४४॥
क्षिपायां क्षेपणं गीर्णि[5]र्गिरौ[6]गुरणमुद्यमे ।
उन्नाय उन्नये श्रायः श्रयणे जयने जयः ॥४५॥
निगादो निगदे [7]मादो मद उद्वेग उद्भ्रमे ।
विमर्दनं परिमलेऽभ्युपपत्तिरनुग्रहे ॥४६॥

---

१ प्रतिच्छन्दः^B २ पक्षये^B।क्षक्षे ३ व्यधो^B ४ वृत्तेनुवर्तनं वृत्तं^B ५ गुरौ^B
६ गुरणउद्यमे ७ मदोमाद इति पूर्वमप्युक्तम् ।

फालिः फाली स्त्रियां छेदे खण्डोऽस्त्री [1]रदनं रदः ।
विधूननं विधुवनं धुवनं च विधूवने ॥४७॥
संक्षेपे च समाहारः संग्राहः संग्रहः समौ ।
[2]आप्तिर्व्याप्तिश्च संप्राप्तिः पर्याप्तिः प्राप्तिरित्यपि ॥४८॥
क्रामः क्राम्ये ग्रहे ग्राहो ग्लपनं ग्लापनं समम् ।
असद्ग्राहे[3] संसरणं संसारः संसृतिः स्त्रियाम् ॥४९॥
तुल्यान्यंशौचमाशुच्यमाशौचं[4] चाथ पैशुनम् ।
पैशुन्यमथ नैपुण्यं नैपुणं चाथ चापलम् ॥५०॥
चापल्यमथ सौहार्दं सौहृदय्यं च सौहृदम् ।
इत्यादयः क्रियाशब्दा ऊह्या धातुजलक्षणैः ॥५१॥
अभियोगस्त्वभिषहो निग्रहस्त्वननुग्रहः ।
मुष्टिबन्धस्तु संग्राहो [5]डिम्बो डिम्भिरविप्लवौ ॥५२॥
बन्धनं प्रसितिश्चारः [6]स्पृष्टिः स्पर्शोपतप्तता ।
विकारो विप्रकारः स्यादाकारस्त्विङ्ग इङ्गितम् ॥५३॥
परिणामो विकारः स्याद्विकृतिर्विक्रिया समे ।
अपहारस्त्वपचर्या समाहारः समुच्चयः ॥५४॥
प्रत्याहार उपादानं विहारस्तु परिक्रमः ।
अभिहारोऽभिग्रहणं निर्हारोऽ[7]भ्यवकर्षणम् ॥५५॥

---

१ दरणं दरः[B] २ अभिव्याप्तिश्च[B]—३ असद्ग्राहे ४ पैशून्य[B] ५ डिम्बे उमर[B]
६ स्पष्टिः स्पर्शोपसरि[B] ७ न्यवकर्षणम्[B]

अनुहारोऽनुकारः स्यात्सादृश्येथार्थवर्त्तनम्[1] ।
व्ययः संकटसंबाधौ परिपाट्यानुपूर्व्यपि ॥५६॥
निर्बन्धाऽभिनिवेशः स्यात्प्रवेशोन्तर्विगाहनम् ।
स्यात्प्रवृत्तिस्तु प्रवाहः प्रवहो गमनं बहिः ॥५७॥
वियामो विगमे [2]दिग्धं प्लुते चीर्णं तु शीलितम् ।
श्वभ्रोवपातो[3] ज्ञानं तु समज्ञा स्यान्मुदागमः ॥५८॥
हृल्लेखस्तर्क उत्सिक्त उद्धतो राजमल्लकः ।
प्रमुखं[4] तु तदात्वं स्यात्सहायाः सहभाविनः ॥५९॥
षोढा षड्ढाच षड्धा स्यात् [5]प्रकारवचने पुनः ।
द्वैविध्यं द्विविधं यामो यमसंयामसंयमाः ॥६०॥
व्यायामोऽपि वियामश्च वियमो यमकः पुनः ।
हिंसाकर्माभिचारः स्याज्जागर्या जागरा समे ॥६१॥
विघ्नोन्तरायः प्रत्यूह उपघ्नस्त्वन्तिकाश्रये ।
स्यातां निवेशनिर्वेशावुपभोगः परिक्रिया ॥६२॥
परिसर्पोथ[6] विधुरं[7] परिश्लेषेप्यथाश्रयः ।
छन्दाशयौ समसनं संक्षेपणमथापि च ॥६३॥
परिसर्या परीसारः स्यादास्या त्वासना स्थितिः ।
विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तरः ६४

१ थाथवर्जनम्B २ दिग्धु कृतेB ३ श्वभ्रावपातोB ४ संमुखंB ५ षकारB
६ परिसर्याB ७ प्रविश्लेषेB

स्यान्मर्दनं संवहनं विनाशः स्याददर्शनम् ।
संस्तवः स्यात्परिचयः प्रसरस्तु विसर्पणम् ॥६५॥
लवो निलावो लवने निः पावः पवनं पवः ।
स्यात् प्रस्तावस्त्ववसरः प्रश्रयप्रणयौ समौ ॥६६॥
धीशक्तिर्विक्रमो[१] दुर्गसंचरः संक्रमोऽस्त्रियाम् ।
प्रत्युत्क्रमः प्रयोगार्थः स्यात्प्रक्रम उपक्रमः ॥६७॥
स्यात्प्रत्यादानमुद्घात आरम्भः [२]संभ्रमस्त्वरा[३] ।
अनुक्रमः क्रमोथ स्यात् क्रान्तोधिक्रम आक्रमे ॥६८॥
आरोहणं प्रतिक्रमो[४] व्युत्क्रमस्तु क्रमोत्क्रमः[५] ।
हीनातिरिक्तता वाक्यहीने नीवाक इत्यपि ॥६९॥
निवाकश्च प्रवाकश्च[६]।संनिधिः संनिकर्षणम् ।
प्रतिबन्धः प्रतिष्टम्भोऽवनायस्तु निपातनम् ॥७०॥
स्याच्चावनयनं चोपलम्भस्त्वनु[७]भवोऽपि च ।
विप्रलम्भो विप्रयोगः समालम्भो विलेपने ॥७१॥
विश्रावस्तु प्रतिख्यातिर्विलम्भस्त्वतिसर्जनम् ।
निपाठो निपठः पाठेऽवेक्षा तु प्रतिजागरः ॥७२॥
तेम तेमः [८]समुदने स्यादादीनव आस्रवः ।
केशेथ मेलके मेलः[९] संगमोऽथावलोकनम् ॥७३॥

---

१ निंग्रहो^B २ संक्रम^KC ३ माचरा^B ४ क्रामो^B ५ क्रमात्क्रमः^B ६ प्रवामश्च^B ७ तपो^KC नयो^B ८ समुन्दने^B ९ सङ्गः^B

निर्वर्णनं स्यान्निध्यानमीक्षणं दर्शनं समम् ।
प्रत्याख्याने निरसनं प्रत्यादेशो निराकृतिः ॥७४॥
उपशायो विशायश्च शयनार्थाभिधायिनौ ।
आर्त्तनं[1] च ऋतीया च [2]घृणीया च घृणार्थके ॥७५॥
व्यत्यासस्तु विपर्यासो व्यत्ययश्च विपर्ययः ।
पर्यायातिक्रमस्तस्मिन्नतिपात उपात्ययः ॥७६॥
प्रेषणं यत्समाहूत्य तत्तु स्यात्प्रतिशासनम् ।
ससंस्तावस्तु विज्ञेयः स्तुतिभूमिर्द्विजजन्मनाम् ॥७७॥
काष्ठे निधाय यत्काष्ठं तक्ष्यतेऽधः स उद्घनः ।
स्तम्बघ्नस्तु स्तम्बघनो येन स्तम्बो निहन्यते ॥७८॥
आविधो विध्यते येन तत्र विष्वक्समे निघः ।
उत्कारश्च निकारश्च द्वौ धान्योत्क्षेपणार्थकौ ॥७९॥
निगारोद्गारनिक्षावा[3] उद्ग्राहो गरणादिषु ।
उपरामे त्ववाविभ्यो रतिर्नाशस्त्वभावके ॥८०॥
संमूर्छनं त्वभिव्याप्तिरवेक्षा प्रतिजागरः ।
जीवकस्तु प्रयासः स्यात्परिणामस्तु विक्रिया ॥८१॥
नियोगो विधिसंप्रेषो विनियोगः फलार्पणम् ।
स्याद्विश्वासस्तु संरम्भः क्लीबे निष्ठेवनं[4] पुनः ॥८२॥

---

१ अर्तनं B २ हृणीया B ३ विक्षाक K विक्षाव C ४ निष्ठावनं B

निष्ठीवनं च निष्ठेवो निष्ठ्यूतिश्च स्त्रियामियम् ।
जूतिः स्याज्जवनेऽथापि तद्वदेवावसानके ॥८३॥
सातिर्जूतिर्ज्वरेऽथैवमुदजः प्रेरणं पशोः ।
अकरणिस्त्वजीवनिश्चाभवनिरजननिः ॥८४॥
शब्दा इत्यादयः प्रायो विज्ञेयाः [1]क्षेपणार्थकाः ।
गोत्रान्तेभ्यस्तस्य वृन्दमेवमौपगवादिकम् ॥८५॥
आपूपिकं शाष्कुलिकमेवमाद्यमचेतसाम् ।
मानवानां तु मानव्यं सहायानां सहायता ॥८६॥
हल्या हलानां ब्राह्मण्यं ब्राह्मणानामथापि च ।
वाडवानां तु वाडव्यं पर्शूनां पार्श्वमित्यपि ॥८७॥
पृष्ठानामपि पृष्ठ्यं स्यात्खलानां खलिनी स्त्रियाम् ।
खल्या मानुष्यकं नृणां ग्रामता जनतापि च ॥८८॥
धूम्या पाश्या तथा गण्या[2] गव्या साहस्रमित्यपि ।
कारीषं वार्मणं[3] चाथाथर्वणं चापि वार्द्धकम् ॥८९॥
चर्चुरकं[4] धनुकृता ववहारो वहारणम् ।
युद्धस्य वारणे स्यात्तु श्च्योतः[5] प्राघार इत्ययम् ॥९०॥
आज्यादिक्षरणे यत्तु कुङ्कुमादिविमर्दनम् ।
तस्मिन्परिमलः स्यात्तु प्राद्वदीकरणग्रहिः[6] ॥९१॥

---

१ क्षपणा^B २ गल्या^B गव्या इति पाठः स्यात् ३ वार्मणं^KC ४ धेनूनां धैनुकं तावद्व्यवहारो ५ श्चोतः^B ६ प्राद्वन्दीकरणे ग्रहिरिति पाठः स्यात् ।

आङोहृठे परेस्तु स्यात्प्रत्युद्गमन[1]कर्मणि ।
प्रतेस्तु स्वीकृतौ सोभे रभियोगे समस्तु सः ॥९२॥
संचये चाहिताधाने तद्विरुद्धे तु नेः परः ।
उदस्तु[2] पिच्युपन्यासे ग्रहणे तु प्रतीच्छतिः ॥९३॥
स्पशश्चारक्रियायां तु शमति स्वेच्छया गते ।
अवाद्ग्लानत उदस्तुङ्गत्वे विकृतौ परेः ॥९४॥
प्रात्करोतिर्भेदसाम्ये आङ्हाङस्त्वाकृतिं पुनः ।
अपाद्विरोधं भूषां तु [3]समोऽनो स्तु समानताम् ॥९५॥
अधेः प्रधानतां नेस्तु जैह्म्यं हृस्तु समुच्चये ।
समाङ्भ्यां संयमे प्रत्याङ्पूर्वोऽवः[4] पदसंचरे ॥९६॥
क्रीडावाङः[5] परो भत्तानीत्योः स्यात्प्रलये समः ।
प्राप्तावङ्वेदनोः[6] साम्येऽवान्निवृत्तौ परेस्तु सः ॥९७॥
त्यागेऽवढौकने तूधात्संमुखग्रहणे त्वभेः ।
चौर्येपि निर उद्धारे शवस्योद्वहनेऽपि च ॥९८॥
विडुत्सर्गे च शपथेऽथोद ऊर्ध्वीकृतावपि ।
प्रवहस्तु बहिर्यात्रा प्रवाहोम्ब्वादिसंततिः ॥९९॥
उपोढो निकटप्राप्तेऽथापोढः परिवर्जिते ।
समूढः स्यादुपचिते निर्व्यूढस्तु समापिते ॥१००॥

---

१ मित्यपि[B] २ उद्वेस्तु वाच्युपन्यासे इति स्यात् ३ समानेस्तु[B] ४ यः[B]
५ वान्दुः[B] ६ नेदनोः[B]

निरूढस्तु भवेत्ख्यातेऽध्यूढोऽधिष्ठित उच्यते ।
द्विरागमस्तु वध्वा यः स आवाहोथ संनिधौ ॥१०१॥
आवाहनं स्यादावाहेऽथोपात्परिणये यमिः ।
आङो दैर्घ्ये नेः स्तनिः स्यात् कुन्थनेभिनिरुत्तरः ॥१०२॥
सोत्यन्तशब्दे सत्तिः प्रात् प्रीतावाङस्तु संनिधौ ।
वेर्दुःखआसने नेः स्यात्सेवने चोपपूर्वकः ॥१०३॥
अभेः षञ्जिः पराभूतौ [1]क्रोधे च चरतिस्त्वभेः ।
परो[2] निष्ठाध्यवसितौ पर्युपाभ्यां तु सेवने ॥१०४॥
अपराधेत्वपादाङोऽनुत्थानेऽनुगमे त्वनोः ।
प्रतिसंभ्यां तु संहारे प्रत्यूहे विघ्नगण्डकौ ॥१०५॥
भोगे निरो विशिर्नेस्तु विवाहशयने समः ।
आसने स उपात्स्यातां द्वौपरिच्छदवेष्टने ॥१०६ ॥
परि[3]क्रिया परी[4]सर्पौ विधुरं विकले त्रिषु ।
आकूतच्छन्दसी छन्दभावौ यत्तूपमन्त्रणम् ॥१०७॥
रहस्तूपच्छन्दनं तत् संक्षेपे तु समस्यतिः ।
वेर्विस्मृते[5] भिराधानेऽभेरभ्यासे श्रमे त्वधेः ॥१०८॥
तुर्याश्रमे संनिपरः स विरोधे तु तिष्ठतिः ।
पर्यवात्प्रत्यवाच्चाङो यत्ने प्रात्तु गतौ नितः ॥१०९॥

---

१ क्रियायां^B २ परा^B ३ क्रिपा^k ४ सर्या^C ५ वोर्वस्मृतोनेराधाने इति स्यात्

निश्चयेऽनो स्त्वाचरण उत्पूर्वस्तूर्ध्वकर्मणि ।
विष्वग्गतौ परीसारः परिसर्या प्रसर्पणम् ॥११०॥
[1]वरादौ वा कुलादौ वा गुप्तिरेष्टव्यकर्मभिः ।
सैव गुप्तमणिर्गुप्ति[2] केलिश्च स्यान्निलायनम् ॥१११॥
सर्पणे तु व्रणादीनां प्रसरोथ प्रयामकः ।
नीवाकश्च महार्घस्य धान्यादेरादरे नहि ॥११२॥
ऊहापोहादिके बुद्धिशक्तौ निष्क्रम उच्यते ।
श्रवनायः खलीकारोप्यधोनयनकर्मणि ॥११३॥
उपपूर्वो लभिर्धातुरनुभूतार्थवाचकः ।
विलेपने कुङ्कुमाद्यैः समालम्भोथ विप्रतः ॥११४॥
लभिर्वियोगे वेदान[3] आङस्तु स्पर्शने वधे ।
कूणनं तु भवेत्किञ्चित्संकोचे प्रतिबिम्बने ॥११५॥
फलनं मार्गणान्वीक्षा संवीक्षावचयोऽपि च ।
समः संग्रहणे चिञ् स्यादुपाद्वृद्धौ क्षयेत्वपात् ॥११६॥
शीलने तु परेर्ज्ञाने तिरोप्याभण्डने[4] क्षणे ।
अपात्तु ध्यायतिः शापे आङस्तूत्कण्ठितस्मृतौ ॥११७॥
क्रमात्प्रहरिकादेर्यच्छयनं तत्र पुंस्ययम् ।
उपशायो विशायश्च स्यातामुपशयस्तु यः ॥११८ ॥

---

१ वारादौ C २ गुं[?]स B ३ वेदन kC ४ भण्डमे

[1]वस्तुना येन रोगस्योपचयोथ कृतीचयः[2] ।
समावीज्या च हविया हवीयाथ क्रतौ पुमान् ॥११६॥
संस्तावः[3] स्तुतिभूस्तुल्यायामविस्तारके निघः[4] ।
विस्मितो भवतीत्यर्थे भवेत् कुहकुहायते ॥१२०॥
भावप्रधाना ये प्रायः पर्यायेषु च नोचिताः ।
तेत्र यत्कीर्त्तिताः शेषं ज्ञेयं शिष्टप्रयोगतः ॥१२१॥
कल्पद्रौ केशवकृते नामप्रकृतिबोधने[5] ।
संकीर्णो नवमः काण्डो यातः संपूर्णतामयम् ॥१२२॥

इति संकीर्णकाण्डः ।

अरण्यमस्त्री कान्तारं षण्डो वाप्यटवी स्त्रियाम् ।
क्लीबे चेल्कं[6] वनं सत्रं गहनं विपिनं तलम् ॥१॥
समञ्जं[7] हिङ्गुलं वार्चं कक्षं काननमित्यपि ।
दवदावावुभौ पुंसि प्रस्तारोपि[8] झषोपि च ॥२॥
तृणाटव्यां महारण्ये त्वरण्यानी स्त्रियामियम् ।
पुंस्यारामश्चोपवनं पुरप्रान्तस्थितं वनम् ॥३॥
गृहारामो निष्कुटः स्याद्बाह्यारामस्तु पौरकः[9] ।
प्रधानगणिकादीनामारामे पुष्पवृक्षयोः ॥४॥

---

१ पय$^{kC}$ २ यस्तु$^{kB}$ ३ प्रस्तावः$^{B}$ ४ निघ्रः$^{B}$ ५ बोधके$^{B}$ ६ वल्कं$^{C}$ वल्कं$^{B}$ ७ समजं$^{B}$ समन्तमिति स्यात् ( समन्तपञ्चकशब्दे तत्प्रयोगः ) ८ प्रस्तारश्च$^{B}$ ९ यौरकः$^{B}$

पर्यायाद्वाटिकार्था च क्षुद्रारामे प्रसादिका ।
पुमानाक्रीड उद्यानं राज्ञः साधारणे वने ॥५॥

स्यादेतदेव प्रमदवनं च प्रमदावनम् ।
यदन्तःपुरलोकानां क्रीडायोग्यमनाकुलम् ॥६॥

नृपाज्ञया यदच्छेद्यं तन्मल्लवनमुच्यते ।
वीथ्यालिरावलिः श्रेणी लेखा रिङ्खोलिरावली ॥७॥

आली[1] च पालिरालिश्च शरणी सरणी द्वयोः ।
शरणिः सरणिः[2] श्रेणिः स्त्रियां राजिस्तु राज्यपि ॥८॥

रेखा लेखा च पङ्क्तिश्च सर्वथा[3] या निरन्तरा ।
तत्र पङ्क्तिः सान्तराला राजिर्हीनान्तरालका[4] ॥९॥

वन्या वनसमूहे स्यादङ्कुरोऽङ्कूरमस्त्रियाम् ।
प्ररोहोऽभिनवोद्भेदे[5] तत्र पर्वसमुद्भवे ॥१०॥

अस्त्री निकुञ्जकुञ्जौ द्वे लतादिपिहितोदरे ।
वृक्षस्तु विटपी स्कन्धी सीमाको[6] हरितच्छदः ॥११॥

वह्नि[7]पर्यायजन्मार्थो जन्तुरारोहकस्तरुः ।
कारस्कर उरुद्वीपः[8] पादपो विष्टर स्थिरः ॥१२॥

---

१ पालिरालिश्चशरणी सरणिः सरणीद्वयोः<sup>B</sup> २ सलनिः<sup>B</sup> ३ सर्वेषां<sup>B</sup> ४ लिका<sup>B</sup> ५ भिन्नवे काण्डे<sup>B</sup> ६ सीमाङ्को<sup>B</sup> ७ जन्तुरोवह्निपर्यायजन्मार्थो राहकस्तथा<sup>B</sup> ८ उरुद्वीपो<sup>B</sup>

अनोकहोऽगः शिखरी शाखी शालः पलाश्यपि ।
द्रुद्रुमोद्रिः कुटानागो नन्द्यावर्त्तौ हरिद्रुसुः ॥१३॥
महीपर्यायरुहजपर्यायस्तरुरागमः ।
करालो पुष्पफलद ऊर्णो रूक्षः[1] पुलाक्यपि ॥१४॥
नगोऽगमः कुठिर्गच्छः कुठारुरपि विष्टरः[2] ।
वानस्पत्यः फलैः पुष्पादपुष्पात्तैर्वनस्पतिः ॥१५॥
निर्लुटो[3] थाप्यबन्ध्यः स्यात्स च वृक्षः फलेग्रहिः ।
फलग्रह्यपि सज्ञेयो ह्यमोघफल इत्यपि ॥१६॥
फलिते फलिनोपि स्यात्फलपर्यायवान् फली ।
नञर्थात्फलपर्यायोऽवकेशी बन्ध्य इत्यपि ॥१७॥
फलपुष्पैर्विरहित एते वन्ध्यादयस्त्रिषु ।
स्थाणुरस्त्री ध्रुवः शङ्कुर्ह्रस्वशाखार्थकः क्षुपः ॥१८॥
[4]क्षुपेऽप्रकाण्डे गुल्मः स्यात्स्तम्बो[5]ऽथ व्रततिर्लता ।
वल्ली च वल्लिर्व्रततती स्त्रियां वीरुत् प्रतानिनी ॥१९॥
गुल्मिनी चोलपो वेलो वेल्लिर्वेल्ली च वीरुधा ।
व्रततिर्विरुधाचापि गुल्मिनी च विरुत् स्त्रियः[6] ॥२०॥
नगाद्यारोह उच्छ्राय उत्सेधोप्युच्छ्रयश्च सः ।
स्कन्धकाण्डप्रकाण्डाश्च मूलाच्छाखावधिस्तरोः ॥२१॥

---

१ रक्षः[kC] २ विस्तारः[B] ३ निर्लुठो ४ क्षुपो[B] ५ स्तम्बो[kC] ६ स्त्रियाम्[B]

समे शाखालते स्कन्धशाखाशाले शिफाजटे ।
अर्वाग्भागोस्य बुध्नः स्यान्नितम्बः स पृथुः पुनः ॥२२॥
पादपर्यायि मूलं स्यान्नेत्रं च चरणोऽस्त्रियाम् ।
अग्रं क्लीबे शिरः पुंसि मज्जा सारश्च पुंस्युभौ ॥२३॥
क्वचिन्मज्जा स्त्रियां त्वक् स्त्री त्वचा वल्कलमस्त्रियाम् ।
चोलकं च स्त्रियां छल्लिश्छल्ली च वल्कलं च पणु ॥२४॥
शल्कं चोचमथ स्त्री स्याद्दारु सामान्यकाष्ठके ।
रूक्षे कलिञ्जमिध्मं स्यादेध एधः समित्स्त्रियाम् ॥२५॥
समिन्धनेन्धने च द्वे निःकुहः कोटरोऽस्त्रियाम् ।
पत्रं पलाशं पात्रं स्याद्दलं पर्णं छदः पुमान् ॥२६॥
स्यादथच्छदनं[1] छादमस्त्रियां बर्हमित्यथ ।
[2]चमरिर्मञ्जरीवाना मञ्जी मञ्जिश्च मञ्जरिः ॥२७॥
वल्लरी वल्लरिश्चापि वल्लरं मञ्जरं त्रिषु ।
पल्लवोऽस्त्री किसलयं किसलं विसलं पुनः ॥२८॥
चलः पुमान्प्रवालोऽस्त्री कोशीशुङ्गे उभे स्त्रियौ ।
स्त्रियां माटिस्तु[3] पर्णानामन्तरा[4] व्यापिका शिरा ॥२९॥
विस्तारविटपावस्त्री कलिकोत्कलिके स्त्रियौ ।
कलिः कली[5] उभे तद्वत् जारको जालिजालके ॥३०॥

---

१ स्यादथच्छदनमित्यर्धं[B] पुस्तके विसलं पुनरित्यतःपरस्ताद्दृश्यते २ चमरी[B]
३ माढिरित्यभिधानान्तरेषु ४ मन्तरव्याधिनी[B] ५ कली[B]

गुच्छो गुलुच्छो लुच्छः[1] स्याद्गुच्छकः स्तबकोऽपि च ।
गुलुच्छो ग्लुच्छको गुच्छः[2] कुड्मलो मुकुलो न ना[3] ॥३१॥
मकुले पुंसि वा क्लीबे बहुत्वे सुमनः स्त्रियाम् ।
स्यात् क्लीबे सुमनं पुष्पं प्रसूनं कुसुमोऽस्त्रियाम् ॥३२॥
प्रसवे[4] च सुमं सूनं कुड्मलो मुकुलोऽस्त्रियाम् ।
स्फुटः स्मेरो विकसितः स्मितः फुल्लो विजृम्भितः ॥३३॥
वीकाशश्च विकाशश्च वीकासोपि विकासवत् ।
प्रफुल्लोन्मुद्रितोदीर्णा उदोभिदुरमीलितौ ॥३४॥
बुद्धो भिन्नश्च मिषितः श्वसितो जृम्भवत्यपि ।
विकस्वरश्च व्याकोशो विकचो हसितार्थकः ॥ ५॥
दलोच्छ्वसप्रवालोन्मिषाङ्कुरेभ्य इतच् क्रमात् ।
पल्लवाच्चाथ निद्राणो मुद्रितो मीलितोऽपि च ॥३६॥
फुल्लार्थाद्विपरीतार्थोऽलसः संकुचितोऽपि च ।
तान्तः[5] सनिद्रो मिलितस्त्रिष्वेते स्युः स्फुटादयः ॥३७॥
मकरन्दः पुष्परसो मरन्दो मधु न द्वयोः ।
परागः पुष्पपर्यायरजःपर्याय इत्यपि ॥३८॥
मधूली स्त्रीष्टगन्धि स्यात्सुगन्धिः सौरभोऽपि च ।
सौरभ्यः सुरभिः पुंसि घ्राणतर्पण इत्यपि ॥३९॥

---

१ ग्लुच्छः^B २ गुञ्छः^B ३ ऽस्त्रियाम्^B ४ प्रसवं च^B ५ नतः^kC

विमर्दोत्थे परिमल आमोदो हृदयंगमे ।
मुखवासन आमोदी दुर्गन्धः पूतिगन्धकः ॥४०॥
विशी स्यादामगन्धिः षण् विस्रं वा स्यादथ त्रिषु ।
वृक्षादीनां फले[1] शस्यं तत्रापक्वे शलाटु च ॥४१॥
शुष्केप्यवानं स्याद्वानमथ हीनप्रकाण्डके ।
स्तम्बगुल्मावथलता गुल्मिनी च प्रतानिनी ॥४२॥
व्रततिर्व्रतती वल्ली स्यात् क्लीब उलपं पुनः ।
वीरुदेषातिविस्तीर्णा तालक्रमुककेतकी ॥४३॥
नारिकेरीच खर्जूरी तृणवृक्षाः स्युरित्यमी ।
द्विहीनं प्रसवे सर्वं हरीतक्यादयः स्त्रियाम् ॥४४॥
आश्वत्थवैणवप्लाक्षनैयग्रोधैङ्गुदादि[2] च ।
बार्हतं च फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम् ॥४५॥
पुष्पे जातीप्रभृतयः स्वलिङ्गा व्रीहयः फले ।
कुमार्याद्याश्च भङ्गाद्याः पत्रेऽपि स्युस्ततः पुनः ॥४६॥
विदार्याद्यास्तुमूलेऽपि पुष्पे क्लीबे च पाटला ।
आम्रश्चूतो महाकालो माकन्दः षट्पदातिथिः ॥४७॥
कामाङ्गो मधुदूतः स्यात्सहकारोऽति[3]सौरभः ।
रसालः स्त्रीप्रियश्चापि साहारपिकवल्लभौ ॥४८॥

पुरुकालो वसन्तद्रुः सच पञ्चविधः स्मृतः ।
कोशाम्रस्तु घनस्कन्धो वनाम्रो जन्तुपादपः ॥४६॥
चुद्राम्रोऽपि च रक्ताम्रो लाक्षा[1]वृक्तश्च रक्तकः ।
बहुपूर्वस्तु मध्वाम्रः शीतलाम्रो मुनिश्च सः ॥५०॥
मदनेच्छाफलश्चक्रतलाम्रोऽपि वनेज्यकः ।
अथ कामशरः कामवल्लभो माधवद्रुमः ॥५१॥
अम्लफलः सीधुरसो मोदः स्यान्मन्मथालयः ।
मध्वासवः सुमनसः पिकरागो नृपप्रियः ॥५२॥
प्रियाम्बुरथ राजाम्रो राजपर्यायतः फलः ।
स्मराम्रो मधुरोऽथ स्यान्महाराजफलस्तु सः ॥५३॥
कामायुधो राजपुत्रः कड्कः कामफलोऽपि च ।
आम्रः[2] स्थूलान्महाराजात् कपित्थार्थोऽपिनीलतः ॥५४॥
तत्पर्यायफलार्थं स्यात्पुण्डरीकं च तत्समम् ।
स्त्रियां जम्बूर्महास्कन्धा राजार्हाऽऽमोदमोदिनी ॥५५॥
शुकप्रिया राजफला श्यामला सुरभिच्छदा ।
अथान्या स्याद्राजजम्बूः स्वर्णमाता महाफला ॥५६॥
पिकप्रिया महाजम्बूर्महानीलाप्यथापरा ।
काकादिष्टफला जम्बूर्भृङ्गेष्टास्याद्वनप्रिया । ॥५७॥

---

१ ञ्रोपिचB २ आम्रः स्थूलात्कपित्थार्थों महाराजोऽपि नीलतः kC

नादेयी भूमिजम्बूस्तु भृङ्गेष्टा सूक्ष्मसत्यका ।
पिकभक्ष्या काकजम्बूरथ पूतफलः पुनः ॥५८॥
पनसः कण्टकिफलः फलिनः फलवृक्षकः ।
महावृक्षः फला[1]सारः कंपलः[2] कण्टकीफलः ॥५९॥
चम्पालुरथ त[3] भक्षि पुस्नं पुंसि नपुंसके ।
निरष्ठीला तु कदली सुकुमारा सकृत्फला ॥६०॥
मोचा गुच्छफला रम्भा सुफला गुच्छदन्तिका ।
उरुस्तम्भा[4] भानुफला वनलक्ष्मीर्विषाणिनी ॥६१॥
रसा नृपेष्टा निःसारा बालेष्टाप्यथ काष्ठिका ।
सुकाष्ठा च शिलाकाष्ठवनेभ्यः कदलीति च ॥६२॥
फलाप्यथ सुरभिका सुभगा च सुरप्रिया ।
गौरी हेमफलांशवद्रि[5] वनहाटक चम्पकाः ॥६३॥
एषां पर्यायशब्देभ्यो रम्भापर्यायवाचिका ।
कुमारिका वृन्त[6]पुष्पा सत्पुष्पं तु शिलीध्रकम् ॥६४॥
अथापि स्यान्नारिकेरो नारीकेरश्च लाङ्गली ।
नाडीकेरो नाडिकेरो नाडिकेलश्च वा स्त्रियाम् ॥६५॥
नारीकेलो नारिकेलो नालीकेलः शिरःफलः ।
सदाफलो रसफलो मत्कुणश्च छटाफलः ॥६६॥

---

१ महावृक्षफला kB २ करालः B ३ तत्रागे वुस्तं B ४ कुरुस्तम्भा kC
५ फलांश्चन्द्र B ६ वृत्त[B]

तृणराजः स्कन्धतरुर्दाक्षिणात्योपि लाङ्गली ।
फल[1]स्त्रिनेत्रदृढयोरथान्यो मधुनः फलः ॥६७॥
मधूत्तरो [2] नालिकेरो [3] बद्धकूर्चफलश्च सः ।
ह्रस्वमृद्वोश्चापि फलः[4] करकोस्य फलास्थनि ॥६८॥
तन्मज्जा खपुरं क्लीबे कूर्परं[5] गरिका स्त्रियाम् ।
वारः खट्टः खरस्कन्धो ललनो बहुवल्कलः ॥६९॥
भक्ष्यबीजः स्नेहबीजो वनद्रुस्तापसप्रियः ।
धनुःपटः पियालश्च पटो[6]ऽपि च धनुर्द्धनू[7] ॥७०॥
प्रियालः स्यादुपवटश्चाथ भल्लातकी त्रिषु ।
पर्यायोऽग्न्यर्कयोश्चापि वातारिः स्यादरुःकरः ॥७१॥
[8]तैलस्फोटपृथग्भ्यः स्याद्बीजः कृमिहरश्च सः ।
स्याद्धनुर्बीजवीरेभ्यो वृक्षोऽथ क्षीरिका स्त्रियाम् ॥७२॥
क्षीरवृक्षो राजफलो निम्बबीजो नृपद्रुमः ।
क्षीरशुक्लो दृढस्कन्धः श्रीफलो माधवोद्भवः ॥७३॥
राजादनफलो राजादनं राजातनोऽस्त्रियाम् ।
अस्त्रियां द्वौ फलाध्यक्षाध्यक्षौ च क्षीर्ययं पुमान् ॥७४॥
फलाध्यक्षो मधुफलः क्षीरगुच्छफलोऽपि सः ।
रसबीजः शुकेष्टश्च त्रिषु दाडिम्बदाडिमौ ॥७५॥

---

१ स्त्री[B] २ नारिकेलो[B] ३ बहु[B] ४ करङ्को[1] ५ कर्परं[B] ६ वरो[B] ७ द्रुंनुः[B]
८ जल[B]

मधुबीजो रक्तबीजो दालिमः फलखाडवः ।
करकः सुफलो दन्तबीजः कुचफलोऽपि च सः ॥७६॥
मणिबीजो रक्तफलो रोचनः शुकवल्लभः ।
नीलपत्रो वृत्तफलः सुनीलो रक्तपुष्पकः ॥७७॥
अथ तिन्दुः कृष्णसारः कालस्कन्धोतिमुक्तकः ।
स्यन्दनार्थादाह्वयार्थः स्फूर्जनोऽपि च रामणः ॥७८॥
काकपर्यायतिन्दुः स्यात् काकाण्डः काकबीजकः ।
अक्षोडस्तु फलस्नेहः कन्दरालफलोऽपि च ॥७९॥
गुडाशयः पर्वतीय[1] आखोरोऽपि बृहच्छदः ।
वीरेष्टो मधुमत्तः स्याद्विरेचनफलस्तु सः ॥८०॥
पीलुः शीतसहस्रांशः शाखी गुडफलश्च सः ।
महाफलो महाराजमधुभ्यः पीलुरित्यपि ॥८१॥
मधुपीलुर्महावृक्षोऽथ पारेवतमस्त्रियाम् ।
आरेवतो रेवतश्च रैवतोऽपि सुधाफलः ॥८२॥
मधुसस्यो प्युलूती स्त्री तद्भेदाः स्युरनेकशः ।
महापारेवतं स्वर्णपारेवतमतः परम् ॥८३॥
सास्त्राणिजं[2] खारिकं च रक्तरैवतकं पुनः ।
बृहत्पारेवतं द्वीपखर्जूरी द्वीपजादयः ॥८४॥

---

१ पार्वतीयः BK २ सास्त्रा B

ह्रयङ्घ्रिया तु निःश्रेणी यवनेष्टा दुरारुहा ।
खरस्कन्धा तु दुर्धर्षा काषायी खर्जुरी द्वयोः ॥८५॥
निःश्रेणिरपि खर्जूरी माध्वी तु मधुकर्कटी ।
मधुरा मधुखर्जूरी कोलपर्यायकर्कटी ॥८६॥
कर्करोप्यथ[1] भूखर्जूर्यवरा तु मधुस्रवा ।
दीप्या च पिण्डखर्जूरी फलपुष्पा[2] श्वभक्तका ॥८७॥
स्वादुपिण्डाथ चान्या तु मुनिखर्जूरिका च सा ।
सैव स्याद्राजखर्जूरी राजपिण्डा नृपप्रिया ॥८८॥
मधुवृक्षस्तु मधुलो मधुष्ठीलो मधुस्रवः ।
मधूको मधुकोपि स्यान्मधु क्लीबे[3] मधुः पुमान् ॥८९॥
गुडपुष्पो रोध्रपुष्पो [4]वनप्रस्थश्च माधवः ।
मधुपुष्पस्तु मङ्गल्यो जलजाते मधूलकः ॥९०॥
क्षुद्राप्रियो दीर्घपत्रः पतङ्गो [5]वारवल्लभः ।
चौरिकाक्षोप्यथ भवं भविष्यं भव्यभावने ॥९१॥
अपि पिच्छिलबीजं स्यात्तच्च लोमफलं पुनः ।
स्याद्रक्तशोधनं चाथ वीरं [6]वाराहकारुके ॥९२॥
वीरसेनमथ द्राक्षा कृष्णापि तापसप्रिया ।
प्रियाला स्याच्चारुगुच्छाऽमृतेभ्योऽपि फला पुनः ॥९३॥

---

१ कर्कटोB २ पुष्पश्चB ३ पुंसिkC ४ वानB ५ वीराB ६ वीराB

[1]रसालारव्याऽमरा मृद्वी गोस्तनी च हिमोत्तरा ।
फलाभद्रा च कपिला मधुवल्ली मधूल्यपि ॥६४॥
शतवीर्या हैमवती काश्मीरी पथिका च सा ।
सुधारसा दीर्घमधुसुभ्यः सस्यार्थका च सा ॥६५॥
हरिता [2]हारहूराथ सुवृत्ता बीजवर्जिता ।
अथ कर्मारकः कर्मरकः पीतफलश्च सः ॥६६॥
धाराफलो मुद्गरकः परुषं तु परूषकम् ।
नीलमण्डलमल्पास्थि गिरिपीलु परावतम् ॥६७॥
परुर्नीलफलं चाथ चलपत्रश्च यज्ञियः ।
शुचिबोधिद्रुमीरचैत्यश्राभ्यो द्रवर्थो गजाशनः ॥६८॥
अश्वत्थो विष्णुसद्मार्थः पवित्रं गुह्यपत्रकः ।
मङ्गल्यः श्यामलो विप्रः सत्यः[3] सेव्यः शुभप्रदः ॥६९॥
यज्ञोदुम्बरमेतस्य फलेश्वत्थी वनोद्भवा ।
अश्वत्थसंनिभा क्षुद्रा पवित्रा लघुपत्र्यथ ॥१००॥
वटो जटालो न्यग्रोधोऽवरोहा पादरोहणः ।
विटपी मण्डपी शृङ्गी[4]यज्ञावासश्च रोहिणः ॥१०१॥
महाच्छायः स्कन्धरुहः क्षीरी रक्तफलः पुनः ।
कौबेरो बहुपान्नीलः शिफारुट् च वनस्पतिः ॥१०२॥

---

१ धामरा B २ हर B ३ सत्यसेव्य B ४ यज्ञा KC

नदीयज्ञार्थयोर्वृक्षः सिद्धार्थोऽपि वटी स्त्रियाम् ।
अमरा शृङ्गिनी क्षीर[1]काष्ठाप्यथ कपीतनः ॥१०३॥
प्लक्षः प्लवङ्गः प्लवगो गर्दभाण्डः कमण्डलुः ।
महाबलोऽवरोहद्रुः क्षीरी शृङ्गी सुपार्श्वकः ॥१०४॥
दृढप्ररोहः पुण्ड्रस्तु भिदुरो ह्रस्वपर्णकः ।
महावरोहोपि जटी मङ्गलच्छाय इत्यपि ॥१५०॥
स्यात्पर्क[2]पर्वयोष्टिष्टी मशकी तु सदाफलः ।
उदुम्बरः पुष्पशून्यो यज्ञियः सुप्रतिष्ठितः ॥१०६॥
कालस्कन्धः शीतवल्कः[3] क्षीरवृक्षः पवित्रकः ।
हेमदुग्धः काण्डफलः सौम्यः क्षीरी च काञ्चनः ॥१०७॥
वसुद्रुमो हरिद्राक्षः सौम्यो जन्तुफलश्च सः ।
सचक्षुः शीतवृक्षोऽथ लघुपत्रफला स्त्रियाम् ॥१०८॥
लघोरुदुम्बरार्था च क्षुद्रोदुम्बरिकाऽपि सा ।
काष्ठोदुम्बरिका चाथ करपत्रच्छदाऽपरा ॥१०९॥
खरपत्रापि [4]माकण्ठी वान्तिसस्या बृहच्छदा ।
अथार्यराजपुण्ड्रेभ्य उदुम्बरफलार्थका ॥११०॥
कृष्णोदुम्बरिका काकोदुम्बरी जघनेफला ।
अजाजी फल्गुनी फल्गु[5]र्मलयूश्चित्रभेषजम् ॥१११॥

---

१ काष्ठेB २ पूर्व CK ३ वल्की B ४ मार्कण्डी B ५ र्मलपू BC

स्याद्द्वयोर्बदरी कोला कर्कन्धूरपि च स्त्रियाम् ।
कर्कन्धुश्चापि कर्कान्धूर्न क्लीबे कुवली त्रिषु ॥११२॥
कोलः[1] कोलिश्च कोली च बदरं क्वापि पुंसि च ।
दृढबीजा [2]बृत्तफला फेनिला फलशैशिरा ॥११३॥
सुवीरापि च सौवीरा [3]बालेष्टा सुफला च सा ।
राजपर्यायबदरी वल्लभा स्तनर्बीजिका ॥११४॥
पृथुकोलाथ भूसूक्ष्मलघुवल्लीभ्य एव सा ।
बदरी स्याद्बहुफला बदराद्वल्लरी[4] फला ॥११५॥
सूक्ष्मा[5]त्पत्रफलार्था स्याद्दुःस्पर्शा बहुकण्टका ।
शिखिप्रिया[6]चणार्थात्स्याद्बदर्यथ सुकेसरः ॥११६॥
बीजपूरो बीजपूर्णः पूर्णबीजश्च पूरकः ।
मातुलुङ्गः केसरान्तो रुचको दन्तुरच्छदः ॥११७॥
सुपूरको बीजफलो जन्तुघ्नो[7]थवनोद्भवा ।
गन्धाढ्या देवदूती च स्यादत्यम्लरसा च सा ॥११८॥
मधुनः[8] कर्कटी वल्ली बीजपूरार्थका च सा ।
[9]महाफला वर्द्धमाना राचनी तु शिवाऽमृता ॥११९॥
धात्रा वयस्थामलकी त्रिषु तिष्यफलाऽमला ।
[10]एमलापि च कायस्था श्रीफला वृत्तसस्यका ॥१२०॥

---

१ कोलं[B] २ वृत्त[KC] ३ बलिम्प[B] ४ वल्लरी[B] ५ पत्र[CK] ६ चणार्था स्यादिति पाठः सर्वत्र ७ प[KC] ८ मधुरः[k] ९ महामूला[B] १० रामला[C] समला[B]

वृष्या शान्ता क्षुद्रधात्री क्षुद्रजात्यथ चुक्रिका ।
चिञ्चवाम्लिका शाकचुक्रा चुक्राम्ला[1] तिन्तिडी च सा[2] १२१
चुक्रं षण् चुक्रिका चुक्रा शुक्ला च शुक्लिका[3] स्त्रियः ।
अम्लाऽम्लोका[4] तिन्तिडी च तैंतिली तिन्तिलीति सा १२२
आम्रातकः[5] पीतनकः कपिचूडः कपिप्रियः ।
शृङ्गीफलो रसाढ्यश्च तनुक्षीरोथ गोक्षुरः ॥१२३॥
नारङ्गो नागरङ्गोपि गन्धाढ्यो गन्धपत्रकः ।
योगारङ्गो योगरङ्गो वरिष्ठश्च सुरङ्गकः ॥१२४॥
ऐरावतः [6]सुगन्धोऽथ वह्निदीप्तश्च रोचनः ।
निन्दकश्चाम्लजम्बीरो वह्नि बीजश्च शोधनः ॥१२५॥
अम्लसारो दन्तघातो जन्तुमार्यथ तत्र तु ।
अति[7]सूक्ष्मत्वचिफले महानिम्बूर्महाफला ॥१२६॥
जम्बीरो जम्भलो जम्भी जम्भो दन्तशठो जतुः[8] ।
स्याद्[9]गम्भीरोपि जम्भीरस्तद्वज्जम्बीर इत्यपि ॥१२७॥
मुखशोधी रोचनको जाड्यारिर्मधुरोऽपरः ।
मधुजम्भो रसद्रावी पित्तद्रावी विराभिधः[10] ॥१२८॥
चिरपाकी तु माल्लूरः कपित्थोपि दधित्थकः ।
ग्राहिग्रन्थिगन्धकुचवृत्तेभ्यः कठिनादपि ॥१२९॥

---

१ चक्काला B २ तिkC ३ कः B ४ °म्लिका BC ५ अम्लातकः B ६ सुरङ्गो B
७ रूक्ष B ८ जतु B ९ त्सम्भीरो B १० चिरोभिधः B

फलार्थः स्याद्दन्तशठः कपीष्टः करभप्रियः ।
मङ्गल्योऽपि स्त्रियां नीलमल्लिकाप्यथ तुम्बुरुः ॥१३०॥
वनजः सौरजः सौरः सानुजस्तीक्ष्णवल्कलः ।
द्विजर्त्तीक्ष्णफलस्तीक्ष्णपत्रोऽपि च महामुनिः ॥१३१॥
सुगन्धिः स्यात्स्फुटफलो रुद्राक्षस्तु शिवप्रियः ।
पावनोऽक्षश्च सर्पाक्षो नमेरुर्भूतनाशनः ॥१३२॥
विल्वो द्वयोर्हृद्यगन्धः शाण्डिल्यः श्रीफलः पुनः ।
शल्वः शलाटुः शैलूषः शैवपत्रः शिवेष्टकः ॥१३३॥
कर्कटाह्वो गन्धपत्रः पत्रश्रेष्ठस्त्रिपत्रकः ।
दुरारोहो गन्धफलस्त्रिशिखश्च शिवद्रुमः ॥१३४॥
त्रिशाखपत्रोऽपि सदाफलः सत्यफलश्च सः ।
तूदस्तूलो ब्रह्मकाष्ठं ब्राह्मणेष्टश्च यापकः[1] ॥१३५॥
सोऽः पुष्परूपो नीलद्रुरथ सिश्चन्तिका स्त्रियाम् ।
सल्लकी शल्लकी[2] सल्ली सुगन्धा सुरभिस्रवा ॥१३६॥
शल्लकी ह्लादिनी ह्लादा ह्लादिनी सुरभी रसा ।
गजभक्षा मुखामोदा सुश्रीका जलतिक्तिका ॥१३७॥
ह्रस्वादङ्कु[3]रका चस्रफला[4] छिन्नरुहा च सा ।
अपि गन्धफला चाथ कतकोम्बुप्रसादनः ॥१३८॥

---

१ पावकः$^{C}$ २ वल्लकी$^{KC}$ ३ दाङ्कुर$^{kC}$ ४ अम्लफला$^{kC}$

रुच्यस्तिक्तफलो गुच्छाफलः कतफलश्च सः ।
छेदनीयोऽथ कर्काह्वा क्षुद्रधात्री च[1] कर्कटः ॥१३९॥

मृगलण्डो [2]गणोरुःस्यात्तोदनः क्रुन्दनोप्यथ ।
श्लेष्मातको बाहुवारः पिच्छिलो द्विजकूपितः[3] ॥१४०॥

शेलुः शीतफलः सेतु[4] रुद्दालः कर्वुदारुकः[5] ।
भूतद्रुमो गन्धपुष्पः[6] क्षुद्रश्लेष्मातकोऽपरः ॥१४१॥

लघुशेलुः सूत्सफलो[7] भूकर्चूर[8]पि दारकः ।
सुप्युको[9] मोक्षकः [10]सारवृक्षोऽपि च विषापहः ॥१४२॥

पाटली वनवासी च जटालोऽपि सुतीक्ष्णकः ।
मेहनो गोलिको[11] थ स्यात्करमर्दस्तु चीकलः ॥१४३॥

[12]कृष्णोऽविघ्नः कराम्लः[13] स्यात्सुषेणो मुनिरित्यपि ।
फलस्तीक्ष्णादि[14]संयुक्तः फलान्तस्तबकादिकः ॥१४४॥

कायस्था श्रेयसी दिव्या जीवन्यपि हरीतकी ।
त्रिषु नामस्थानजातिभेदाद्गुणभिदः क्रमात् ॥१४५॥

जीवन्ती[15] विजया रोहिण्यमृता पूतनाऽभया ।
रसा [16]तद्वच्छेतकिनीत्येषा सप्तविधा मता ॥१४६॥

---

१ क्षुधाहन्त्री^B २ गरोरु^Ck ३ द्विजकुत्सितइत्यन्यत्र ४ सेलुदरिल:^B ५ कर्बुदा-रुक:^B ६ पुष्पक्षुपः^B ७ सत्यजलो ८ विदारका:^B ९ मध्यको^B १० चार^B ११ मोकिको^B १२ हृष्टो^B १३ ऽविघ्नइत्यन्यत्र । विघ्नकरोम्ल:^B १४ संयुक्त^B १५ जीवनी^B १६ च्छेतकिनी^B

जीवन्ती[1] स्वर्णवर्णा सा सर्वदेशसमुद्भवा ।
गुणे[2] सार्वपथीनाथ विजया लघुवृत्तका ॥१४७॥
सा विन्ध्याद्रिसमुद्भूता सर्वदोषविनाशिनी ।
तृतीया रोहिणी वृत्ता[3] प्रातिष्ठानी क्षते हिता ॥१४८॥
अमृता मांसला स्थूला चम्पोत्था सा विरेचनी ।
पञ्चमी पूतना स्वल्पत्वचा सिन्धुसमुद्भवा ॥१४९॥
लेपे हिताथाभया तु नेत्ररोगविनाशिनी ।
सौराष्ट्री पञ्चकोणाथ[4] पुनः श्वेतकिनी च सा ॥१५०॥
अम्ला[5] हिमाद्रिसंभूता सर्वरोगविनाशिनी ।
यावद्धस्ते कृता तावद्विरेचनकरी नृणाम् ॥१५१॥
विभीतकस्तैलफलो भूतावासः कलिद्रुमः ।
संवर्त्तकश्च वासन्ती विषघ्नोपि विभीदकः ॥१५२॥
त्रहेडुको हार्यफलः पुनः कर्षफलश्च सः ।
निम्बः प्रभद्रः कीरेष्टोऽरिष्टोऽरिष्टफलोऽपि च ॥१५३॥
पिचुमन्दः पारिभद्रो नेता काक[6]फलश्च सः ।
यवनेष्टः पीतसारः सर्वतोभद्र इत्यपि ॥१५४॥
वरतिक्तः पिचुमर्दः शीतो[7] ज्येष्ठामलः पुनः ।
छर्दनो हिङ्गुनिर्यासो महानिम्बस्तु[8] कार्मुकः ॥१५५॥

---

१ जीवनी[B] २ गुणैः[B] ३ प्रति[B] ४ पुनस्श्वेतकिनी[B] ५ अम्ला [KC] ६ काल[B]
७ ज्येष्ठीमलः[B] ८ कामुकः[B]

मदोद्रेकः केशमुष्टिः काकाण्डोऽपि यमद्रुमः ।
अपि स्याद्रम्यकक्षीरो महातिक्तोऽथ रामणः ॥१५६॥
रमणो[1] वकपर्यायनिम्बः[2] कैडर्य इत्यपि ।
गिरिनिम्बः शुक्रसारो भूनिम्बस्तु किरातकः ॥१५७॥
कैरातोऽनार्यतिक्तः स्या[3]त्तिक्तको रामसेनकः ।
अकाण्डतिक्तो हैमः स्यादथ नेपालनिम्बकः ॥१५८॥
तृणनिम्बो ज्वरान्तः स्यान्नाडीतिक्तोर्धतिक्तकः ।
निद्रारिः संनिपातारिः कृष्णगर्भस्तु कट्फलः ॥१५९॥
सोमवल्को रञ्जनकः[4] स्त्री कुम्भी लघुकाश्मरी ।
भद्रावती महाकुम्भी श्रीपर्णी कुमुदा च सा ॥१६०॥
भद्रोग्रगन्धा सैवान्याऽप्यग्निमन्थः पुमानयम् ।
अरण्यकेतुस्तर्कारी कर्णिका विजया जया ॥१६१॥
नादेय्यनन्तापि[5] च सा वैजयन्त्यथ तत्र तु ।
क्षुद्राग्निमन्थस्तपनस्त्र्यरणिर्गणिकारिका ॥१६२॥
तेजोवृक्षस्तनुत्वक् स्यात्[6] स्योनाकस्तु कटंभरः ।
मयूरजङ्घः[7] कट्वङ्गः शुकनासः कुटंनटः ॥१६३॥
प्रियजीवोऽपि रलुकः[8] कुनटस्तु विरोचनः ।
भ्रमरेष्टो बर्हिजङ्घो[9] वातारिः स्यान्मुनिद्रुमः ॥१६४॥

१ समनो[B] २ कैंडर्य्य[K] ३ त्तिक्ताको[B] ४ रञ्जनकोऽस्त्री[B] ५ पि वन्या[B] ६ सोनाकस्तु[B] ७ जंघकट्वरा[B] ८ रलकः[B] ९ गन्धो[B] ।

मण्डूकः[1] फल्गुवृन्ताको निःसारः पूतिपत्रकः[2] ।
[3]पीतवृक्षो भूतिसारः टेटू[4] वासन्तशोणकौ ॥१६५॥
मण्डूकपर्णी पीताङ्गोऽप्यजश्रृङ्गी तु वार्तिका[5] ।
मेषश्रृङ्गी सर्पदंष्ट्रा कृष्णवृन्ता तु काश्मरी ॥१६६॥
श्रीपर्णी सर्वतोभद्रा हीरा भद्रा च कट्फला ।
भद्रपर्णी सीधुपर्णी कम्भारी कुमुदा पुनः ॥१६७॥
काश्मरी कश्मरी च स्त्री कश्मर्यं पुंनपुंसकम् ।
विदारिणी गोपभद्रा[6] गम्भारी मधुपर्ण्यपि ॥१६८॥
रोहिणी चीरिणी श्वेता बहुभद्रा च मेदिनी ।
[7]कृष्णस्थूलत्वचा ग्रष्टिः सुफला मधुमत्यपि ॥१६९॥
स्यान्महाकुमुदा चाथ कुद्दालो युगपत्रकः ।
श्लक्ष्णत्वक्[8] मालुपत्रः स्यादम्बुराश्मान्तकेन्द्रकौ[9] ।१७०।
कृतमालो राजतरुः प्रग्रहः कर्णिकारकः ।
परिव्याधो व्याधिरिपुः सुफलोथ ज्वरान्तकः ॥१७१॥
[10]आरेचनो दीर्घफलः स्वर्णदः स्वर्णपुष्पकः ।
आरग्वधो व्याधिघातो दद्रूकुष्ठहरश्च सः ॥१७२॥
स्यादारगवधश्चापि शंपाकश्चतुरङ्गुलः ।
संपाकोऽपि च शम्याका[11]सुवर्णांशुः पुमान्स्त्रियाम् १७३

---

१ मण्डकः B २ फरि B ३ पीन B ४ टट्टू B ५ वर्तिका B ६ कभारी B ७ कृष्णा B ८ भालु B ९ केन्दुकौ B १० आरैवतो B ११ सुवर्णालुः K

विषघ्नी नेत्ररोगघ्नी वृश्चिकाली विषाणिनी ।
अलिपर्णी भूरिदुग्धा कलिका देवलाङ्गली ॥१७४॥
सुरपुष्पा गमावर्त्ता दक्षिणावर्त्तकी पुनः ।
सुवर्णादा युग्मफला करभी कर्कशा मशा[1] ॥१७५॥
क्षीरशृङ्ग्यथ[2] कोटी स्त्री सैवोक्ता गिरिमल्लिका ।
कुटजः कौटजो वत्सः कलिङ्गः शक्रपादपः ॥१७६॥
अपि कोटी यवफलः संग्राही पाण्डुरद्रुमः ।
प्रावृष्यो मल्लिकापुष्पो महागन्धः फलेऽस्य तु ॥१७७॥
स्याद्‍स्त्रियामिन्द्रयवमस्त्री भद्रयवं पुनः ।
कलिङ्गं च स्त्रियां क्लीबे कौटजं कुटजं च षण् ॥१७८॥
इन्द्राह्वः स्यादिन्द्रफलो वत्सकोऽथ शिरीषकः ।
सुलोमशो बहुमृदुमधुवृत्तार्थतः सुमः ॥१७९॥
भण्डिरश्चापि भाण्डीरो भण्डिलोऽपि च कथ्यते ।
शुकेष्टो भण्डिकोऽपि स्याद्विषघ्नश्च कपीतनः ॥१८०॥
उद्दालकः श्यामलः स्यात्कालिङ्गः शङ्खिनीफलः ।
रक्तमूलस्तु ववरः स्यात्द्वो देवसर्षपः ॥१८१॥
कुरराह्वि : सूक्ष्मदलः[3] करञ्जस्तु करञ्जकः ।
चिरबिल्वो नक्तमालः पूतीकः पूतिकश्च सः ॥१८२॥

---

१ मिशी^B २ कोद्री^B ३ स्यात्कुरञ्जस्तु रोजकः^B

पूतीकरञ्जः[1] कलिकृत् पूतीकरज इत्यपि ।
तथैव पूतिकरजोथान्यो घृतकरञ्जकः ॥१८३॥
[2] घृतपर्णः स्निग्धपर्णस्तपस्वी विषनाशनः ।
महाकरञ्जः षड्ग्रन्थो हस्तिरोहण इत्यपि ॥१८४॥
हस्ती करञ्जः शार्ङ्गेष्टा विषघ्नी मदहस्तिनी ।
अङ्गारवल्ली काकघ्नी मधुमत्ता वसादिनी ॥१८५॥
कलाराड्यप्यथ गुच्छार्थात्करञ्जः पुष्प इत्यपि ।
स्निग्धपत्रो नदी गुच्छी सा नन्दी दन्तधावनः[3] ॥१८६॥
अङ्कोल्लोङ्को[4]ठको रेची गूढपत्रोनिकोचकः ।
गुप्तस्वेदः पीतसारो मदनो गूढमल्लिका ॥१८७॥
पीतस्ताम्रफलो दीर्घकालः[5] स्याल्लम्बकर्णकः ।
गुणाढ्यः कोलको गन्धपुष्पो[6] रावत इत्यथ ॥१८८॥
नखवृक्षो नखालुः स्यान्नराह्वः शोकनाशनः ।
अथ सर्जरसः सर्जः कलः कलयजोद्भवः ॥१८९॥
वल्लीवृक्षो वीरपर्णः शालः[7]स्यादजकर्णकः ।
कषायो ललनो गन्धवृक्षो रालोथ वंशकः[8] ॥१९०॥
सिद्धिदः सालनिर्यासो यक्षधूपोऽग्निवल्लभः ।
दिव्यसारः सुरेष्टः स्याच्छूरोथ[9] जरणद्रुमः ॥१९१॥

---

१ करि[K C] २ घृतपर्णइत्याद्यर्धं[B] पुस्तके न दृश्यते ३ धावनम्[B] ४ टको[B]
५ कील[B] ६ रावथ[K] रोचन[B] ७ शील[C] ८ वंशकम्[C] ९ धूरो[B]

दीर्घपर्णः कौशिकोऽपि वन्यः स्यादश्वकर्णकः ।
सस्यसंवरणस्तार्क्ष्य[1]प्रसवोऽथतलः पुनः ॥१९२॥
तालो ध्वजद्रुमः पत्री दीर्घस्कन्धो दृढच्छदः ।
तृणराजो मधुरसो मदाढ्यो दीर्घपादपः ॥१९३॥
तरुराजो दीर्घपत्रो गुच्छपत्रश्चिरायुकः ।
गजभक्षश्चासवदः श्रीतालस्तु[2] मृदुच्छदः ॥१९४॥
मृदु[3] तालो लेखदलो लेखार्हो याम्यसंभवः ।
स्याच्छिरालविशालाभ्यां पत्रोप्यथ बृहच्छदः ॥१९५॥
हिन्तालः स्थूलतालःस्याद्वल्कपत्रो विभीषणः[4] ।
गर्भस्रावी[5] नीलतालो द्विधाङ्घ्रिर्बहुकण्टकः ॥१९६॥
स्थिरपत्रो द्विधा लेख्यः[6] सितपत्रोम्लसारकः ।
बृहत्तालोथ माडः स्याद्दीर्घो मद्यद्रुमश्च सः ॥१९७॥
वितानको मोह[7]करस्तलोऽपि च मदोत्तरः ।
तापिच्छस्तु तमालः स्यात्कालस्कन्धो महाबलः ॥१९८॥
नीलध्वजः कृष्णतालः[8] कदम्बो ललनाप्रियः ।
स्यात्सीधुवृत्तयोः पुष्पः सुरभिः कर्णपूरकः ॥१९९॥
कादम्बर्यो मदाढ्योथ पुलकी मृगवल्लभः ।
[9] मेघाङ्गनाप्रियो नीपोऽपि च धाराकदम्बकः ॥२००॥

---

१ स्तार्क्ष्यः प्रसवादिनलः[B] २ शव[B] ३ जालो[KO] ४ पि भीषणः[B] ५ स्रावी[B]
६ लेख्यः[B] ७ कार[B] ८ कद्रवो[B] ९ मेघो[B]

प्रावृष्यः प्रावृषेण्यः स्यादथ धूलीकदम्बकः ।
बलभद्राभिधो भृङ्गप्रियः क्रमुकपुष्पकः ॥२०१॥
स्याद्वसन्तपरागाभ्यां पुष्पः स्यादथ भूमिजः ।
भूवल्लभो भूकदम्बो लघुपुष्पो व्रणापहः ॥२०२॥
वृत्तपुष्पो विषघ्नोथ वानीरो[1] जलवेतसः ।
शाखालश्चाथ कुम्भीरः पर्पटद्रुमरोमशौ ॥२०३॥
समालविटपी चाथ दीर्घपत्रस्तु वञ्जुलः ।
वेतसो मञ्जरीनम्रो निचुलो गन्धपुष्पकः ॥२०४॥
सुशोणः कलनश्चाथ धवस्तु मधुरत्वचः ।
शुकवृक्षो दृढतरुः कषायो गौर इत्यथ ॥२०५॥
[2]धन्वनो रक्तकुसुमो धनुर्वृक्षो महानलः ।
रुजापहः पिच्छलको रूक्षः[3] स्वादुफलोऽप्यथ ॥२०६॥
भूर्जोवल्कद्रुमो भूतघ्नुक् सुचर्मापि चित्रलः ।
भूर्यरक्षाबिन्दुमृदुपर्यायेभ्य[4]च्छदो भुजः ॥२०७॥
तिनिशः स्यन्दनश्चक्रो रथाङ्गः[5] स्यन्दनद्रुमः ।
अपि स्त्रीपुंसयोर्नेमिर्नेर्मा चापि स्त्रियामिमे ॥२०८॥
भस्मगर्भो जलधरः[6] शम्बरस्तु शिवप्रियः ।
अर्जुनाह्वो नदीसर्जो वीरद्रुः ककुभोप्यथ ॥२०९॥

---

१ वानीरी[B] २ धुवनो[B] ३ रूक्षस्वादु[B] ४ स्यःछदाफलः[B] ५ स्याद्रथ द्रुम[B]
६ शबरस्तु[B]

हरिद्रुः पीतदारुः स्यात्सुपुष्पश्च सुराह्वयः ।
पीतकोऽथ स्त्रियां दग्धा दग्धिका[1] कर्कशच्छदा ॥२१०॥
स्थलेरुहा दभ्धरुहा[2] रोमशा भस्मरोहिणी ।
सुदग्धिकाथ शाखोटः खरपत्रो गृहद्रुमः ॥२११॥
धूकावासो[3] भूतवृक्षः स्थिरसारोतिपत्रकः ।
श्रेष्ठकाष्ठ[4]शाखपत्रो दीर्घपत्रोथ शिशंशपा[5] ॥२१२॥
महाश्यामा कृष्णसारा तीक्ष्णसारापि धूम्रिका ।
कपिलाथ[6] श्वेतपत्रा सितपर्यायशिंशपा[7] ॥२१३॥
स्मरिणी कपिलाक्षी च भस्मगर्भा कुशिंशपा[8] ।
अरुणस्तु[9] [10]महासर्जोशन आसनसौरिणौ ॥२१४॥
प्रियको वृक्ष[11]बीजः स्यात्प्रियसालश्च नीलकः ।
श्वेतवृक्षस्तु वरुणस्तिक्तशाकः कुमारकः ॥२१५॥
साधुवृक्षः पवित्रस्तु गर्भवः सिद्धिवः पुनः ।
कुठ[12]जीवश्चाथ पुनः करह्लादः क्षुरः शरः ॥२१६॥
स्यान्महाश्वेतयोः पिण्डीलकश्चाथ विषद्रुमः ।
कारस्करश्च किंपाको विषतिन्दुः कुपाककः ॥२१७॥
कालकूटो रम्यफलोऽथ स्त्रियां स्याद्विषान्तिका ।
कटभी नालिका शौण्डी पाटली गिरिकर्णिका ॥२१८॥

---

१ दारिधका B २ दीर्घरुहाB ३ यूकावासः Ck ४ काष्ठः B ५,७,८ शिंशुपाk
६ कपिलार्धाB ९ अरुन Ck १० महासर्जा Ck ११ वृत्तB १२ बीजB

शिरीषपत्रा किणीही कालिन्दी विषपादिका ।
महाश्वेताथ त्त्वकः त्ततकः क्रूर इत्यपि ॥२१६॥

तीक्ष्णो भूताङ्कुशो राजोद्वेजनो[1] भूतनाशनः ।
लकुचो लिकुचः सालः काषायी दृढवल्कलः ॥२२०॥

स्थूलस्कन्धो डहुडुहू लकुचोऽथ विकङ्कतः ।
स्याद्व्याघ्रकण्टयोःपादो[2] ग्रन्थिलः स्वादुकण्टकः २२१

गोपघण्टो बहुफलः[3] स्रुचावृत्तः[4] स्रुवद्रुमः ।
वैकङ्कतः[5] कण्टकारी वैकतो[6] ग्रन्थिलः समाः ॥२२२॥

स्यात् पिण्डरोहणः पूतः किंकिणीरवकस्तु[7] सः ।
हय[8] पर्यायवैर्यर्थैः कटवीरो हरप्रियः ॥२२३॥

प्रतिहासः श्वेतकुन्दगौरीभ्यः पुष्प इत्यपि ।
स्यात्स्निग्धदिव्ययोस्तद्वद्रोधक[9]स्तत्र रक्तके ॥२२४॥

गणेशचण्डीकुसुमो भूतमारी रविप्रियः ।
क्रूरोथ[10]पीतप्रसवो गन्धपुष्पोथ कृष्णके ॥२२५॥

कृष्णपुष्पोऽथ धत्तूर उन्मत्तः कितवः शठः ।
धुस्तुरोऽपि च धूस्तूरो धुत्तुरो धूत्तुरश्च सः ॥२२६॥

---

१ ननो CK २ कण्टो गोपादो Ck ३ फलस्तचा B ४ श्रुच Ck ५ विकङ्कतः Ck ६ चैकतो Ck ७ किकेणी वीरकस्तु Ck ८ हयपर्यायवैयर्थैः B ९ द्रोभ्रक इति स्यात् १० बीज B

धूर्त्तः स्वर्णाभिधानोऽपि मादनः शिवशेखरः ।
कृष्णपुष्पः शिवस्निग्धः सचिवो विषनाशनः ॥२२७॥

खर्जूघ्नः[१] कालहा पुष्पः खरकराटफलोऽपि सः ।
मोहनो मातुलः श्यामः शैवः कलभमत्तकौ ॥२२८॥

क्रूरोथ राजधत्तूरो राजस्वर्णो महाशिवः ।
भ्रान्तो निःश्रेणिकापुष्पस्तत्फले मातुलात्मजः ॥२२९॥

स्यादस्त्रियामथ पुनः करकस्तु[२] युगच्छदः ।
स्यान्महापीतकान्तेभ्यः पुष्पोऽपि कनकान्तकः ॥२३०॥

कोविदारः काञ्चनारः कुद्दालोथार्कसंज्ञकः ।
क्षीरच्छदः क्षीरकाण्डः खर्जूघ्नः शिवपुष्पकः ॥२३१॥

जृम्भणो विष्टरः क्षीरी प्रतापोऽपि विकीरणः ।
आस्फोटकः[३] सदापुष्पः फलः[४] स्याच्छुकतूलयोः॥२३२॥

तत्र शुक्ले शूकरार्कः प्रतापो वृत्तमल्लिकः ।
राजार्कस्तु सदापुष्पो वसुकोत्यर्क[५] इत्यपि ॥२३३॥

काष्ठीलोऽपि च मन्दारः[६] श्वेते पृथ्वीक इत्यपि[७] ।
रुचूको[८] रुचुकोऽपि स्यादीर्घपुष्पार्थकोऽप्यथ ॥२३४॥

---

१ खर्जूरइत्याद्यर्धद्वयं CK पुस्तकयोर्नास्ति केवलं B पुस्तक उपलभ्यते २ स्तुपुग C स्तूपग K ३ अस्फोटकः KC ४ फालः B ५ सूर्क B अलर्कः अम० ६ श्वेत B ७ इत्यथ B ८ रुचुको रुचको B

नमेरुः[1] सुरपुन्नागः सुरेष्टः सुरपर्णिका ।
सुरतुङ्गः पलाशस्तु किंशुको वक्रपुष्पकः ॥२३५॥
स्यात्पर्णोपज्ञको[2] वातपोथः[3] पीतद्रुमोऽपि सः ।
ब्रह्मवृक्षोऽथ तद्भेदे हस्तिकर्णः[4] सुकण्टकी ॥२३६॥
श्वेतस्कन्धः पारिभद्रः सपलाशो भवेद्द्विधा ।
वल्लीवृक्षविभेदेन स्त्रियां किंशुलकेति च ॥२३७॥
तद्वनेप्यथ पुंनागः पाटलो रक्तपुष्पकः ।
पुरुषाह्वोऽपि तुङ्गोथ तिलकाह्वस्तु रेचकः ॥२३८॥
वसन्तसुन्दरोऽरिष्टो बालभूषणमित्यपि ।
मृतजीव[5]स्थिरपुष्पो रुहः स्याच्छिन्नदग्धयोः ॥२३९॥
तरुणीकटाक्षकामोथाप्यगस्त्यस्तु मुनिद्रुमः ।
व्रणारिः शीघ्रपुष्पः स्याद्वक्रपुष्पः सुरप्रियः ॥२४०॥
दीर्घसस्यः पाटला तु पाटलिर्विषवल्लभा ।
स्थिरगन्धा तालवृन्ती रक्तपुष्पाम्बुवास्यपि ॥२४१॥
वासन्त्यमोघा कुम्भीकाप्यथाशोकस्तु वञ्जुलः ।
मधुपुष्पः केलिकः स्याद्रक्तपर्यायपल्लवः ॥२४२॥
दोहदी सुभगश्चित्रो विचित्रः कर्णपूरकः ।
स्याद्धेमपिण्डयोः[6] पुष्पो नटः कामाधिवासकः ॥२४३॥

---

१ ग्गमेरुः B २ यज्ञको B ३ वातः पोथो CK वानपोतः B ४ सकण्टकी B
५ जीवः B ६ पिण्ड्योःपुष्पो(थ) B

कङ्कोल्लिरपि कङ्केली स्थिरपुष्पस्तु[1] चम्पकः ।
अतिगन्धः स्वर्णपुष्पो हेमाह्वः सुकुमारकः ॥२४४॥
वनदीपस्तत्कलिका स्त्रियां स्याद्गन्धमोदिनी ।
बहुमोदा गन्धफली वनजे क्षुद्रचम्पकः ॥२४५॥
स्यान्नागचम्पकश्चाथ बकुलस्तु विशारदः ।
मधुपुष्पः सीधुगन्धः स्थिरपुष्पक इत्यपि ॥२४६॥
सुरभिर्भ्रमरानन्दो मद्यामोदश्च[2] शारदी ।
करकः केसरो धन्वी [3]मन्दमन्दनो गूढपुष्पकः ॥२४७॥
योषास्यमधुरोऽपि स्याद्वीरपुष्पोहलश्च सः ।
खरपत्रा तु शेफाली शारदी पुष्पवर्षिणी ॥२४८॥
केतकी तीक्ष्णपुष्पी स्याद्विफला धूलिपुष्पिका ।
स्यान्मेध्या कण्टकदला शिवद्विष्टा नृपप्रिया ॥२४९॥
स्थिरगन्धा दीर्घपत्रा क्रकचा गन्धपुष्पिका ।
स्यादिन्दु[4]कलिकाथान्या कनकप्रसवा च सा ॥२५०॥
हैमी कनकपुष्पात्र कामखड्गदला पुनः ।
विष्टारुहा[5] छत्ररुहा सुवर्णादपि केतकी । ॥२५१॥
सिन्दूरवीरयोः पुष्पा सुमना तु सुरप्रिया ।
संध्यापुष्पा राजपुष्पा[6] मनोज्ञा तिलभाविनी ॥२५२॥

---

१ गन्धस्तु B २ मादश्च kC ३ मदनो B ४ द्रन्द्र B ५ क्लिष्ट B ६ मनोज्ञ B

केतकी मालती जाती गन्धा सुदृढयोरपि ।
जनेष्टा सुकुमाराथ मुद्गरो विटवल्लभः ॥२५३॥
गन्धसारः[१] सक्तपर्णः कर्दमी वृत्तपुष्पकः ।
अतिगन्धो गन्धराजो जनष्टो भृङ्गवल्लभः ॥२५४॥
गेयप्रियः[२] सुवृत्ता तु सुमनाः[३] शिववल्लभा ।
सुशीता शतपत्री च सौरभ्याख्या[४] द्विधा च सा ॥२५५॥
श्वेतारुणैः सुकुसुमैर्भद्र[५]वल्ली तु मल्लिका ।
शीता भीरुप्रिया सौम्या गौरी च वनचन्द्रिका ॥२५६॥
नारीष्टा गिरिजामल्ली चन्द्रिका मोदिनी मुनिः ।
दमयन्ती[६] सिताथान्या[७] मदनी तु कुमारिका ॥२५७॥
मल्लिका वटपत्रा च सुगन्धा वृत्तमल्लिका ।
वृत्तपुष्पा च मुक्ताभा श्रीवल्ली सुलभप्रिया ॥२५८॥
वार्षिका[८] त्रिपुटा[९] व्यस्रा सुरूपा मुक्तबन्धका ।
सैवोक्ता षट्पदानन्दाऽनेकनिर्देशगोचरा ॥२५९॥
विशेषात्फलपुष्पैश्च दीर्घसूक्ष्मैः सुवर्तुलैः ।
कस्तूरीमल्लिका सा तु कस्तूरीवासना च या ॥२६०॥
[१०]प्रातर्विकस्वराप्येकाप्यन्या सायं विकस्वरा ।
सास्फोता वनमल्ल्याख्या वासन्ती मधुदूतिका ॥२६१॥

---

१ सप्तपर्णः kC २ गन्धप्रिया ३ सुमना ४ स्याद्द्विपा B ५ मंदवल्ली B ६ दमयन्ती k ७ मोदिनी B मदयन्तीत्यन्यत्र ८ वार्षिकी B ९ त्रिपुरा kB १० प्रातर्विकासाप्येकाथा B

प्रहसन्ती महाजाती मध्वाढ्या चाथ यूथिका ।
माधवी गणिकाम्बष्ठा[1] मोदिनी बालपुष्पिका ॥२६२॥
भृङ्गानन्दापि[2] गन्धाढ्या सुगन्धा तु मनोहरा ।
युवतीष्टा सुवर्णाह्वा शिखण्डी नागपुष्पिका ॥२६३॥
हरिता॰व्यक्तगन्धा च[3] पीतयूथ्यथ कुंजकः ।
महासहो वृत्तपुष्पः कण्टकाढ्योतिकेसरः ॥२६४॥
विकुलः संकुलः खर्वोथार्घाहों हरिवल्लभः ।
मुचुकुन्दश्च सुदलो बहुपुष्पः सुपुष्पकः ॥२६५॥
लक्ष्मणो रक्तप्रसवः करुणी ग्रीष्मपुष्प्यपि ।
रक्तपुष्पा सारुणी स्याच्चन्द्रवल्ली तु माधवी ॥२६६॥
भृङ्गप्रिया भद्रलता भूमिमण्डलभूषणा ।
सुगन्धा[4] गणिकारी तु काञ्चनी गन्धपुष्प्यपि ॥२६७॥
अलिमोदा च वासन्ती सास्यान्मदनमोदिनी ।
मुचुकुन्दस्तु कुन्दोऽपि महागन्धो[5] मनोहरः ॥२६८॥
मदनोऽपि सदातारमुक्ताभ्यः पुष्प इत्यपि ।
अट्टहासो मनोज्ञः स्याद्वनहासोथ शाम्भवः ॥२६९॥
शिवादापीड आह्लादो[6] मल्ल्यङ्कष्टश्च सुव्रतः ।
बकः पाशुपतश्चापि वसुकः क्रमपूरकः ॥२७०॥

---

१ मौदनी C २ थै B ३ पीतपुष्पोथ कंजकः B ४ सुगन्धी B ५ महा-कुन्दो KC ६ द kC

केविका कविका केवा भृङ्गारी नृपवल्लरी ।
भृङ्गमारी महागन्धा राजकन्यार्कवल्लभः[1] ॥२७१॥
बन्धूको बन्धुजीवोऽपि पुष्पो[2] रक्तोष्ठयोरपि ।
बन्धुश्च बन्धुकः पुंसि बन्धुरो बन्धुलो द्वयोः ॥२७२॥
मध्यंदिनस्त्रि[3]संधिस्तु[4] संधीवेली सदाफलः ।
स संधिकुसुमोऽथ स्याद्रक्तपुष्पा जवा जया ॥२७३॥
ओड्रका[5] प्रातिका सूर्यप्रिया चापि यवा पुनः ।
अस्यास्तु कुसुमे वज्रपुष्पं स्याद्भ्रमरी त्वपि[6] ॥२७४॥
भ्रमरारिर्मांसपुष्पी कुष्ठारिस्तरणी तु सा ।
[7] सहाकुमारी गंधाढ्या सुदला चारुकेसरा ॥२७५॥
बहुपत्रा[8] रामभृङ्गप्रियाप्यथ महासहा ।
महती राजतरुणी [9]सुपुष्पोप्यमिलातकः ॥२७६॥
सुवर्णपुष्पकोम्लातोऽथान्यो रक्तामिलातकः ।
प्रसवः स्यात् कुरवको रक्तात्सभसलोत्सवः[10] ॥२७७॥
मधूत्सवप्रसवोऽपि रामालिङ्गनकामुकः ।
सुभगो रामप्रसवः सपीतः किङ्किरातकः ॥२७८॥
कुरण्टकश्च फलकः पीताम्लानश्च पीतनः ।
कुसुमः स्यात्कुरवकः सादासी नीलपुष्पिका ॥२७९॥

---

१ भा B २ रक्तौवयोरपि B ३ सन्ध्य C ४ संध्या B ५ ओदूका B
६ त्वपि Ck ७ साहा B ८ पत्रो B ९ स Ck १० त्सु B

नीलाम्लानश्छादकः स्याद्बाला चार्त्तगला च सा ।
झिण्टी कण्ट[1] कुरण्टः स्यात्पीता[2] सैहचरी च सा॥२८०॥

सैव शोणा कुरवकः कण्टकिन्यथ रक्तका ।
उष्ट्रभाण्डी[3] रक्तवर्णलोहितेभ्यश्च पुष्पिका ॥२८१॥

अस्त्रियां तगरो [4]वक्रो विनम्रः[5] कुञ्चितो नतः ।
स्याच्छदो[6] नहुषो[7] दण्डहर्षो हर्षण इत्यपि ॥२८२॥

कालानुसारकं राजहर्षणं पार्थिवं पुनः ।
पिण्डीतगरकं चैत्रं दीनं जिह्मं मुनिस्तु ना ॥२८३॥

गन्धोत्कटोऽपि दमनो दान्तो जटिलदण्डिनौ ।
पाण्डुरागो[8] ब्रह्मजटा विनीतो देवशेखरः ॥२८४॥

पत्री पत्रविवेकोऽपि[9] पुण्डरीकोऽपि पत्रकः ।
[10]तद्वत्तपस्विस्थूलाभ्यां वन्ये तु मदनार्थकः ॥२८५॥

वनादिनामपर्यायोप्यथ त्रिदशमञ्जरी ।
तुलसी सुभगा तीव्रा पावनी विष्णुवल्लभा ॥२८६॥

सुरेज्या सुरसा श्यामा कायस्था सुरदुन्दुभिः ।
[11]बहुना मञ्जरी पत्रा भूतघ्नी स्थूलपत्र्यपि[12] ॥२८७॥

---

१ कण्टः B २ सहचरी B ३ उरभ्राण्डी B ४ रक्तो B ५ विनम्रः Ck
६ स्याशब्दो B ७ दन्त B ८ राज्ञो B ९ पत्रकःस्याच्च—⌣—kC
१० स्याज्चB—kC ११ बहुलोB १२ मूल्यपि B

गौरी स्याद्द्विविधा[1] कृष्णासिताभेदात्फणिज्जकः[2] ।
खरपत्रो मरुवको गन्धपत्रः समीरणः ॥२८८॥
बहुवीर्यः शीतलकः सुराह्वो मरिचोऽपि च ।
जम्बी[3]रः प्रस्थकुसुमो द्विविधोयमथार्जके ॥२८९॥
क्षुद्रात्पर्णश्च तुलसी कुठेरोऽपि कडिञ्जरः ।
[4]पुखार्जकश्चोग्रगन्धः सुमुखस्तु सितार्जके ॥२९०॥
पत्रो वटपुटाभ्यां स्याद्वैकुण्ठो भूरिगन्धकः ।
कृष्णार्जकः कालुमालो मालूकः कृष्णमालुकः ॥२९१॥
दोषक्लेशी विषघ्नः स्यात्सुगन्धिर्वनवर्वरी ।
प्रसन्नकः सूक्ष्मपत्रो निद्रालुः [5]शोफहार्यपि ॥२९२॥
सुमुखो गङ्गपत्री तु गङ्गापत्री सुरङ्गका ।
[6]पाची मरकतः पत्री मल्ला[7] हरितपत्रिका ॥२९३॥
अरिष्टा सुरभिश्चाथ बालकोऽस्त्री तु शीतलम्[8] ।
पर्यायः [9]केशजलयोर्ह्रीवेरं[10] हिरिवेरकम् ॥२९४॥
वरहिष्ठं च बर्हिष्ठमुदीच्यमपि कथ्यते ।
स्यात्तिक्तं वारिपर्यायं वर्वरः[11] सुमुखः पुनः ॥२९५॥

---

१ सा द्विविधा kC २ ःपणिज्जकः kC ३ रप्रस्थ B ४ पुंखा B ५ शोक B ६ नाची B ७ मल्ली B ८ शीतलः B. ९ कुश B १० ह्रीरेरं B ११ वर्वरं-सुमुखं B

[1]गरघ्नो गन्धपत्रः स्यात्पूतगन्धः[2] सुरार्हकः ।
कृष्णवर्वरकः स्वास्यः[3] सुपर्णं देवपर्णकम् ॥२९६॥
स्याद्देवार्हं चीरमा च सूक्ष्मगन्धेभ्य इत्यपि ।
पर्णं चाथ महानन्दा गन्धाढ्या रामशीतला ॥२९७॥

रामाथ शाल्मली चापि स्त्रियां शाल्मलिरित्यपि ।
[4]चिरजीवी पिच्छलः[5] स्याच्छाल्मलिन्यपि पूरणी २९८
रक्तोत्पलस्तूलवृक्षो रम्यपुष्पः कटुद्रुमः[6] ।
मोतोप्यथ श्रवः शृङ्गो रसो मोचा ततः पुनः ॥२९९॥

अपि [7]पिच्छलसारः स्याल्मलीवेष्ट इत्ययम् ।
तत्तूलइन्द्रवाताभ्यां तूलं क्लीबे मरुद्ध्वजम्[8] ॥३००॥
ग्रीष्महासं वंशकफं वृद्धसूत्रकमित्यपि[9] ।
रोहीतको रोहितको रोही प्लीहनिबर्हणः ॥३०१॥

सदाप्रसूनो दाडिम्बपुष्पः स्यात्कूट[10]शाल्मली ।
कुशाल्मली बृहद्वल्कः स्याद्विरेचन इत्ययम् ॥३०२॥
सितपुष्पोप्येकवीरो महावीरः सुवीरकः ।
रोहितेयो रौहतः[11] स्यात्तद्वद्रौहित इत्यपि ॥३०३॥

---

१ गरघ्नो k C २ पूतेगंन्धः B ३ सस्यात् B ४ स्थिर B ५ पिच्छिलः B
६ पुष्पकटुद्रुमः kC ७ पिच्छिल B ८ जः B ९ मित्यथ B १० स्कुट B
११ रौहिषः C

एकादिवीरपर्यायः स्यादथो रक्तकेसरः ।
पारिभद्रो निम्बतरुर्मन्दारः पारिजातकः ॥३०४॥
कृमिघ्नो रक्तकुसुमो बहुपुष्पोऽथ कण्टकी ।
खदिरो रक्तसारश्च खाद्यः पत्री क्षितिः स्त्रियाम् ॥३०५॥
वक्राङ्गो बालतनयो मुशल्योऽपि मुसल्यवत् ।
गायत्र्यपि च पुंसि स्यात्सारद्रुर्दन्तधावनः ॥३०६॥
बालपत्रोऽपि कुष्ठारिर्मेध्योऽथ कदरोऽपरः[1] ।
श्वेतसारः कार्मुकः स्यात्सोमसारः पथिद्रुमः ॥३०७॥
सोमवल्को नेमिवृक्षः कुब्जकण्टक इत्यपि ।
रक्तसारः सुसारः स्याद्रक्ते विट्खदिरस्तु सः ॥३०८॥
मरुजः सारखदिरः कालस्कन्धोऽपि गोरटः[2] ।
बहुसारः पत्रतरुरम्भोजा[3]रिररिः स्त्रियाम् ॥३०९॥
इरिमो वीरमेदश्चाप्यसिमेदश्च मेदकः ।
दाना संदानिका चापि सैवोक्ता खदिरच्छटा ॥३१०॥
शमी तु केशदमनी शान्ता तुङ्गा शुभंकरी ।
हविर्गन्धा[4] शिवेशाना सुरभिः पापनाशनी ॥३११॥
मङ्गलापि तपस्वीष्टा[5] मेध्या दुरितपावनी ।
सुभद्रा शङ्कुकलिका भद्रासक्तु[6]फली शिवा ॥३१२॥

१ पमः B २ मोदटः B ३ ज्येरि B ४ न्धो B ५ मचा B ६ फला B

[1]सक्तुफलापि विजया शान्ता चाप्यपराजिता ।
शुभाप्यथ शमीरः स्याच्छम्यारु[2]रपि पुंस्युभौ ॥३१३॥

अथ वर्बुरकर्बूरौ कण्टालुर्दीर्घकण्टकः ।
पंक्तिबीजो गुग्गुलाक्तो गोशृङ्गस्तीक्ष्णकण्टकः ॥३१४॥

कफान्तकोऽजभद्रःस्याद् दृढबीजोप्यथापरः ।
शुकशाकः स्थूलकण्टश्छत्राको जालवर्बुरः[3] ॥३१५॥

रन्धकण्टस्तनुच्छायो थारिमेदो रिमेदकः ।
गोधास्कन्धोपीरिमेदः पूतिमेदोऽहिमारकः ॥३१६॥

[4]पलाण्डुस्तु कटुः पञ्चवर्द्धनः पञ्चरक्तकः ।
हस्ताञ्जनविधौ शस्तो जीर्णज्वरहरश्च सः ॥३१७॥

पञ्चकश्चाथ शूलारिर्गौरवो विषकण्टकः ।
तीक्ष्णकण्टः क्रोष्टुफलोऽतिगन्धस्तापसद्रुमः ॥३१८॥

पूतिगन्धस्तैलफलस्तनुपत्रोऽनिलान्तकः ।
पुंस्त्रियोरिङ्गुदीपुंसीङ्गुदपत्रो मुनिद्रुमः ॥३१९॥

ग्रन्थिलः क्रकरो गूढपत्रः स्यात्करिरः पुनः ।
करीरोऽपि च कारीरो[5] निःपत्रस्तीक्ष्णकण्टकः ॥३२०॥

सुधा स्नुही स्नुक्स्त्रियः स्युः क्षीरी निस्त्रिंशपत्रकः ।
शाखापत्रो महावृक्षः सेहुण्डो वज्रकण्टकः ॥३२१॥

---

१ सक्तूB २ च्छम्बारुB ३ वर्वरःkC ४ पकाण्डुस्तु कुटुःCk ५ निपत्रB

बहुशाखः क्षीरकाण्डो गण्डीरो[1] दण्डवृक्षकः ।
हुण्डो[2] वनारिर्नेत्रारिर्भद्रो व्याघ्रनखः पुनः ॥३२२॥
वज्री समन्तदुग्धान्या स्नुहा वज्रा गुडा गुला ।
स्नुहिः सिहुण्डो वज्रद्रुर्धारापूर्वा स्नुही पुवा[3] ॥३२३॥
त्रिधाराप्यथ कन्थारी कन्थरी तीक्ष्णकण्टका ।
तीक्ष्णगन्धा दुःप्रवेशा दुर्द्धर्षा [4]कन्थकाप्यथ ॥३२४॥
रुवुर्वातारिस्तरुणश्चित्रो गन्धर्वहस्तकः ।
व्याघ्रपुच्छो वर्द्धमानः श्वेतैरण्डोऽप[5]मण्डकः ॥३२५॥
पञ्चाङ्गुलो दीर्घदण्डे[6]रुवूकौ रुवुको वकः[7] ।
वर्द्धमानस्तत्र रक्ते स्याद्‍व्याघ्रो हस्तिकर्णकः ॥३२६॥
उरुवुश्चोरुवूकोऽपि चञ्चुरुत्तानपर्णकः ।
[8]करप[9]ः पञ्चनखस्तलुः[9] स्निग्धोऽपि मस्करः ॥३२७॥
एरण्डो मण्ड आमण्डो प्यमण्डश्च व्यडम्बनः ।
व्यडम्बकश्चित्रचञ्चुरादण्डस्त्रिपुरः स च ॥ ३२८॥
ह्रस्वैरण्डश्चित्रदण्डः[10] स्थूलदण्डोऽपरोप्यथ ।
घोटा बदरिका घोटी गोलिका शत्रुकण्टकः ॥३२९॥
कण्टकी चतुरङ्गाह्वाप्यथ वल्लीकरञ्जकः ।
दुःस्पर्शोऽपि कुबेराक्षः स्यात्कण्टफल[11] इत्यथ ॥३३०॥

---

१ द्रुद्रु B २ कुण्डो B ३ युवा Bk ४ कथका B ५ थ B ६ दण्डो B ७ वुंकः B
८ वर B ९ खलः B १० वीजः B ११ इत्यपि B

कारी[१] कार्यापि गिरिजाप्यति[२]पत्र्यपरा पुनः ।
कण्टकार्यथ राटस्तु [३]तर्दनो वस्तिरोधनः ॥३३१॥
ग्रन्थिधारा [४]गोलघटाफलः[५] पिण्डीतकः पुनः ।
तगरः शल्यकैडर्यो[६] मदनः करहाटकः ॥३३२॥
[७]कण्डालोऽपि विषान्मुष्टिफलो हर्षोऽप्यथापरः ।
महापिण्डीतकः स्निग्धपिण्डीतकवराहकौ ॥३३३॥
कटुपर्णोऽथ कृच्छ्रारिः क्षुधाकुशल इत्यपि ।
[८]पीलवन्तरो वीरवृक्षो दीर्घमूलोऽथ तारटी ॥३३४॥
[९]खर्बूरा तरटी तीव्रा रक्तबीजाथ शीतला ।
श्रीवल्ली शिववल्ली च कण्टवल्ली दुरारुहा ॥३३५॥
अम्ला कटुफला स्वच्छा सैवाप्यन्या निकुञ्चिका ।
स्यादम्लकुंचिका कुञ्ज[१०]वल्ल्याथ नृपप्रियः ॥३३६॥
रामवर्णोऽ[११]पर्वदण्डो दीर्घोप्यथ नदीभवः ।
[१२]यावनालोद्भवत्वक् स्यात्खरपत्रो नदी स च ॥३३७॥
शरो बाण इषुः काण्ड[१३] उत्कटः सायकः क्षुरः ।
इक्षुरिक्षुरिकापत्रो विशिखोऽथ महाशरः ॥३३८॥

---

१ कारिकार्या B कारिकान्या C २ कृति B ३ छर्दनो B ४ गौल B ५ फल ६ कैंडर्यो Ck ७ काण्डालो B ८ विल्व Ck पिल्व C विल्पा B ९ खजूरा B १० वल्व (ल्ल्य) प्यथ B ११ वर्णो KC १२ यावनालेत्यर्द्धं केवल B पुस्तके दृश्यते १३ इत्कट इत्यन्यत्र ।

बहुमूलः स्थूलशरो दीर्घमूलोऽथ रञ्जनः ।
[1] मुञ्जो मुञ्जतृणाह्वः स्याद्ब्राह्मणस्ते[2]जनाह्वयः ३३९
वानीरको मुञ्जनको [3]दूरमूलो धृषत्तृणः ।
बहुप्रजो दृढमूलः शत्रुभङ्गोऽथ काशकः ॥३४०॥
काण्डेक्षुर्वायसेक्षुः स्यादिक्षु[4]काण्डोऽपि चेक्षुरः[5] ।
कासेन्दुरिक्ष्वरिर्दर्भपत्रः शारद इत्यपि ॥३४१॥
नादेयो लेखिनीकाण्डः कच्छालंकारकः पुनः ।
सितपुष्पोऽप्यथाश्वालो नीरजः शर इत्यपि ॥३४२॥
[6]गुण्डा शिरिशिरा श्वेता स्यात्तदर्थस्तु वज्रकः ।
पूतो ह्रस्वः[7] कुशो ब्रह्मपवित्रो यज्ञभूषणः ॥३४३॥
स्यात्सूच्यग्रः पुण्यतृणस्तीक्ष्णो[8] याज्ञिकपत्रकः ।
अन्यस्तु शरपत्रः स्यात् हरिद्दर्भः[9] पृथुच्छदः ॥३४४॥
दीर्घपत्रः सूक्ष्मपत्रः पवित्रं चाथ वल्वजा[10]।
अस्त्रियां[11]हठपत्री स्यात्तृणेक्षुश्च तृणत्वचः ॥३४५॥
मौञ्जीपत्रो दृढतृणः पानीयाख्या दृढक्षुरा[12] ।
कत्तृणं[13]रोहिषतृणं पूतीकं यवदग्धकम् ॥३४६॥

---

१ मुञ्जाB २ दूर्माह्वो रामजनाहूयःB ३ ह्रस्वमूलोदृषत्तृणःB ४ दिक्षुः काण्डोkC ५ क्षुरःB ६ तुडशारिशिरा श्वेतदर्भस्तु वज्रकः पुनःB ७ ह्रस्वकुशोB ८ स्तीक्ष्णी यज्ञीयkC ९ हरिर्दर्भःB १० वल्वजाःB ११ हटB १२ क्षुरःB १३ रौहिषB

श्यामकं चामकं [1]चाम्यं दृढकाण्डं दृढच्छदम् ।
द्राघिष्ठं दीर्घतालं च तिक्तसारं तु कुत्सितम् ॥३४७॥
नलो नालो नडः कुक्षिरन्ध्रकः कीचकः पुनः ।
वंशान्तरोपि धमनः[2] शून्यमध्यो विभीषणः ॥३४८॥
छिद्रांशोऽपि मृदोर्वंशात् पत्रः स्यान्नालवंशकः ।
अपि पोटगलो वन्ये[3] देवनालो महानडः[4] ॥३४९॥
नलोत्तमः[5] स्थूलनडः स्थूलदण्डः सुनालकः ।
सुरद्रुमोऽथ हरिता नीलदूर्वा च शाम्भवी ॥३५०॥
श्यामा शीता शतग्रन्थिर्मङ्गला सुभगा जया ।
शतमूला[6] तृष्णवल्ली पूतिहन्त्री महौषधी ॥३५१॥
अमृता विजया पूता [7]शिवेष्टा च शिताप्यथ ।
श्वेतदूर्वा सिता चण्डा गोलोमी सुरवल्लभा ॥३५२॥
[8] दुर्मरा भार्गवी भद्राऽनन्ता दिव्या सितच्छदा ।
गौरा विघ्ने[9]शानकान्ताऽमृता स्वच्छेक्षुपर्विका ॥३५३॥
स्यात्प्रचण्डा श्वेतकाण्डा वीर्या काण्डा सहस्रतः ।
मालावल्ल्यतिग्रन्थिभ्यो दूर्वा स्याद्ग्रन्थिमूलिका ॥३५४
ग्रन्थिला वल्लिनी मूलग्रन्थिः स्यात्पर्ववल्ल्यपि ।
रोहत्पर्वाथ[10] गण्डाली गण्डदूर्वा च वारुणी ॥३५५॥

---

१ वाम्यंB २ वमनःB ३ वंन्योB ४ नलःB ५ नडोत्तमः ६ मूलीB
७ शिवेष्टेB ८ दुर्भराB ९ विघेB १० चB

मत्स्याक्षी श्यामलग्रन्थिर्ग्रन्थिला ग्रन्थिपर्णिका ।
सूचीपत्रा श्यामकाण्डा [1]कलायाप्यथ कुन्दुरुः ॥३५६॥
कन्दुरुर्दीर्घपत्रश्च रसालोऽपि खरच्छदः ।
सुतृणः[2] क्षेत्रसंभूता भिण्टी स्यान्मृगवल्लभः ॥३५७॥
[3]भूतृणो रोहितो भूतिर्भूतीकश्च कुटुम्बकः ।
मालातृणः श्रमालंवा गुच्छलस्त्वति[4]गन्धकः ॥३५८॥
अतिच्छत्रो गुह्यबीजः सुगन्धिः पुंस्त्वविग्रहः ।
व्यङ्गरोधश्च[5] बधिरोप्यन्यो भूतृण इत्यपि ॥३५९॥
सुरसः सुरभिग्रन्थिः स च स्यान्मुखवासनः ।
सुगन्धिरूषरो[6] भूरिपत्रोऽपि च तृणोत्तमः ॥३६०॥
इक्षुदर्भा[7] सुदर्भा चाप्यश्वालुस्तृणपत्रिका ।
गोमूत्रिका रक्ततृणा क्षेत्रजा कृष्णभूमिजा ॥३६१॥
शिल्पिका शिल्पिनी शीता क्षेत्रज्ञा[8]च मृदुच्छदा ।
निश्रेणिका श्रेणिका च नीरसा वनवल्लरी ॥३६२॥
अस्त्री शष्पं बालतृणं यवसं तृणमर्जुनम् ।
तृणानां संहतिस्तृण्या नड्या तु नडसंहतिः ॥३६३॥
गर्भोटिका तु जठरी[9] सुनीला च जलाश्रया ।
मृदुग्रन्थिस्तु मञ्जुरः[10] सुतृणो मृदुपत्रकः ॥३६४॥

---

१ कलापाप्यथ तुम्बुरुः २ सुतृणाः[K] ३ भूत्पूगो B ४ ह्रवेति मंचकः B ५ बधिरो-थान्यो[B] ६ रूखरो[B] ७ इक्षुदर्भा[B] ८ क्षेत्रजा[B] ९ जतुपी[B] १० मज्जुरः[B]

धेनुदुग्धप्रदश्चापि तृणाढ्यं तु मृगप्रियम् ।
पत्राढ्यं पर्वततृणं वंशपत्री तु जीरिका ॥३६५॥
जीर्णपत्र्यथ मन्थानो हरितो दृढमूलकः ।
पल्लीवाहो दीर्घतृणः सुपत्रस्ताम्रवर्णकः ॥३६६॥
अम्लकाण्डं पटुतृणं तृणाम्लं लवणात्तृणम् ।
कनिष्ठिकं[1] तु शूकाढ्यं शूकं शूकतृणार्थकम् ॥३६७॥
पण्यगन्धोऽस्त्रियां पत्रा कङ्गुणी[2] पण्यदा च सा ।
दीर्घकाण्डः काण्डगुण्डच्छत्रगुंछस्त्रिकोणकः ॥३६८॥
नीलपत्रस्त्रिधारः स्याद्वृत्तगुण्डो जलाश्रयः ।
गुण्डोऽथ गुण्डकन्दः स्यात्स्त्रियां पुंसि कसेरुकः ॥३६९॥
इक्षुमुस्ता सूकरेष्टा सुगन्धा गन्धकन्दला ।
चर्णिका दुग्धदा गोल्या[3] सुनीला क्षेत्रजा हिमा ॥३७०॥
गुण्डासिनी तु गुण्डाला चिपिटा गुंछमूलिका ।
तृणपर्णी[4] जलावासा पृथुला नवविष्टरा ॥३७१॥
जलस्रवा[5] मृदुलता पिच्छिला महिषी प्रिया ।
अशाखा शूलपत्री च स्याच्छली धूम्रमूलिका ॥३७२॥
पिरिपेल्लं[6] प्लवं वन्यं शतपुष्पं[7] पुटंनटम् ।
गोनर्दं गोपुटं दासपुटं[8] स्याज्जीर्णबुध्नकम् ॥३७३॥

---

१ ष्ठकं B २ कङ्गुनी B ३ सुबीजा B ४ पर्णस्तला B ५ श्रवा B ६ परिपिल्लं
७ कुटं B ८ दासपुरमित्यन्यत्र ।

[1]हिङ्गुलस्तु नदीकान्तो जलजो दीर्घपत्रकः ।
नदीजो निचुलो रक्तः कामुकश्चाथ चण्डिका ॥३७४॥
छिन्नोद्भवाऽमृतलता गडूची[2] मधुपर्णिका ।
ज्वरारिरमरा श्यामा विशल्यापि रसायनी ॥३७५॥
वत्सादनी[3] कुण्डलिनी वयस्थाऽमृतसंभवा ।
भिषक्प्रिया सुरकृता[4] जावन्ती सोमवल्ल्यपि ॥३७६॥
नागपुत्र्यथ कन्दोत्थाऽमृता पिण्डगडूचिका ।
बहुछिन्ना बहुरुहा पिण्डालुः कन्दरोहिणी ॥३७७॥
मूर्वाऽमर्यमरा दिव्यलता तिक्ता मधूलिका ।
मधुश्रेणी भिन्नदशा त्रिपर्णी, मधुमत्यपि ॥३७८॥
देवी मधुमती देवश्रेणी सैव सुखोषिता ।
पृथक्पर्णी च गोकर्णी लघुपर्ण्यपि मोरटा ॥३७९॥
तेजस्विनी मधुदला दहना गोपवल्लिका ।
पीलुपर्णी स्निग्धपर्णी रक्तला च मधुस्रवा[5] ॥३८०॥
ज्वलिन्यथ[6] पटोलः स्याज्ज्वलनः कर्कशच्छदः ।
राजनामा कटुफलः पाण्डुः पाण्डुफलश्च सः ॥३८१॥
पञ्चराजीफलो नागफलोऽमृतफलश्च सः ।
कुष्ठकण्ड्वो[7]ररिर्बीजगर्भः स्यात्कासमर्दनः ॥३८२॥

---

१ हिंज (ज) लस्तु[B] २ गुडूची[B] ३ दिनी[B] ४ कृतो[B] ५ श्रवा[B] ६ ज्वलि-न्यथ[B] ७ कन्दो[kC]

ज्योत्स्नाथ मधुरा काकी काकोली वायसूलिका[1] ।
धाङ्क्षोली मेदुरा धीरा वीरा क्षीरापि शुक्लका ॥३८३॥
स्वादुमांसी वयस्था तु विषाणी च पयस्विनी ।
काकोली मधुरा शुक्ला क्षीरशुक्लापि जीवनः ॥३८४॥
माषपर्णी तु [2]काम्भोजी कृष्णदन्ता[3] महासहा ।
[4]माषा हंसार्द्रमांसेभ्यो मङ्गल्या हयपुच्छ्यपि ॥३८५॥
वज्रमूली शालिपर्णी कल्याणी पाण्डुरा घना[5] ।
आत्मोद्भवा बहुफली[6] स्वयंभूश्च विसारिणी ॥३८६॥
सुलभा मुद्गपर्णी तु शिम्बी मार्जारगन्धिका ।
शूर्पपर्णी क्षुद्रसहा काकमुद्गा वनोद्भवा ॥३८७॥
[7]कुरङ्गिका काशिलाथ काञ्जिका शशिबिम्बिका[8] ।
जीवन्ती जीवनी जीवा जीवनीयाऽपि जीवना ॥३८८॥
जीवपुष्टा जीवदात्री जीवभद्रा सुपुङ्गला[9] ॥
शाकश्रेष्ठा च शृङ्गाटी भद्रा माङ्गल्यदा च सा ॥३८९॥
क्षुद्रजीवाथ[10] मधुरा जीवपुष्टा यशस्करी ।
प्रियंकरी पुत्रभद्रा बृहज्जीवन्तिकाप्यथ ॥३९०॥
सुजीवन्ती स्वर्णजीवी[11] स्वर्णपर्णी हिमाश्रया ।
स्याद्धेमा हेमजीवन्ती तृणग्रन्थिः सुपर्ण्यथ ॥३९१॥

---

१ सोखिका B २ काम्बोजीत्यन्यत्र ३ वृन्ता B ४ मायेति पाठः सर्वत्र ५ यना B ६ बहुफला B ७ कुरङ्गिकः B ८ शिम्बिका B ९ सुमङ्गला B १० बीजा B ११ बीजा B

शिववल्ली तु शिवजा लिङ्गिनी शिववल्लिका ।
बहुपुत्री[1] चित्रफला[2] चण्डाऽयस्तम्भिनीश्वरी[3] ॥३९२॥
लैङ्गी स्वयंभूश्चण्डाली कृतच्छिद्रा च[4] जालिनी ।
मृदङ्ग[5]वल्लिनी क्ष्वेडा सैवोक्ता कृतवेधना ॥३९३॥
सैषा सुतिक्तघण्टाली कोशातक्यथ मर्कटी ।
शूकशिम्बिः शूकशिम्बी शूकशिम्बा च वानरी[6] ॥३९४॥
शूकसिम्बिः शूकसिम्बी शूकसिम्बा जडाऽजहा ।
शुकशिम्बिः शुकशिम्बी शुकशिम्बा ततः पुनः ॥३९५॥
शुकसिम्बिः शुकसिम्बी शुकसिम्बा पुनश्च सा ।
शूकपिण्डिः शूकपिण्डी शूकपिण्डा ततः परा ॥३९६॥
शुकपिण्डिः शुकपिण्डी शुकपिण्डा च सा भवेत् ।
आत्मगुप्ता कपेः कच्छूः कच्छुः स्याद्दुरभिग्रहा ॥३९७॥
कपिरोमलता गुप्ता दुःस्पर्शा कच्छुराऽजया ।
प्रावृषेण्या च सैव स्याच्छुन्दरी[7] गुरुरार्षभी ॥३९८॥
लाङ्गली कुण्डली चण्डी[8] केशरोमा महर्षभी ।
तीक्ष्णी वराही रोमालुः स्याच्छिम्बी वनसूकरी ॥३९९॥
रोमवल्ली तिक्तबीजा कटुतुम्बी बृहत्फला ।
राजपुत्री कटुफला तिक्तबीजा च तुम्ब्यथ ॥४००॥

---

१ पत्रीB २ चण्डीB ३ श्वराB . ४ तुOk ५ वल्लिनीOk ६ तत्पराB
७ स्कन्द(ण्ड)री गुरुरार्षभाB ८ चण्डाB

स्यादाकाशार्थवल्ल्यर्था दुःस्पर्शाऽथ गरा गरी ।
वेणीरुहा कोशफला घोरा रोमशपत्रिका ॥४०१॥
कदम्बा कर्कटी देवदाली स्यात्सारमूषिका ।
दाली तुरङ्गी तर्कारी विषघ्नी वृत्तकोशका ॥४०२॥
वन्ध्यकर्कोटकी वन्ध्या[1] मनोज्ञा कन्दवल्लरी ।
पन्था[2] दिव्या पत्रदात्री भूतहन्त्रीश्वरी च सा ॥४०३॥
सुगन्धा सर्पदमनी श्रीकन्दा च कुमारिका ।
विषकण्टकिनी तिक्ता तिक्ततुण्ड्यथ शंवरी[3] ॥४०४॥
चित्रा द्रवन्ती कृशिरा सुकर्णी बहुकर्णिका ।
न्यग्रोधिकाऽऽखुकर्णी स्याच्चण्डा भूमिचरी वृषा ॥४०५॥
ऐन्द्रेन्द्रवारुण्यरुणा विषघ्नी कणकर्णिका ।
मृगादिनी क्षुद्ररुहा हेमपुष्पोन्द्र[4]चिर्भिटा ॥४०६॥
सूर्याऽमरा पीतपुष्पी सुपर्णी चेन्द्रवल्लरी ।
रक्तेर्वारुर्विषलता वारुणी बालकप्रिया ॥४०७॥
गवाक्षी सुफला माता तारिका विषवल्लरी ।
वृषलाक्षी क्षुद्रफला विषघ्नी[5] चामृताप्यथ ॥४०८॥
महेन्द्रवारुणी चित्रवल्ली सौम्या महाफला ।
विशाला त्रपुसा दीर्घवल्ली स्यात्त्रपुसीत्यपि ॥४०९॥

१ वन्ध्यCk २ यथाB ३ शंबरीB ४ चिर्भिटीB ५ चामिषाB

यवतिक्ता महातिक्ता दृढपादा च[1] सर्पिणी ।
नाकुली नेत्रमीनापि शंखिनी पत्रतंडुली ॥४१०॥
तिक्ता माहेश्वरी यावी शाखिन्यथ [2]घनेश्वरी ।
रौद्री जटा[3] रुद्रजटा सुगन्धा सुहवा पुनः ॥४११॥
[4]रुद्रा सौम्या रुद्रलता महाराजजटा च सा ।
पत्रवल्ली जटावल्ली रुद्राणी नेत्रपुष्करा ॥४१२॥
सुगन्धपत्रा सुरभिः सुभद्रा च[5] सुपिङ्गला ।
ज्योतिष्मती स्वर्णलता सरस्वत्यनलप्रभा ॥४१३॥
दुर्वरा कटभी ज्योतिर्लता दीप्ता मतिप्रदा ।
मेध्याऽमृताथ लवणा काकाण्डी वायसादिनी[6] ॥४१४॥
तेजोवती बहुरसा कङ्गुणी कनकप्रभा ।
सुवर्णनकुली तीक्ष्णसुवेगा वायसीति च ॥४१५॥
तेजस्विनी शैलसुता सुतैला च यशस्विनी ।
अग्निदीप्ता सुरफला सौम्या लवणकिंशुका ॥४१६॥
श्रीलता[7] गीर्लता तीव्राग्निगर्भा चाग्नितः फला ।
पारावतपदी[8] ब्राह्मी मेध्या मेधाविनीत्यपि ॥४१७॥
पीता धीरा पीततैला सितपुष्पी तु गर्दभी ।
दधिपुष्पाऽद्रिकर्णी च कटभी विषहन्त्र्यपि ॥४१८॥

---

१ ऽवसर्पिणीB २ धनेB ३ जटीB ४ रुद्रB ५ ऽथB ६ दनीB
७ श्रीलंताkB ८ पण्या नखपदीB

श्वेताऽपराजिता श्वेता नीलपुष्पी[१] गवादिनी ।
महानीला नीलगिरि[२] कर्णी स्यान्नीलसंध्यका[३] ॥४१९॥
व्यक्तगन्धा मोरटस्तु कर्णपुष्पो मधुस्रवः ।
धनमूलः पीलुपत्रः पुरुषः क्षीरमोरटः ॥४२०॥
दीर्घमूलोप्यथ द्रोणी करम्भा पुष्पमञ्जरी ।
इन्दीवरा युग्मफला दीर्घवृन्तोत्तमारणी[४] ॥४२१॥
नलिका वृत्तवल्ली तु[५] वस्तमेषान्त्रिका च सा ।
वृषगन्धाथ यज्ञार्हा यज्ञश्रेष्ठा धनुर्लता ॥४२२॥
स्त्री सोमयज्ञगुल्मेभ्यो वल्ली सैव द्विजप्रिया ।
सोमक्षीरा महागुल्मा[६] सोमपर्याय इत्ययम् ॥४२३॥
पुंसि स्यात्सप्रतिपदमारभ्यापूर्णमासकम् ।
प्रत्यहं यत्र[७] पुष्पाणामुदयस्तत्क्षयः पुनः ॥४२४॥
आदर्शमथ तद्भेदा अंशुमान्रजतप्रभः[८] ।
कल्याणकारकन्दोन्य आज्यगन्धश्च कन्दवान् ॥४२५॥
चन्द्रमाः कनकाभासः सर्वदा स जलेचरः ।
चित्रितः पाण्डुरश्चापि[९] सर्पनिर्मोकसंनिभौ ॥४२६॥
वृक्षाग्रालम्बितावेतौ मुञ्ज[१०]वांल्लशुनच्छदः ।
तार्क्ष्याहितोऽपि श्वेताक्षो गायत्रस्त्रैष्टुभः पुनः ॥४२७॥

---

१ पुष्पाB २ टिरिB ३ सन्धिकाB ४ वृन्ता च सारणीB ५ वस्तुB ६ गुल्मB ७ पत्रB ८ नञ्जतः C ९ पB १० मूजवानित्यन्यत्र ।

स्यात्पाङ्क्तः[1] शाक्करोऽथ स्यात्सौम्या महिषवल्लरी ।
प्रतिसोमा पत्रवल्ली काण्डशाखान्त्रवल्लिका ॥४२८॥
अन्या वत्सादनी सोमवल्ली विक्रान्तमेचका ।
पातालगारुडी तार्क्षी दीर्घकाण्डा महाबला ॥४२९॥
दीर्घवल्ली दृढलता वन्या गोपालकर्कटी ।
क्षुद्रेर्वारुर्वायसी तु काकाक्षी काकनासिका ॥४३०॥
काकप्राणा काकतुण्डी सुरङ्गी च सुनासिका ।
काकाक्षा[2] तस्करस्नायुरथ काकादनी पुनः ॥४३१॥
वक्रशल्या काकपीलुर्दुर्मोहा काकशिम्बिका ।
रक्तला वायसी काकरञ्जी[3] स्याद्वायसादनी ॥४३२॥
रक्ता तु रक्तिका गुञ्जा शिखण्डी भिल्लभूषणा ।
सौम्या चूडामणिः कृष्णचूडिका कृष्णलाऽरुणा ॥४३३॥
शीतपाक्युच्चटाथान्या श्वेतगुञ्जार्थका च सा ।
अम्भोज्य[4]जान्त्री त्वावेगी गुञ्जका दीर्घवालुकः ॥४३४॥
वृद्धः कोटरपुष्पोथ द्वितीयो जीर्णदारुकः ।
सुपुष्पिका जीर्णफली सूक्ष्मपत्राऽजराप्यथ ॥४३५॥
कैवर्त्तिका सुरङ्गा च लतावल्ली द्रुमारुहा ।
रङ्गिणी वस्त्ररङ्गा च सुभगाथ[5] सुलोमका ॥४३६॥

---

१ वात्याकः B २ काकाक्षीत्याद्यर्धद्वयं C पुस्तके नास्ति ३ काद्दयेकमर्धं kC पुस्तकयोर्नास्ति ४ आम्भोज्य B ५ च B

तालो तमाली ताम्रा च सूक्ष्मवल्ली पटुस्तु सः ।
नासासंवेदनः काण्डकटुः काण्डीर इत्यपि ॥४३७॥
करवल्ला तोयवल्ली सुकाण्डश्चाथ जन्तुका ।
बहुपुत्रा जन्तुकारी जननी चक्रवर्त्तिनी ॥४३८॥
तिर्यक्फला राजवृक्षा निशान्धा च सुपुष्पिका ।
कपिकच्छुकरोमापि[1] जनेष्टा सूक्ष्मवल्ल्यपि ॥४३९॥
रञ्जनी चमंरी कृष्णवल्ली दीर्घफला च सा ।
विदूलिका कृष्णरुहा ग्रन्थिवल्ली सुवल्ल्यपि ॥४४०॥
तरुवल्ल्यथ कण्डूरा[2] वयस्थाऽरण्यवासिनी ।
अत्यम्लपर्णी तीक्ष्णा च वल्ली सूरणवल्ल्यपि[3] ॥४४१॥
शङ्खपुष्पी तु शङ्खाह्वा सुपुष्पा कम्बुमालिनी ।
पीतपुष्पा[4] तु भूलग्ना मेध्या मलविनाशिनी ॥४४२॥
आवर्त्तकी तिन्दुकिनी विभाण्डा च विषाणिका ।
चर्मरङ्गा मनोज्ञाथ कर्णस्फोटार्द्ध[5]चन्द्रिका ॥४४३॥
चित्रपर्णी स्फोटलता [6]त्रिपुरा चन्द्रिकाप्यथ ।
महावल्ली काष्ठवल्ली[7] कटूवी कटुकवल्लिका ॥४४४॥
कटुश्चापि सुवल्ली च सुकाष्ठा पशुमेहनी ।
तोयवल्ली वृक्षरुहा घनवल्ल्यमृतस्रवा ॥४४५॥

---

१ चB २ गण्डूराBk ३ मित्यपिB ४ .पुष्पीB ५पी (स्फी) ताB ६ त्रिपुटा ?
७ चक्रीकटुCk

श्वेतपुष्पी पुत्रदात्री बृत्तपत्रा सुवल्लरी ।
गन्धालुर्भ्रमरी वेशा[1] जाता[2] वातारिकाप्यथ ॥४४६॥
पत्रवल्ली दीर्घवल्ली खरपर्णी विषादिनी ।
अम्लातकी सुपर्णी च पलाशी काञ्जिका च सा ॥४४७॥
अम्लपत्री रसाम्ला स्यादथ स्युः क्षुपजातयः ।
अहिच्छत्रा मिसिर्योषा शताह्वा पोतिकाशिका ॥४४८॥
स्ववाग्वज्रभूरिवनशतेभ्यः पुष्पिका पुनः ।
संघातशतसूक्ष्मेभ्यः पत्री छत्रा च[3] कारवी ॥४४९॥
सुगन्धा माधवी चाथ सुपुष्पा सुरसापि च ।
सुरसा तालपर्णी[4] च निःश्रेया वनजापि सा ॥४५०॥
अवाक्पुष्पा[5] शीतशिवा शालिनी मधुराप्यथ ।
शालिपर्णी तु सुदला दीर्घमूला सुपर्णिका ॥४५१॥
विदारिगन्धा[6] सुमतिर्दीर्घपत्री गुहा ध्रुवा[7] ।
कुमुदा पिच्छिरा[8] सौम्या नद्याम्रस्तूपदंशकः ॥४५२॥
समष्ठीलः कोशफलः कोशाम्रश्चाम्रगन्धकृत् ।
गण्डीरश्चाथ बृहती वार्त्ताकी स्थूलकण्डका ॥४५३॥
महती सिंहिकाऽक्रान्ता सुण्डाकी राष्ट्रिका कुली ।
कण्टाली कट्फला कण्टतनुः[9] कण्टालुरित्यपि ४५४

---

१ भ्रांमरीB २ वतारिकाB ३ कोरवीB ४ तालपर्णी तु निश्रेणिर्निश्रेणीB निःश्रेयेत्यस्य स्थाने मिश्रेयेत्यन्यत्र । ५ पुष्पीCB ६ विदारीत्यर्धं[K] पुस्तके नास्ति ७ ध्रुहाB ८ स्थिराB ९ लताB

डोलरी वनवृन्ताकी बहुपुत्री महोटिका ।
अथान्या बृहती पुत्रप्रदा बहुफला च सा ॥४५५॥
[1]रुषाङ्गा जविका पीततण्डुला धवलाऽपरा ।
सा तु श्वेतबृहत्यर्थाऽथाप्यन्या कण्टकारिका ॥४५६॥
क्षुद्रकण्टा कण्टकिनी [2]दुःस्पर्शा द्राविणी पुनः ।
क्षुद्रा व्याघ्री क्षुद्रफला निदिग्ध्यथ सितोत्तरा[3] ॥४५७॥
कण्टारिका क्षेत्रदूती लक्ष्मणा कपटेश्वरी ।
स्यान्निःस्नेहफला रास्ना नाकुली च प्रियंकरी ॥४५८॥
गर्दभी चन्द्रिका रामा क्लिन्ना सैव महौषधी ।
सा चोक्ता कटुवार्त्ताकी पृश्निपर्णी[4] तु मेखला ॥४५९॥
शृगालविन्ना कलशी धावनी[5] च महागुहा ।
लाङ्गूलिका सिंहपुच्छी पृथक्पर्णी[6] शृगालिक ॥४६०॥
दीर्घपर्णी चित्रपर्णी श्वपुच्छा चाथ गोक्षुरः ।
महाङ्गः कण्टकी बालदंष्ट्रः स्याद्भद्रकण्टकः ॥४६१॥
दुश्चंक्रमः श्वदंष्ट्रः स्याद्गोकण्टोऽपि क्षुराङ्गकः ।
त्रिकण्टकस्तु क्षुरकः षडङ्गो बहुकण्टकः[7] ॥४६२॥
पलंकषः कण्टफलो वनशृङ्गाटकः करी ।
क्षुद्रक्षुरश्चेक्षुगन्धः स्यादुकण्टो यवासकः[8] ॥४६३॥

---

१ रुमाङ्गा B २ दुःस्पर्शो द्राविणी च सा B ३ सितेतरा B ४ पृष्ठपर्णी तु मौखला B
५ धमनी Ck ६ पत्री शृगालिनी B ७ कण्टका B ८ थ वासकः

यासोऽनन्तो बालपत्रः समुद्रान्तो मरूद्भवः ।
त्रिकण्टकः सूक्ष्मपत्रो विषघ्नो[1] विषकण्टकः ॥४६४॥
सुदूरमूलः कटुकश्चाल्पको बहुकण्टकः ।
क्षुद्रेङ्गुदी तीक्ष्णगन्धो गन्धार्यधिककण्टकः ॥४६५॥
वृषोऽटरूषः सिंहास्यो वासको थाटरूषकः ।
शितपर्णी वाजिदन्ता भिषङ्माता वसादिनी ॥४६६॥
वाशाका[2] वाशिका वाशा वाशका वाशकः पुमान् ।
वासाका वासिका वाजी[3] वासको वाजिदन्तकः ॥४६७॥
अटरूषोप्यटरुषस्तद्वच्चाटरुरित्यपि ।
वासापि सिंही[4]पर्याया[5] सूच्याख्यस्तु शितावरः ॥४६८॥
सूच्चिपत्रः शीतवरः स्वस्तिकः पुरुटः शिखी ।
मेधाकृद्ग्राहकः सूची[6] कुक्कुटःसुनिषण्णकः ॥४६९॥
बभ्रुः[7] श्रीवारको धन्वयवासस्तु दुरालभा ।
ताम्रमूला दुरालम्भा विरूपा दुरवग्रहा ॥४७०॥
प्रबोधिनी सूक्ष्मदला धन्वी पुंस्यपि कच्छुरा ।
विशारदा तूष्ट्रभक्ष्याऽजभक्ष्या मरुसंभवा ॥ ७१॥
वल्ली कण्टारिका क्षुद्रफला क्षुद्रदुरालभा[8] ।
बहुकण्टाग्निधमनी [9] राजमाता धमन्यपि ॥४७२॥

१ घ्ने B २ वाशाकेत्यर्धं C पुस्तके नास्ति वासकेतिपदं B पुस्तके नास्ति ३ वासी B
४ पर्याया: CK ५ सूच्यग्रस्तु B ६ कुक्कुर: B ७ बभ्रू: B ८ दुरोलभा B ९ राजमोता B

वाकुची सुप्रभा सोमराजी शीता[१] शितावरी ।
सुवल्ल्यवल्गुजा राजी चन्द्ररेखा[२] सुवल्लिका ॥४७३॥
सोमवल्ली काकमेषी[३] काम्भोजी पूतिगन्धका ।
कालमेषी कालमेशी वागुची कालमोचिका ॥४७४॥
चन्द्राह्वाऽजा[४] कृष्णफला शणपुष्पी तु लोमशा ।
बृहत्पुष्पी स्थूलफला शणिका[५] शणघण्टिका ॥४७५॥
पीतपुष्पी माल्यपुष्पी सूक्ष्मपुष्पी तु षष्टिका ।
सूक्ष्मपर्णी[६] क्षुद्रशाणपुष्प्यथ श्वेतपुष्पिका ॥४७६॥
महासिता वृत्तपर्णी शरार्धैभ्यस्तु पुङ्खिका ।
सैव श्वेता द्वितीयाथ कण्टालुः कण्टपुङ्खिका ॥४७७॥
कटुतिक्तस्तु चमनो माल्यपुष्पो निशाचरः ।
स्याद्दीर्घात्पल्लवः[७] शाखस्त्वक्सारः शाण इत्यथ ॥४७८॥
अम्बष्ठाम्बालिका बाला[८] शरालाम्ब्राम्बिका पुनः ।
स्यान्मयूरी गन्धफला दृढवल्का च पाशिका ॥४७९॥
मुखमाची चित्रपुष्पी छिन्नपत्र्यथ शोधनी ।
नीलो नीला तालपत्री राज्ञी काली महाफला[९] ॥४८०॥
नीलिनी[१०] नीलपुष्पी च श्रीफला[११]ऽन्येलमोचिका ।
कृष्णला रजनी भद्रा भारवाही महाबला ॥४८१॥

---

१ शान्ता[B] २ लेखा[B] ३ काम्बोजी[B] ४ चन्द्राह्वीजा B ५ शाणिका B ६ पर्णा[CK]
७ शाखात्वक्सारः B ८ शशला B ९ फली B १० नलिनीति पाठः सर्वत्र ११ क्ष्येळ B

क्लीतनी चारटी श्यामा गन्धात्पुष्पा च पुष्यपि ।
स्थिररङ्गाञ्जनकोशी राजनीलयपरा पुनः ॥४८२॥
केशाहीं[1] श्रीफुली [2]तुत्था महानीली खरच्छदा ।
गोजिह्वाधोमुखात्पुष्पी[3] भूतोत्मादहरीत्यथ ॥४८३॥
अपामार्गः शैखरिकः काण्डकण्ठो मयूरकः ।
करमण्डलिको झंटश्चमत्कारश्च कंटकी ॥४८४॥
खरमञ्जर्यधःशल्यः किणही[4] पङ्क्तिकण्टकः ।
प्रत्यक्पुष्पो दुर्ग्रहः स्यात्कुब्जो मर्कटपिप्पली ॥४८५॥
धामार्गवोपि क्षवको मालाकण्टोऽपि मर्कटी ।
रक्ते तत्राघट्टकः स्यात् क्षुद्रापामार्ग इत्यपि ॥४८६॥
रक्तबिन्दुर्दुग्धिनिका स्वल्पपत्रा[5]ऽथ भद्रिका ।
बला समङ्गौदनिका मोटा भद्रौदनीति च ॥४८७॥
कल्याणिनी भद्रबला पाटी चाथ महाबला ।
पृक्का रुहा व्यालजिह्वा बल्या शीता बला च सा ॥४८८॥
स्यान्महाज्येष्ठदेवेभ्यो बला मृगरसा मृगा ।
सहदेवी पीतपुष्पी देवार्हा गन्धवल्लरी ॥४८९॥
कंटभरा केशरुहा वर्षपुष्पा मृगादिनी ।
स्यात्कोशवर्द्धिनी चाथ शीता तु [6]वृष्यगन्धिनी ४९०

१ केशार्हं B २ तुच्छा B ३ मुखा पुष्पि Ck ४ किणिही B ५ पत्रोऽथ
६ पुष्प C

शीतपुष्पाथ[१] खर्वा स्यात्त्वरगन्धा चतुःफला ।
भद्रादनी[२] विश्वदेवा देवदण्डा गवेधुका ॥४६१॥

घाटा नागबलाऽभीष्टा महृतः[३] स्युः परा इमाः ।
शाखा पत्रा[४] फला गन्धा महाराष्ट्री तु शारदी ॥४६२॥

मत्स्यादनी मत्स्यगन्धा प्राणदा तोयवल्लरी ।
अग्निज्वाला चित्रपत्री लाङ्गली जलपिप्पली ॥४६३॥

[५]वाराहकर्णी तुरगी [६]कञ्चुकाऽश्वावरोहिका ।
अश्वगन्धाथ वनजा गन्धपत्री हयप्रिया ॥४६४॥

वाजिनी पुष्टिदा पुष्टा श्यामला कामरूपिणी ।
पलाशपर्णी बलदा वातघ्नी धीवरापि च ॥४६५॥

कालप्रियकरी वन्या वराहपत्रिका च सा ।
हपुषा[७] विपुषा विस्रा विगन्धाऽथापराजिता ॥४६६॥

[८]कच्छूघ्नीहविषध्वाङ्क्षनाशिनी स्वल्पतः फला ।
शतावरी शतपदी पीवरी दीवरी[९] वरी ॥४६७॥

वृष्या दिव्या[१०]द्वीपिशत्रुर्द्वीपिका वरकण्टकी ।
नारायणी सूक्ष्मपत्रा शतह्वा सुरसापि च ॥४६८॥

---

१ त्यखर्वा स्यात् वरगन्धाB २ दाना विश्वदेवीB ३ महत्तःB ४ पत्र[B] ५ वराह[B]
६ कम्बुकाष्ठावरोहिकाC कम्बुः काष्ठावरोहिकाB ७ हपुषी[B] ८ कच्छूघ्नी हविषा[B]
९ इन्दीवरी भ्रम १० द्वीप[Ck]

महाशतसहस्रेभ्यः सोऽश्व वीर्योर्ध्वकण्टका ।
फणिज्जिका स्वादुरसा सुपत्राथैलवालुकम् ॥४९९॥

हरिवालुकमेलाह्वं मालुकं[1] वालुकं दृढम् ।
एल्वालुकं[2] कपित्थं[3] च दुर्वर्णं प्रसरं पुनः ॥५००॥

सुगन्धकं [4]शुल्वगन्धि स्यादेलागन्धमित्यथ ।
कलिकाली लाङ्गलिनी[5] हलिनी गर्भपातिनी ॥५०१॥

दीप्ता विशल्याग्निमुखी हली [6] नक्तेन्दुपुष्पिका ।
स्याद्द्वयोस्तेरणस्तेरः कुनीली रागदोप्यथ ॥५०२॥

जया जयन्ती हरिता विक्रान्ता विजया बला ।
माटा[7] पराजिता सूक्ष्ममूला स्यादथ सुन्दरी ॥५०३॥

काकमाची सर्वतिक्ता बहुकट्[8]गुच्छतः फला ।
रसायनी काकमाता स्वादुपाका विराविणी[9] ॥५०४॥

बरा कुष्ठघ्नी मत्स्याच्चा स्याच्छूवन्ती तु मूषिका ।
न्यग्रोधी च श्रुतश्रेणी[10] चित्रा मूषकमार्यपि ॥५०५॥

प्रत्यक्श्रेणी शंवरी[11]स्यादानन्दा विजया जया ।
वीर[12]पुत्राथ[13]भृङ्गाह्वो मार्कवः केशरञ्जनः ॥५०६॥

---

१ मालूकंB २ ऐल्वालुकंB ३ कपित्थस्त्वगित्यन्यत्र ४ सुसCk ५ लीनीB
६ नक्तंदुC ७ मागB ८ कद्रुCk ९ वणिB १० श्रेणीk ११ शंवराCk १२ पत्रा
१३ भृङ्गाह्वा शार्कवःB

पितृप्रियो भृङ्गराजोङ्गारकः केशवर्द्धनः ।
अन्यो नीलो नीलपुष्पः श्यामलश्चाथ लोमशः[१] ॥५०७॥
काकजङ्घा नदी[२]कान्ता दासी काकाह्वया पुनः[३] ।
पारावतपदी चाथ चञ्चुश्चञ्चूश्च विंजुला[४] ॥५०८॥
चित्रपुत्री[५] च कलभी सुशाखः क्षेत्रसंभवः ।
चंचुरश्चंचुपत्रो[६]ऽथ विषारिर्दीर्घपत्रिका ॥५०९॥
दिव्यगन्धा महासुम्र्यां बृहतश्चंचुरित्यथ ।
त्वक्सारभेदिनी क्षुद्रचंचुः शुनकचञ्चुका ॥५१०॥
सिन्दुवारः श्वेतपुष्पः[७] सिन्दूकः स्थिरसाधनः ।
स्त्रीपुंसोः सुरसो नेता सिद्धोन्या नीलसिन्दुका ॥५११॥
सिन्दुकच्छपिका भूतकेशी द्रोणी च नीलिका ।
निर्गुण्डिरपि निर्गुण्डी द्रोणी ना सिन्दुवारितः ॥५१२॥
शिफालिकापि शुक्लाङ्गी सुवहा चापराजिता ।
वातारिर्विजया भूतकेशस्य[८] क्षेत्रसंभवः ॥५१३॥
द्वयोर्भिण्डश्चतुष्पत्र आम्लपत्रश्चतुष्पदः ।
करपर्णो वृत्तबीजः शुशाखश्चाथ पुत्रदा ॥५१४॥
गर्भदात्री प्राणिमाता तक्राह्वा तक्रभक्षका ।
पञ्चाङ्गलाशिकाभा स्यात्स्वर्णुली हेमपुष्पिका ॥५१५॥

---

१ लोमशाB २ कण्टा ३ चसाB ४ वंजुलाB ५ पत्रीB ६ पिB ७ पुष्पाB
८ वारकःB ९ केश्यथेति स्यात् ।

अब्दमाता खस्वसस्तु सुबीजः सूक्ष्मतण्डुलः ।
सूक्ष्मबीजोऽथ मतिदा बल्या पङ्गुल्यहारिणी ॥५१६॥
वृषत्पत्री गुच्छपुष्पी [1]शिग्रुश्च्यथ वनोद्भवः ।
कुसुम्भो वह्निसंभूत[2]स्त्रिष्वाहुल्योर्वुदश्च सः ॥५१७॥
शिम्बीफलो दन्तकाष्ठो नृपमाङ्गल्यकः पुनः ।
शरत्पुष्पस्तरवटो हलराख्यः सुपुष्पकः ॥५१८॥
भूम्याहु[3]ल्यां कुष्ठका स्यान्मार्कण्डीयं महौषधम् ।
कासमर्दोऽरिमर्दः स्यात्कालः कनक इत्यथ ॥५१९॥
सुपत्रो रक्तविटपः[4] कुष्ठारिः स्याद्रविप्रियः ।
आदित्यपत्रांशुपतिरथ पिञ्छोलिपिण्डिके ॥५२०॥
श्वेताम्लिकाथ नीलाम्ली श्यामाम्ली दीर्घशाखिका ।
नीलपिंछोलिका ब्राह्मी सैव [5] पूतिमयूरिका ॥५२१॥
अग्रब्रह्माजविभ्यः स्याद्गन्धापि खरपुष्पिका ।
अर्कभक्ता तु वरदा सूर्यकान्ता सुवर्चला ॥५२२॥
मण्डूकपर्णी मण्डूकी विक्रान्ता सुरसंभवा ।
सौरी सुतेजार्कहिता[6] डोडिर्डेडी क्षुपात्पुनः ॥५२३॥
विषकेशरणोभ्यः[7]सोमुंष्टिरन्या तु जीवनी ।
शाकश्रेष्ठा दीर्घपत्रा सूक्ष्मपत्रा सुकालुका ॥५२४॥

---

१ शिग्रुस्तु यवनोद्भुवः B २ स्निग्धकुल्योर्बुदश्च सः B ३ भूम्यांकुल्यो
४ कुसुमः B ५ पूतिय Ck ६ सुता B ७ स्युरन्या डोडीतु Bk

जीवन्ती बहुवल्ली स्यादथ नील[1]सिताञ्जनी ।
अञ्जनी रेचनी काली कृष्णाभाप्यथ सारिणी ॥५२५॥

कर्पासी वदरी वर्च्या[2] समुद्रान्ता मरूद्भवा ।
तुला पिचुर्गुडोपि स्याद्वादरस्तुण्डकेरिका[3] ॥५२६॥

वनजारण्य कार्पासी[4] भारद्वाज्यथ [5] शृङ्खली ।
वज्रास्थि[6]शृङ्खला वज्रकण्टकः कोकिलाक्षकः ॥५२७॥

इक्षुरिक्षुरकोवज्र[7] पिच्छिला कापिशेक्षणः ।
इक्षुगन्धा [8]सप्तला स्यात्फेनादीप्ता विषाणिका ॥५२८॥

स्वर्णपुष्पी[9] पत्रघना बहुफेनापि सारिवा ।
विमला बिन्दुला[10] कामवृद्धिस्तु मदनायुधः[11] ॥५२९॥

जीवो जितेन्द्रियः कामी दद्रुघ्नस्तु प्रपुन्नटः ।
चक्रमर्दः प्रपुन्नाटः पुन्नाटः शुकनासिकः ॥५३०॥

दृढबीजस्तरवटः खर्जूघ्नोऽण्डगजश्च सः ।
स्यान्मेघगजचक्राणां नामा चक्रगजः पुनः ॥५३१॥

व्यावर्त्तकश्चैडगजो [12]झिञ्झिरीटा तु झिञ्झिरा ।
पीतपुष्पा कण्टफला वृत्ताश्रयफला च सा ॥५३२॥

---

१ शिताCk २ वच्याB ३ कारिद्याB ४ कर्पासी ५ शङ्खली ६ वज्रास्थिः Ck
७ वज्रपिच्छिकालापिशेक्षणः B ८ सूल्फलाB ९ पुष्पा पत्रधनाB १० विदुलाCk
११ मर्दनाB १२ झिझिरीB

[1]हुडरोमाप्यथ क्षुद्रक्षुपास्तत्राथ पर्पटः ।
तृष्णारिश्चरको रेणुः कल्पाङ्गो वरकोरकः ॥५३३॥
शीतः शीतप्रियः पांशुः सुतिक्तो बहुकण्टकः ।
कृशशाखो[2] रक्तपुष्पः पित्तारिः कवचः पुनः ॥५३४॥
जीवको जीवनो जीव्यः शृङ्गाख्यः प्राणदः प्रियः ।
[3]चिरजीवी च मधुरो मङ्गल्यः कूर्चशीर्षकः ॥५३५॥
ह्रस्वाङ्गो[4] जीवदो वृद्धिप्रदो धीरस्तु दुर्द्धरः ।
गोपर्यायपतिः कामी गोरक्षो गोपतिश्च सः ॥५३६॥
भृक्षः प्रियोऽथ श्रमणा भिक्षुः [5] श्रवणशीर्षकः ।
शुण्डिनी[6] श्रावणी चाथ महामुण्डी तु लोचनी ५३७
कदम्बपुष्पा विकचा क्रोडघोरा[7] पलंकषः ।
स्यान्महाश्रावणी मुण्डा भूनदीभ्यां कदम्बका ॥५३८॥
मुण्डा छिन्ना ग्रन्थिनिका माता लोभन्यलंबुषा ।
स्थविराथ मणिच्छिद्रा शल्यपर्ण्यपि जीवनी ॥५३९॥
मेदावती मेदसारा मेदिनी मधुरा वरा ।
स्निग्धा मेदोद्भवा साध्वी शल्यदा बहुरन्धिका ॥५४०॥
जीवनी तु महामेदा देवेष्टा पांशुरागिणी ।
वसुच्छिद्रा देवगन्धा [8]दिव्या देवमणिश्च सा ॥५४१॥

---

१ हुड्डु B २ शाको B ३ चिरं B ४ ह्रस्वाङ्गइत्याद्यर्धत्रयं B पुस्तके नास्ति
५ श्रवणा Ck ६ मुण्डिनीति स्यात् ७ पोरा B ८ दिव्य Ck

सुरमेदा महाच्छिद्रा [1] वृद्धार्हाप्यथ बुद्धिदा ।
सिद्धा योग्या जीवदात्री लोककान्ता रथाङ्ग्यपि ॥५४२॥
जीवश्रेष्ठा यशस्या स्त्री चेतनीया सुखं च मुत् ।
संपञ्जनेष्टा [2] भूत्यर्था भूतिश्चापि[3] प्रसारिणी ॥५४३॥
[4]नारुपर्णी राजबला सारिणी प्रसरा सरा ।
प्रतानकी भद्रपर्णी[5] स्याद्वल्या[6] राजपर्ण्यथ ॥५४४॥
धूम्रपत्रा तु धूम्राह्वा सुलभा गृध्रपत्रका[7] ।
द्वयोः पाषाणभेदः स्यात् श्वेतः शैलसमुद्भवः ॥५४५॥
इरावती तु [8]खट्वाङ्गा गोधा गोधावतीत्यथ ।
श्वेतान्या सा शिलाचक्रा शिलात्वक् सप्तनासिका ॥५४६
शिलाज्ञा वल्क[9] लाभाथ क्षुद्रपाषाणभेदकः ।
रश्मिकेतुश्चतुःपत्री पार्वती कन्दरोद्भवा ॥५४७॥
नागभूरथ भृङ्गेष्टा गृहकन्या स्थलेरुहा ।
कुमार्यर्था दीर्घपत्रा बहुपत्राऽमराऽजरा ॥५४८॥
कण्टकप्रावृता वीरा ब्रह्मघ्नी विपुला श्रवा ।
कपिला तरुणी रामा मृद्वी स्यादम्बुधिस्रवा ५४९॥
बर्हिचूडा तु शिखिनी शिखालुः सुशिखाप्यथ ।
क्षीरिणी काञ्चनक्षीरी कर्षिणी पटुपर्ण्यपि ॥५५०॥

---

१ वृक्षार्हाB २ लक्ष्म्यर्थाB ३ थB ४ नारूB ५ पर्णाB ६ स्याद्वन्याB
७ धूम्रका ८ खट्वाङ्गीB ९ भाB

दुग्धा हैमवती हैमी [1]हेमदुग्धा हिमावती ।
हिमाद्रिजा यवोद्भूता स्वर्णक्षीरी तु रुक्मिणी ॥५५१॥

स्वर्गाह्वाथ त्रायमाणा कृतत्राणापि पालिनी[2] ।
मङ्गल्यार्ह्वा देवबला[3] त्रायन्ती वार्षिकी च सा[4] ॥५५२॥

सुकामा बलभद्राथ स्रवत्तोयाऽमृतस्रवा ।
रामाम्बिका[5] मह्वास्तम्बी रुदन्ती शणपत्रिका ॥५५३॥

संजीविन्यथ मत्स्याक्षी सौम्या ब्राह्मी सुवर्चला ।
महौषधी सुरश्रेष्ठा सुरेष्टा सुरसा पुनः ॥५५४ ॥

मण्डूकजननी[6] मेध्या वीरा दिव्याऽपरा च सा ।
सूक्ष्मपत्रा लघुब्राह्मी जलजाप्यथ कामिनी ॥५५५॥

शिखरी पादपरुह्वा[7] द्रुपदी गन्धमादिनी ।
वृक्षादनी केशरूपा श्यामा स्त्रीपुंसयोः पुनः ॥५५६॥

वन्दाकः कामवृक्षोऽथ कुलत्था दृक्प्रसादनी ।
कुताली लोचनहिता सैवारण्यकुलत्थिका ॥५५७॥

तण्डुलीयस्तु भण्डीरो बहुवीर्यो[8] घनस्वनः ।
[9]सुशाको ग्रन्थिलश्चाथ क्षुद्रघोली खरच्छदा ॥५५८॥

---

१ हिमB २ पियालिनीB ३ वल्लीB ४ वसाCk ५ रोमाञ्चिका महास्तम्बी रुदती चणपत्रिकाB ६ मण्डूकवर्णा (ण्पत्री, ण्पुत्रा) त्यन्यत्र ७ रुहाB ८ वीर्याB
९ सुशाखोB

विवल्लिका[1] रक्तदला शुण्डी तु हस्ति[2]शुण्डिका ।
धूसर्यथ पयस्या तु क्षीरिणी जलकामुका[3] ॥५५९॥

कुटुम्बिनी वक्रशल्या दुराधर्षा[4] जलेरुहा ।
विरौटी[5] शीतला चाथ [6]चारिटी स्थलपद्मिनी ॥५६०॥

सुगन्धमूलाम्बुरुहा पुष्करा पद्मचारिणी ।
लक्ष्मीः प्रेष्ठा पद्मवती रम्या स्थलरुहा पुनः ॥५६१॥

सुपुष्करा [7]चातिचरा रक्तपुष्पा तु [8]जाम्बती ।
जम्बूर्जाम्बवती [9]वृक्का दुर्द्धर्षा दुःसहा च सा[10] ॥५६२॥

मलघ्नी नागदमनी नागिनी तु विशोधिनी ।
नागस्फोता विशालाक्षी नागच्छत्रा विचक्षणा ५६३॥

श्वेतात्सर्पमधुभ्यश्च पुष्पा स्याच्छलदन्तिका ।
नागदन्ती स्वादुकाथ विष्णुक्रान्ताऽपराजिता ॥५६४॥

नीलक्रान्ता नीलपुष्पा विक्रान्ताप्यथ पुंस्ययम् ।
कुणांजरः कुणांजीवः कुणांज्योऽरण्यवास्तुकः[11] ॥५६५॥

[12]अथ ताल्युच्चटा वृष्या विषघ्नी बहुपत्रिका ।
बहुवीर्याहिभयदाऽजरा भूभ्यामली[13] पुनः ॥५६६॥

---

१ त्रिवल्लिका B २ हस्त B ३ कामुकी B ४ दुर्धर्षा च जलेरुहा B ५ किरीटी B ६ चारटीत्यन्यत्र ७ तिचारा च B ८ जीवूनी B ९ वृष्णा B १० वसा Ck ११ वस्तुकः B १२ वृष्याध्यांडोरचटताली B १३ भूर्मामली B

वितुन्ना चारटी वीरा दृढपादी हिमालया ।
विश्वपर्ण्यथ गोरक्षी पञ्चपर्णी[1] विचित्रला ॥५६७॥
(सा)[2] स्यात्सुदीर्घसर्पेभ्यो[3] दण्डी[4] गन्धाधिकाप्यथ ।
प्रसारिणी क्रोष्टुपुच्छी गोलोमीजा च धूमिका ॥५६८॥
दुग्धपेजी पयः फेनी फेनदुग्धा पयस्विनी ।
भूतारी प्राणकेतुघ्नी गोजापर्ण्यथ चुक्रिका ॥५६९॥
चुकाम्लिका च चाङ्गेरी शाखाम्लाप्यम्लपत्रिका ।
शमीपत्रा रक्तपादी स्पृक्का खदिरपुत्र्यपि ॥५७०॥
संकोचनी नमस्कारी समङ्गा च प्रसारिणी ।
स्पर्शलज्जापि लज्जालुः स्याल्लज्जा[5] लज्जरीत्यपि ॥५७१॥
गण्डमाला[6] सप्तपर्णी [7]कन्दर्यञ्जलिकारिका ।
स्यादस्त्रशोधिनी चापि स्वगुप्ताथ बृहद्दला ॥५७२॥
अल्पक्षुपान्याप्यपरा त्रिपर्णी हंसपादिका ।
संचारिणी च पदिका प्रह्लादी कीलपादिका ॥५७३॥
गोधापदी हयार्थातु कातराथ पुनर्नवा ।
स्त्रियां पुंसि कठिल्लः स्याद्विशाखः शिखिवाटिका ॥५७४॥
दीर्घपत्रा च वर्षाभूः पृथ्वी[8] रक्ताऽपरा पुनः ।
वर्षाभूः पत्रिका काण्डा रक्तान्मण्डलपत्रिका ॥५७५॥

---

१ च चित्रला B २ सा इत्येकमक्षरं KC पुस्तकयोर्नास्ति । स्यात्सुदीर्घभुजङ्गेभ्यो B
३ सर्वेभ्यो C ४ दण्डो B ५ लज्जिनी B ६ गण्डमाली B ७ कदरीत्यन्यत्र ८ रक्तपरा B

वैशाख्यथ च नीलान्या शैवस्तु शिवशेखरः ।
शिवमल्ली शिवतमः सुरेष्टो वसुकः[1] पुनः ॥५७६॥
अपि पाशुपतश्चाथ व्यालीपर्यायवाचिका ।
वृश्चिका त्वलिपत्री स्यान्नखपर्णी च पिच्छिला ॥५७७
ताली[2] कुम्भा पाटली स्याद्ध्रुवः[3]स्याद्रक्तपुष्पिका ।
स्यात्पाण्डुरफली[4] पाण्डुर्धूसरा वृत्तबीजका ॥५७८॥
श्वेता[5] तुम्बुरिकापत्री पर्वमूलाप्यविप्रिया ।
अजदण्डी ब्रह्मदण्डी कण्टपत्रफलाप्यथ ॥५७९॥
द्रवन्ती शम्बरी चित्रा न्यग्रोधी शणमूलिका ।
प्रत्यक्श्रेणी विषा चण्डा पुत्रश्रेण्याखुपर्ण्यपि ॥५८०॥
प्रतिपर्णशिफा चापि सहस्रादपि मूलिका ।
द्रोणपुष्पी दीर्घदला कुम्भयोनिः कुरुम्बिका[6] ॥५८१॥
चित्रक्षुपः सुपुष्पा स्यात्सैवोक्ता चित्रपत्रिका ।
अथाप्यन्या महाद्रोणा[7] देवी देवकुरुम्बका[8] ॥५८२॥
दिव्यपुष्पी च काञ्जिः[9] स्यादथ[10] हुण्डुः पुमान्स्त्रियाम्
गोरक्षदुग्धा गोरक्षी ताम्रदुग्धा रसायनी ॥५८३॥
अपि स्याद्बहुपत्री च मृतसंजीवनी शुनी ।
इक्षुर्मधुगुडतृणोऽसिपत्रः[11] कुसुमाकरः ॥५८४॥

---

१ वसुका B २ कुम्भी B ३ द्रक्तका च पुनः पुनः B ४ फला Ck ५ तुबरिका B ६ कुरंबका B ७ द्रोणी B ८ कुरूवका B ९ काञ्जी B १० हंडः B ११ सुकुमारकः इति स्यात् ।

वृष्यो वंशोऽपि कान्तारः स च पञ्चविधः सितः ।
कठिनश्वेतकाष्ठेभ्य इक्षुः काण्डाच्च पत्रकः ॥५८५॥
स्याद्दीर्घवंशसूत्रीभ्यो नीलपेरुश्च पुण्ड्रके ।
इक्षुवाही[1] रसालः स्यादिक्षुवाह्निरथापरः ॥५८६॥
करङ्केक्षुरिक्षुयोनी रसालो रसदायकः ।
कोकिलेक्षुस्तु कृष्णेक्षुरिक्षुरोप्यथ रक्तके ॥५८७॥
शतपरुः[2] सूक्ष्मपत्र उत्कटा[3] मधुरा द्वयोः ।
ह्रस्वमूलाथ तन्मूले मोरटश्चेक्षुलोचनम्[4] ॥५८८॥
अथ चैता महौषध्यः सर्वा एव [5]रसायनाः ।
मण्डलैः कपिलैश्चित्रा सर्पाभा पञ्च वर्णिनी ॥५८९॥
पञ्चरत्निप्रमाणा तु विज्ञेयाऽजगरी बुधैः ।
निष्पत्रा कनकाभासा मूले द्व्यङ्गुलसंमिता ॥५९०॥
स्वल्पाकारा लोहिताङ्गा[6] श्वेतकापोतिकोच्यते ।
द्विपर्णिनीमूलभवा[7]मरुणां कृष्णपिङ्गलाम् ॥५९१॥
द्विरत्निमात्रां जानीयाद्गोनसीं गोनसाकृतिम् ।
सक्षारां रोमशां मृद्वीं रसेनेक्षुरसोपमाम् ॥५९२॥
एवंरूपरसां चापि कृष्णकापोतिमादिशेत् ।
कृष्णसर्पस्य रूपेण [8]वाराही कन्दसंभवाम् ॥५९३॥

---

१ वादीC जादीB २ परःKc ३ उत्काटाB ४ लोचनःB ५ रसायनःB
६ लोहिताङ्गीB ७ भावा तरुणीB ८ वाराहीमिति स्यात् ।

एकपर्णां महावीर्यां भिन्नाञ्जनचयोपमाम् ।
छत्रातिच्छत्रके विद्याद्रक्षोघ्ने कन्दसंभवे ॥५९४॥
जरामृत्युनिवारिण्यौ श्वेतकापोतिसंभवे ।
कान्तैर्द्वादशभिः पत्रैर्मयूराङ्गरुहोपमैः ॥५९५॥
कन्दजा काञ्चनक्षीरी कन्या नाम महौषधिः ।
करेणुः सुबहुक्षीरा कन्देन गजरूपिणी ॥५९६॥
हस्तिकर्णपलाशस्य तुल्यपर्णा द्विपर्णिनी ।
अजास्तनाभकन्दा तु सक्षीरा क्षुपरूपिणी ॥५९७॥
अजा महौषधी ज्ञेया शंखकुन्देन्दुपाण्डरा ।
विचित्रकुसुमां श्वेतां काकादन्या समक्षुपाम् ॥५९८॥
[1]तक्रकामोषधां विद्याज्जरामृत्युविनाशिनीम् ।
शूलिभिः पञ्चभिः पत्रैः [2]संयुक्ता शुक्लकोमलैः ॥५९९॥
आदित्यपर्णिनी ज्ञेया सदादित्यानुवर्तिनी ।
कनकाभा जलान्तेषु सर्वतः परिसर्पति ॥६००॥
सक्षीरा पद्मिनीप्रख्या देवी ब्रह्मसुवर्चला ।
अरत्निमात्रक्षुपका पत्रैर्द्व्यङ्गुलसंमितैः ॥६०१॥
पुष्पैर्नीलोत्पलाकारैः फलैश्चाञ्जनसप्रभैः ।
श्राविणी महती ज्ञेया कनकाभा पयस्विनी ॥६०२॥

---

१ तत्र[B] २ संयुक्ताऽशुक[B]

आविणी पाण्डुराभासा महाआविणिलक्षणा ।
गोलोमी चाजलोमी च लोमशे कन्दसंभवे ॥६०३॥
हंसपादीव विच्छिन्नैः पत्रैर्मूलसमुद्भवैः ।
अथवा शंखपुष्प्या तु समाना सर्परूपतः ॥६०४॥
वेगेन महता विद्यात्सर्पनिर्मोकसंनिभा ।
एषा हैमवती नाम जायते साम्बुदक्षये ॥६०५॥
सप्तादौ सर्परूपिण्यो बाह्यौषध्यः प्रकीर्त्तिताः ।
तासामुद्धरणं कार्यं मन्त्रेणानेन सर्वदा ॥६०६॥
महेन्द्रराजकृष्णानां ब्राह्मणानां गवामपि ।
तपसा तेजसा चैव प्रशाम्यध्वं शिवाय च ॥६०७॥
मन्त्रेणानेन मतिमान्सर्वमप्यौषधं [1]जपेत् ॥
कल्पद्रौ केशवकृते फलिते नाम सत्फलैः ॥
वनौषधिप्रकाण्डोऽयं दशमः सिद्धिमागतः ॥६०८॥

---

अथ प्रसह्यास्तत्रादौ सरभस्तु [2] महामृगः ।
उत्पादको महास्कन्धः सिंहशत्रुर्महामनाः ॥१॥
लण्डलश्चोर्ध्वनयनो रामोष्टापद इत्यपि ।
महाशृङ्गी मनस्वी च मृगेन्द्रश्चतुरूर्ध्वपात् ॥२॥

---

१ जयेत् B २ शरभहृत्यन्यत्र ।

वनपर्वतयोरर्था[1]न्निवासार्थोऽष्टपादपि ।
उष्ट्राकृतिश्चाथ सिंहः पञ्चास्यः केसरी हरी ॥३॥
हर्यक्षः [2]केशरी मानी नखी मृगपतिर्हरिः ।
कण्ठीरवः पञ्चशिखः शैलाटो भीमविक्रमः ॥४॥
पलंकषो महानादः पारीन्द्रो नखरायुधः ।
अगौकाश्च नगौकाश्च केसरी करिमाचलः ॥५॥
गन्धोष्णीषो व्यादितास्यो[3] वनराजो गणेश्वरः ।
हस्तिपर्यायशत्र्वर्थो[4] नभःक्रान्तः सकृत्प्रजः ॥६॥
रक्तजिह्वो महावीरो दशमीस्थः सुगन्धिकः ।
तथैव श्वेतपिङ्गश्च श्वापदो गर्जितासहः ॥७॥
द्विपः[5] पञ्चशिखश्चाथ [6]नादेप्यस्य मरुत्प्लवः ।
[7]न्क्कारोऽपि च चूत्कार[8] स्त्रियां क्ष्वेडाथ भीरुकः ॥८॥
व्याघ्रः पञ्चनखो व्याडः शार्दूलोऽपि गुहाशयः ।
तीक्ष्णदंष्ट्रः पुण्डरीको द्वीपी द्वीपिल इत्यपि ॥९॥
चित्रकश्चित्रकायः स्यादुपव्याघ्रो मृगान्तकः ।
व्याघ्र्यां चित्रेण संजातः कलव्याघ्रोथ भल्लुकः[9] ॥१०॥
दुर्घोषो भल्लुको भल्लो[10] भालुकः पृष्ठदृष्टिकः ।
द्राघिष्ठायुर्दीर्घकेशो भाल्लूको[11]भल्लको[12]ऽपि च ॥११॥

१ त्रिष्वासार्थो$^{CK}$ २ केशरो$^{CK}$ ३ त्यादितास्यो$^{B}$ ४ वैर्यर्थो$^{B}$ ५ द्विपं$^{B}$ ६ नादो$^{B}$
७ चुक्कारो$^{B}$ ८ चूका (क) रो$^{B}$ ९ भालुकः$^{B}$ १० भालो$^{B}$ ११ भाल्लको$^{B}$ भल्लुको$^{KC}$

भल्लो भाल्लश्च [1]भाल्लूक ऋक्षोप्यथ मृगादनः ।
तरुक्षुश्च [2]तरक्षः स्याद्घोरदर्शन इत्यपि ॥१२॥
शृगालो वञ्चकः क्रोष्टा सृगालो मृगधूर्त्तकः ।
गोमायुर्भूरिमायः स्यात्फेरवो घोरवासनः ॥१३॥
पारूरवः पेरवोपि पेरुः फेरुश्च जम्बुकः ।
जम्बूको वनमत्तः स्याल्लोपाशो वनकुक्कुरः ॥१४॥
शालावृकः शिवालुः स्यात्फेरण्डो व्याघ्रनामकः ।
स्त्रियां शिवा दीप्तजिह्वा फेरवा घोरवाशिनी ॥१५॥
लोपाश्युल्कामुखी गण्डिः[3] साल्पा खोल्का[4] किखिः पुनः ।
भोवाकी पूतिकेश्याह्वा नखिनो[5] लग्नमैथुनाः ॥१६॥
तेऽपि स्युः श्वापदाः सर्वे कोकस्त्वीहामृगो वृकः ।
स्याद्गोवत्सहु[6]डच्छागनाशनोऽपि जलाश्रयः ॥१७॥
वनार्थभषणार्थो[7]थ पुनः स्याद्दीप्तलोचनः ।
स च स्यान्मूषकारातिर्मायावी रात्रिचार्यपि ॥१८॥
जाहकः [8]कुन्दमो ह्वीकुर्विडालो वृषदंशकः[9] ।
मार्जार ओतुस्तद्भेदा देशभेदादथापरः ॥१९॥
वनेचरो लम्बमुखो वृक्षावासोऽथ लोमशः ।
सुगन्धिमूत्रः पूतीकस्तपनो [10]मारजातकः ॥२०॥

१ भाल्लूको BOK २ तरक्षुः B ३ गण्डिरित्यक्षरद्वयं CK पुस्तकयोर्नास्ति B ४ कोल्हा Ck ५ नखिनी लग्नमैथुना B ६ वत्सो B ७ भषणार्थोपि B ८ कदमोह्वीकु B ९ पृषदंसकः वैग १० नार B

गन्धर्वर्यायमार्जारः खट्टाशोथ[1] विलम्बिताः[2] ।
गज उक्तो, गणोत्साहो वज्रचर्मा च गण्डकः ॥२१॥
खड्गो वाध्रोणसः क्रोडी मालशृङ्गो वलीत्यपि ।
खड्गी शूरोप्यथोष्ट्रोग्रे प्रोक्तो, गौर्महिषोऽपि च ॥२२॥
[3]वनगौर्वलभद्रोऽपि स्यान्महागव इत्यपि ।
तथैव स्याद्गिल्लगवी तस्य स्त्री चमरस्तु सः ॥२३॥
व्यजनी वन्यगौर्वालधिप्रियोप्यथ तत्स्त्रियाम् ।
गिरिप्रिया तु चमरी दीर्घबालाथ शूकरः ॥२४॥
सूकरो रोमशो दंष्ट्री बहुसत्त्वः किरिः किटिः ।
रदपोत्रायुधः कोलः शूरो बहुतरस्वरः ॥२५॥
वली दन्तायुधः क्रोडः स्तब्धरोमा जलप्रियः ।
वराहः सूरिको घृष्टिः सूचीरोमा बहुप्रजः ॥२६॥
घोणान्तभेदनो घोणी कुमुखो वज्रवल्कलः ।
लाङ्गलास्यो दीर्घरतो मुस्तान्नः[4] स्थूलनासिकः ॥२७॥
अदन्तो[5] वक्रदंष्ट्रः[6] स्या[7]दाखनिर्ग्राम सूकरः ।
ग्रामीणो विड्वराहोऽपि विष्ठालुर्दारुकश्च सः ॥२८॥
अथ द्रुतास्तत्र हयः प्रोक्तः, स्यादथ वेसरः ।
सकृद्गर्भोऽश्वावरजः संतुष्टो मिश्रजः क्षमी ॥२९॥

---

१ खदाशो^CK २ विलम्बिता^B ३ वनगौ^B ४ स्न^B ५ अदतो^B ६ वक्र^CK
७ दाखानि^B

ध्वजोतिभारगो मिश्रशब्दोऽप्यथ महामृगाः ।
वराहमहिषन्यङ्कुरुरुरोहितवारणाः ॥३०॥
समरश्चमरः खड्गो महिषो[1] हरिणस्तु सः ।
चारुनेत्रस्ताम्रमृगः सारङ्गः प्रियकः पुनः ॥३१॥
वातायुः कृष्णसारस्तु कलमः कृष्ण इत्यपि ।
एणोप्यथ पुनर्न्यङ्कु[2]र्वङ्कुणो मृगसंनिभः ॥३२॥
देहेन[3] बहुशृङ्गाग्रो मेघान्ते त्यजति स्वयम् ।
शृङ्गं रौति रुरुस्तेन सोम्भस्तटचरः[4] सदा ॥३३॥
तेनासौ शम्बरादन्योऽथो रामः पुरुषप्रभः ।
विकटोग्रबद्ध[5]शृङ्गो महाशृङ्गो वनप्रियः ॥३४॥
भारशृङ्गोऽपि बिन्दङ्गः शम्बरोऽथ महाजवः ।
वातप्रमीर्वातमृगो जङ्घालो जाङ्घिकश्च सः ॥३५॥
कालपुच्छश्च सीत्कारश्छिंकारो जवनः पुनः ।
अपि स्याद्वेगिहरिणः शिखिरूपोऽथ चित्रलः ॥३६॥
शृङ्गः शाखी च सारङ्गः कुकुवागथ रोहितः ।
वर्णाभ्यां ताम्रकृष्णाभ्यां युक्तः स चतुरोप्यथ ॥३७॥
अधोनिःक्रान्तदशनः करालो भषणाकृतिः ।
रोमभिर्विरलैः स्वल्पैर्युतः कस्तूरिकामृगः ॥३८॥

---

१ माहिषो B २ पुमान्यङ्कु B ३ भेदेन बहुश्रृङ्गाग्रौ B ४ स्नस्त्वचरः B ५ विका-
शोग्रो बहुश्रृङ्गी B

श्वदंष्ट्रस्तु चतुर्दंष्ट्रो दंष्ट्राकर्कटकोप्यथ ।
रङ्कुः शबलपृष्ठः स्यात्[1] द्रुणिडवारोथ यो मृगः ॥३९॥
गोतुल्यश्चाथ गवयः ककुत्सास्नाविवर्जितः ।
गोमृगेन्द्रो[2]ऽप्यथो मत्स्यवर्णोऽसौ चमराकृतिः ॥४०॥
वेगवान्सृमरोथ स्यादुरणो रूपकोप्यथ ।
वरपोतः श्रेष्ठशावोप्यथ[3] स्यात् कृतमालकः ॥४१॥
संघातचार्यथ तनुश्चारोः[4] कः स्यात्स्त्रियां पुमान् ।
स्वल्पा शशाभा गोधाह्वा मातृकापि[5] पृथूदरा ॥४२॥
अन्यागोधाण्डजा ज्ञेया शशकस्तु विलेशयः ।
लम्बकर्णः श्रुतगतिः शूलिको लोमकर्णकः ॥४३॥
रुरु[6]चीनैणहरिणपृषताः शंवरः पुनः ।
सृमरश्च चमूरुश्चेत्येते स्युरजिनाकराः ॥४४॥
प्लवप्लवंगप्लवगप्लवंगमनगाटनाः ।
स्याद्वृक्षशाखापर्णानां पर्यायेभ्यो मृगार्थकः ॥४५॥
उत्तालो वानरः कीशो मर्कटोऽपि बलीमुखः ।
हरिः किखिः कपिः शोणो दधिर्वनगृहार्थकः ॥४६॥
मर्कः[7] कुषाकुः पिङ्गाक्षः पिङ्गो ममर[8] इत्यपि ।
मन्दुराभूषणोऽपि स्यात्तद्भेदाः स्वल्पपुच्छकः ॥४७॥

---

१ स्याद्रुणिडयारो B २ मृगेन्द्रा CK ३ रवो B ४ श्चारोकः B ५ मातृका B
६ चीनेया B ७ कुशाकुः B ८ मरर B

स च स्याद्रक्तगौरास्यः श्वेतः कृष्णमुखोपरः ।
गोलाङ्गूलः श्यामपादकरः श्वेतोऽपि सर्वतः ॥४८॥
सर्वतः कृष्णवर्णोऽपि पिशङ्गो नीलकर्बुरौ ।
गुदस्थलं कपीनां यत्तत्कप्यासमितीरितम् ॥४९॥
इति भेदावानराणामथ पर्णमृगा अमी ।
मुद्गादा मूषकाः[1] पूतिघसाः[2] पादपशायकाः ॥५०॥
प्रघसा[3] वानराद्यास्तेप्यथापि स्युर्विलेशयाः ।
स्याच्छल्यकः शल्यमृगो वज्रशल्की[4] विलेशयः ॥५१॥
स्त्रियां श्वाविच्छली चाथतल्लोम्नि शलली त्रिषु ।
शलं क्लीबेऽथ चमरपुच्छो जवितकौड्कुडौ ॥५२॥
[5]कोकोवाचो धूम्रकः स्याल्लोमशोऽपि विलेशयः ।
नकुलः सूचिवदनः सर्पादी लोहिताननः ॥५३॥
बभ्रुर्वन्ये पुनर्ग्राम्ये चिक्कः स्यादथ मूषकः ।
वृषो[6] दृशोप्याखनिको मूषो मूषीकका द्वयोः ॥५४॥
विलकारी धान्यभक्ष आखुर्मूडदरो नखी[7] ।
बहुप्रजोऽपि खनक उन्दुरुर्मूषिका द्वयोः ॥५५॥
निलेशयो वज्रदन्तो गर्तांटवृषकाण्डकाः ।
आखआखानिकोऽखः स्यात्[8] क्रमुः कर्चश्च[9] भिंबकः ॥५६

१ मुद्गावाBCk २ घस्वाःB ३ मघसा ४ शलीB ५ कोकौवाकोB ६ देशोB
७ मुण्डदरोC मूंडुंडुरो (मूंदुन्दुरो)B ८ क्रमः ९ भिंदृकःB

महामूषस्तु मूषी स्यान्महाङ्गो भित्तिपातनः ।
विघ्नेशाश्वः शस्यमारी[1] भूकलो गिरिसंभवः ॥५७॥
अनेकवर्णो वनजो गिरिका बालमूषिका ।
स्यात्स्वल्पा लम्बतुण्डा तु शुण्डिनी शुण्डमूषिका ॥५८॥
सुगन्धिमूषिका छुच्छूर्गन्धाढ्या प्रतिमूषिका ।
छुच्छुन्दरी राजपुत्री पुच्छलोमा तु [2]वृत्तिकः ॥५९॥
वृत्तोन्दरस्त्रिरेखः स्यान्निहाका तु द्विजिह्विका ।
दारुमुख्याह्वया गोधा गोधिकाऽण्डसमुद्भवा ॥६०॥
त्रिविधा सा स्थूलमध्यसूक्ष्माङ्गा स्यात्तदङ्गजे ।
कृष्णसर्पात्समुत्पन्ने तत्रैव च चतुष्पदे ॥६१॥
गौधेरोपि च गौधारो येन [3]दष्टो न जीवति ।
तृणाञ्चनः क्रकचपात् कृकलासो हलाहलः ॥६२॥
[4] वृतिस्थः सरटश्चित्रकोलश्चापि[5] द्रुमाश्रयः ।
अपि स्यात्कण्टकगृहः प्रतिसूर्यः शयानकः ॥६३॥
दुरारोहो मरुभवे संडाको वनसंभवे ।
[6] सुकंपनोऽतिनीलोथाञ्जनिकाप्यञ्जनाधिका ॥६४॥
हालिनी तत्र स्थूलायां ब्राह्मणी रक्तपुच्छिका ।
जाहको गात्रसंकोची सर्पारिः कामरूप्यपि ॥६५॥

---

१ भूकुलो$^{B}$ २ वृत्तिकाः$^{B}$ ३ दृष्टो$^{B}$ ४ वृत्तिस्थ इति पाठः सर्वत्र ५ थ$^{B}$
६ सकम्पनो$^{B}$

सूचीरोमा पीलुवासो बहुरूपश्च मराडली ।
विरूपी चार्थपल्ली तु मुशली गृहगोधिका ॥६६॥
माणिक्या भित्तिका ज्येष्ठा गृहोली च विसंवरा ।
द्वयोः कुड्याच्च मत्स्यार्था गृहगोधा गृहान्तिका ॥६७॥
मुशली मुषली चाथ तन्तुवायस्तु वायकः ।
ऊर्णनाभश्चोर्णनाभि[1] लूतामर्कटकः कृमिः ॥६८॥
अष्टापदो मर्कटी च जाली तज्जालके पुमान् ।
[2]आशाबन्धस्तद्विभेदास्तेषां भेदाश्च भूरिशः ॥६९॥
विषस्वेदा मर्कटी स्यादजीलाकः हलाहलः ।
[3]वक्रकीटास्तत्प्रभेदा बहवोप्यथ वृश्चिकः ॥७०॥
द्रोणोलिर्ब्रश्चनः शूककीट आलिरली पुमान् ।
आली द्रुणोऽथ तत्पुच्छकराटकेऽलमनव्ययम् ॥७१॥
कारस्कराटिका कर्णजलौका शतपाद्यपि ।
कर्णाज्जलौकः[4] शतपाद्भीरुः शतपदी स्त्रियाम् ॥७२॥
नीलङ्गुरपि नीलाङ्गुश्चित्राङ्गी [5]कृमिवत्कृमिः ।
वम्र्यु[6]पाजिह्विका दीका दिका गेही च [7]सीमिका ॥७३॥
कज्जलाशिन्यपि चटिरुपपाद्युपदी दिविः ।
वल्मीककारिकोद्गेही देवग्रासवरा च सा ॥७४॥

---

१ लूंता[B] २ अंशावन्धC अशाबन्धk ३ चक्रB ४ काःB ५ भूमिवत्कृमिःB
६ पाजिंतक्यB ७ सीसिकाB

[1] पिपीलिका तु हीनाङ्गी बलिष्ठा सिङ्गिनी च सा ।
अपि योजनगन्धज्ञा[2] तद्भेदाः स्युरनेकशः ॥७५॥
कृष्णादिवर्णभेदाच्च गतिभेदादथापराः ।
घृतेंद्यः[3] पिङ्गकपिशास्ताः शुभाशुभसूचकाः ॥७६॥
उदंघाः[4] कपिजङ्घाकास्ताः स्युस्तैलपिपालिकाः ।
शिथिल्यो घृतमल्ल्यस्तु वृक्षपत्रपुटाश्रयाः ॥७७॥
पिशङ्ग [5]रक्तकृष्णाङ्ग्यस्ताः सर्वा मधुरप्रियाः ।
महाङ्गास्तेपि पुंसि स्युर्मत्कुणो मञ्चकाश्रयः ॥७८॥
उद्दंशकश्चोत्कुणः स्याद्रक्ताङ्गो रक्तपाप्यपि ।
उकात्कुणश्चाथ पुनश्चञ्चुलश्चञ्चलः प्लवः ॥७९॥
अथ पत्ररथः पक्षी द्विजो नीडोद्भवः खगः ।
पत्री पतत्री विहगो विहङ्गः पत्रवाहनः ॥८०॥
वृक्षपर्यायसद्मार्थो नभसोर्थाद्गमार्थकः ।
पतङ्गः पित्सन् शकुनिः शकुनो विर्विहङ्गमः ॥८१॥
पुगः[6] शकुन्तः कण्ठाग्निरण्डजो रसनारदः ।
लोमकी कीकसमुखो नाडीचरण इत्यपि ॥८२॥
विकिरो विष्किरः पत्रिर्नगौकाश्च [7]नगौकसा ।
शरडश्च सरण्डापि पतगश्च वयो द्वयोः ॥८३॥

---

१ पिप्पीलिका B २ ज्ञास्तद्भेदा इति सर्वत्र पाठः ३ घृतेंघ्नः B ४ उदंष्या: Ck
५ रक्ता: B रक्ताCK ६ युगः B ७ नगौकसः BO

स्यात्[1] पत्राङ्गी पिपतिषन् [2]नभसंगम इत्यपि ।
पतत् वाजी विहायाः स्याच्छकुन्तिस्ते चतुर्विधाः ॥८४॥
तत्रादौ [3]प्रतुदा गृध्रस्ताच्य[4]श्चिल्लो विजृम्भणः ।
आतायी[4] शबली दूरदर्शी स्याद्भुजगान्तकः ॥८५॥
शाल्मलीस्थो वज्रतुण्डो गरुत्मान् खगराट् पुनः ।
सुमुखः शोभनास्यः स्यान्मणितुण्डस्तरक्षकः[5] ॥८६॥
अपि [6]संघातचारी स्यात् [7]मेरुतुण्डो महाखमः ।
[8] श्येनस्तरस्वी दाक्षाय्यो दूरदर्शी शशादनः ॥८७॥
कामान्धस्तीव्रसंतापः क्रव्यादस्तार्क्ष्यनायकः ।
वेगी खगान्तकः क्रूर एतद्भेदा अनेकशः ॥८८॥
क्षेमंकरीप्रभृतयः पुनर्गोष्ठचरादयः ।
पक्षिशक्रश्च[9] भासश्च गृह्यो विसर इत्यपि ॥८९॥
शालियाजा वडाश्चैव लङ्कवः प्राञ्जिका[10] अणिः ।
रङ्कणाश्चैव संवाणा गृध्रा अपि च वेसराः ॥९०॥
अचण्डिकाः[11] कंविकाश्च द्रोणकाश्चावहावकाः ।
पापर्द्धिरसिकैर्ज्ञेया गन्धमादनसंभवाः ॥९१॥
नीलच्छदस्तु[12]करणो लम्बपर्णो रणप्रियः ।
रणमत्तः पिच्छबाणः स्थूलनीडो भयंकरः ॥९२॥

---

१ पत्राङ्गः B २ नभःसंगम B ३ प्रतुदो B ४ आतापी B ५ क्षकः B ६ संधान-चारी Ck ७ मेरु B ८ श्येन इत्याद्यर्धद्वयं B पुस्तके न दृश्यते ९ भासन्तः B १० अपि B ११ माः B १२ करणो kC

लोहपृष्ठस्तु क्रकरः संदंशवदनः खरः ।
रणालंकरणः क्रूरः [1]कृकरश्चामिषप्रियः ॥६३॥
उपचक्रः श्वभ्रतनुः कृशचञ्चुर्मदान्वितः ।
कङ्कोथ [2]वायसोऽरिष्टः [3]कांरवो गूढमैथुनः ॥६४॥
आत्मघोषो महा[4]लोलश्चिरायुर्मुखरः खरः ।
नाडीजङ्घः काशिकारिः सत्यवाङ् नगरीवकः[5] ॥६५॥
सकृत्प्रजोऽपकृष्टः स्याद्बलिपुष्टो निमित्तकृत् ।
लुण्ठाको बलिभुक्काणः परमृत्युश्च शक्रजः ॥६६॥
ध्वाङ्क्षो रतजरः सूत्री करटः काकमौकुली ।
चलाचलोपि धूर्तः स्याच्छ्रावकोऽथ पलप्रियः ॥६७॥
अरण्यवायसो द्रोणः काकोलो घनवागपि ।
द्रोणकाको महाप्राणः सप्रोक्तः क्रूरवागपि ॥६८॥
उलूकः पेचको घूकस्तामसो घोरदर्शनः ।
घर्घरः काशिकः पीयुर्दिवाभीतो निशाटनः ॥६९॥
नक्तंचरोऽपि काकारिर्दिवान्धः कुधिरित्यपि ।
नखादी[6] चाथ मांसेष्टा दिवास्वापी निशाचरी ॥१००॥
दिवान्धा[7] वक्रविष्टा स्या[8]द्बल्गुनी मातृवाहिनी ।
अपादा पत्तनखराऽधोमुख्यधंजरत्यपि ॥१०१॥

---

१ कृकर B २ वायसा B ३ कारवो BC ४ लोक B ५ चकः B ६ नाखादी B
७ वक्र B ८ द्बल्गुली B

स्वैरिणी चाथ सैवाल्पा जतुकी गृह[1]मोचिका ।
भांकारी चर्म[2]चटिका सैवोक्ता विषस्त्रक्किका ॥१०२॥
अपिच्छाथ मयूरस्तु चन्द्रकी गरलव्रतः ।
गुरुमार्जारनीलेभ्यः कण्ठः केकी शिखाबलः ॥१०३॥
भुजङ्गभोजी पत्राढ्यः शुक्लापाङ्गः शिखण्ड्यपि ।
चित्रपिच्छः कलापी च मेघमत्तः शिखी ध्वजी ॥१०४॥
प्रचलाकी बर्हिणोपि वर्ही तिलशिखीति च ।
मेघनादानुलासी स्याच्चित्रमेखल इत्यपि ॥१०५॥
कलापो बर्हभारेस्य पिच्छबर्हे च न स्त्रियाम् ।
शिखण्डी च शिखण्डो ना नेत्रं षण् चन्द्रिका स्त्रियाम् १०६
प्रचलाकः शिखा चूडा मेचकः पुंसि[3] तद्ध्वनौ ।
[4]केकाथा [5]पस्वरः क्रौञ्चः क्रुङ् स्यात्पङ्क्ति[6]चरः पुनः॥
शरत्पक्षी वक्रचञ्चूरक्तको रात्रिजागरः ।
[7]शेवलादः पुण्डरीकनयनो लोहिता तु या ॥१०८॥
रोहिणी स्याल्लोहिताङ्गाप्यथोत्क्रोशः स्त्रियां पुमान् ।
कुररः खरशब्दः स्यान्नीलक्रौञ्चोतिजागरः ॥१०९॥
दीर्घग्रीवश्च नीलाङ्गो वकस्तु शुक्लवायसः ।
वकोटस्तापसः कङ्कस्तीर्थजङ्घो निशान्तकः ॥११०॥

---

१ माच्चिकाB २ वटिकाk ३ तद्धनाCK ४ ककाCK ५ पि स्वरःB ६ चरेCK
७शावलादःCk

तीर्थसेवी मृषाध्यायी मीनघाती शिखी पुनः ।
कङ्केरुर्निश्चलाङ्गः स्याद्बकश्चन्द्रविहङ्गमः ॥१११॥
स्त्रीदत्तवलिभुक् चाथ वलाका [1]विषकण्ठिका ।
शरारिरारिराटिश्च शरार्यातिरित्यपि ॥११२॥
शराविश्च शराली च पुरुषत्वे स्त्रियामिमे ।
वलाहका वकेरुः स्त्री मेघानन्दा जलाश्रया ॥११३॥
धर्मान्तकामुकी श्वेताथोत्क्रोशो मत्स्यनाशनः ।
कोयष्टिष्टिट्टिभष्टिष्टिः कुररो जलकुक्कुटी[2] ॥११४॥
कारण्डवः काकवक्त्रो दीर्घाङ्घ्रिः[3] कृष्णवर्गका ।
प्लवो महाप्रमाणः स्यात्प्रसेवक[4]गजश्च सः ॥११५॥
मृणाल[5]कण्ठःकाकस्तु वलाकः स्यादथापरः ।
[6]आटीभेदे तु पत्राटी स्यान्नान्दीमुख इत्यपि ॥११६॥
कुलवारी लघुश्चित्रवर्णश्चित्राङ्गदोप्यथ ।
मद्गुस्तु जलकाकः स्यादथान्या जलकुक्कुटी ॥११७॥
कृष्णवर्णाथ [7]काचाक्षो मल्लिकाक्षः कर्पादिका ।
आकाशे सुचिरं भ्रान्त्वा जले पतति लोष्टवत् ॥११८॥
शुक्लाक्षः शुक्लशवलोप्यारी त्वारामुखी पुनः ।
चक्रः कोकश्चक्रवाको निट्पर्यायवियोग्यपि ॥११९॥

---

१ विसकण्ठिकेत्यन्यत्र २ कुक्कुटिः B ३ दीर्घाङ्घ्रिः B ४ गत C ५ कण्डू Ck ६ आरी B ७ काकेक्षो K

भूरिप्रेमा द्वन्द्वचारी रथाङ्गो राविषोऽपि च ।
कामी सहायो गोनर्दः कान्तोऽथ मणितारकः ॥१२०॥

अथ हंसस्तु चक्राङ्कश्चक्राङ्गो वरटश्च सः ।
श्वेतपक्षो मानसौका मौक्तिकाशन इत्यपि ॥१२१॥

राजहंसः सितो रक्तैरक्षिचञ्चुपदैः पुनः ।
मलिकाक्षो[1] मल्लिकाक्षो[2] मल्लिको पिच्चधूसरैः ॥१२२॥

सितेतरैर्धार्तराष्ट्रा मरालो धूसरच्छदः ।
कादम्बः कलहंसः स श्यामधूसरपक्षकः ॥१२३॥

अभव्यः स च हंसः स्यादथ लक्ष्मणसारसौ ।
[3]लक्ष्मणो रसिकः कामी काकुवाक्कामिवल्लभः ॥१२४॥

नीलकण्ठः पुष्कराह्वो लक्ष्मणा लक्षणापि च ।
लक्षणी लक्ष्मणी च स्याद्गन्धोली वरटा द्वयोः ॥१२५॥

तद्धंसी च चक्राङ्गी चक्राङ्की मृदुगामिनी ।
गन्धोलिरपि गन्धाली वराला वारलापि च ॥१२६॥

वरला वारटी चापि वरटी च स्त्रियामिमाः ।
ये प्लवा एव ते सर्वे विज्ञेयाः क्षुद्रसारसाः ॥१२७॥

ते श्वेतचित्रधूम्राद्यनामान्त्याः स्युरनेकशः ।
संरावान् पद्मनेत्रश्च पद्मकन्दाद इत्यपि ॥१२८॥

---

१ मल्लिकाक्षो BK २ मल्लिकाख्यो B ३ लक्षण इति स्यात् ।

श्वेतोदरः श्यामपृष्ठः [1]कोनीलो जलवर्त्रिका ।
पुष्करा[2]च्छायिका पद्मशायिन्यथ च विष्किराः ॥१२९॥
ताम्रचूडो विवृत्ताक्षः कुक्कुटश्चरणायुधः ।
कालज्ञः कृकवाकुः स्यान्नियोद्धा नखरायुधः ॥१३०॥
बहुप्रजः शिखण्डी च विष्किरः स्यादुषःकलः ।
कामकाकुरवो झिल्लीकण्ठोपि गुणलोचनः ॥१३१॥
वतः पतः परापारापारेभ्यश्चातिमानवान् ।
स्यान्मदनमोहनवाग्विलासी रक्तनेत्रवान् ॥१३२॥
कण्ठारवो गृहार्थेभ्यः कपोतोप्यथ कामुकः ।
[3]अंह्रिपिच्छः कलरवो [4]वग्देशी छुल्छुलारवः ॥१३३॥
कोकथुस्तु वनोद्भूते धूसरो धूम्रलोचनः ।
भीषणोग्निसहायः स्याद्दहनो गृहनाशनः ॥१३४॥
भेदा एषां बहुविधा गृह्याणां वनचारिणाम् ।
पुंस्कोकिलः कलरवः पिको मदनपाठकः ॥१३५॥
वसन्तदूतो वासन्तः कोकिलो मधुगायनः ।
कुहूरवः परभृतः सुधाकण्ठो वनप्रियः ॥१३६॥
घोषयित्नुः[5] कामतालो मदोल्लापी रतोद्वहः ।
[6]सुतर्दनोऽपि ताम्राक्षः कलकण्ठा कुनालिकः ॥१३७॥

---

१ कानीलेB २ च्छादिकाCK ३ अङ्घ्रिB ४ वाग्देशीB ५ घोषयित्नुःB
६ सुदर्शनोऽपिB

मत्तः कालोपि कामान्धो गन्धर्वश्चास्य तु प्रिया ।
कोकिला मधुरालापा कामगा वनभूषणा ॥१३८॥
अन्यपुष्टाप्येवमेवमुन्नेया अथ कीरके ।
शुको मेधातिथिर्मञ्जुपाठकः प्रियदर्शनः ॥१३९॥
मेधावी रक्तचञ्च्वर्थः श्रीमान्वाग्मी फलाशनः ।
नृपप्रियो राजशुकः शतपत्रश्चमर्यपि[1] ॥१४०॥
काष्ठपर्णशुकास्ते स्युर्गुरुमध्याल्पविग्रहाः ।
रक्तकृष्णोत्तमाङ्गास्ते रक्तपीतादिचञ्चवः ॥१४१॥
नीलपीतश्यामरक्तचित्रवर्णा अनेकशः ।
सारिका मधुरालापा दूती मेधाविनीति सा ॥१४२॥
गोराटी गोरिका मूली शरभी गोकिराटिका ।
हुद्दोलिका[2] चित्रपादा [3]चित्राङ्गी कलहप्रिया ॥१४३॥
पीतपादा वङ्कुला [4]हुड्डली प्रियवादिनी ।
[5]जीवंजीवस्तु रक्ताक्षश्चकोरो विषसूचकः ॥१४४॥
कौमुदीजीवनो जीवजीवकश्चन्द्रिकाशनः ।
कौमुदीजीवनोङ्गारभक्षोप्यथ च चातकः ॥१४५॥
घनारवश्च वापीहः सारङ्गो मेघजीवनः ।
वर्षप्रियस्त्रिशंखः स्यात्स्तोको बभ्रुर्हरीतकः ॥१४६॥

---

१ पद्म्यपि B । २ हृदो(हृदो)लिका B. ३ चित्राची B ४ हृदली B ५ जीव-

कपिञ्जलोपि हारीतस्तञ्जलो जिनपत्रिका ।
जतूका[1] जतुकापि स्यात्परोष्णी [2]तैलपाप्यथ ॥१४७॥
गोप्रेरको भृङ्गराजो द्विपुच्छाग्रो वनप्रियः ।
सुचूडशीर्षो वाचालः सत्यवाक् स्यादथापरः ॥१४८॥
भृङ्गः कलिङ्गो धूम्याटोप्यथ स्याद्दारुणोऽस्त्रियाम् ।
काष्ठ [3]कूटः कर्बुराङ्गो दार्वाघाटोऽथ खञ्जनः ॥१४९॥
खञ्जरीटः[4] कणाटीनो मुनिपुत्रश्च तातलः ।
काकच्छदः कणाटीरः शिखादृश्यस्त्रिशङ्कुकः ॥१५०॥
शेवधिस्था[5]न सुरतो भद्रार्थः खण्डलेखकः[6] ।
व्याघ्राटस्तु भरद्वाजो दीदिविस्तु [7]किकीविकः ॥१५१॥
किकीदिविः स्वर्णचूडो नन्दिवर्द्धन इत्यपि ।
विशोकः स्वस्तिकश्चाषश्चित्रवाजोऽपराजितः ॥१५२॥
मणिकण्ठो महायोगी नीलाङ्गः पुण्यदर्शनः ।
कलविङ्कस्तु चटकः कामुको नीलकण्ठकः ॥१५३॥
कुलिङ्गश्चटका तत्स्त्री पुमपत्ये तु तद्भवे ।
[8]चाटकैरस्त्र्यपत्ये तु चटकाप्यथ वर्त्तिका ॥१५४॥
[9]गांजीकायो वर्त्तकोऽपि वर्त्ती कुब्जस्तु धूसरः ।
अरण्यचटको भूमीशयस्तु स्वल्पसंचरः ॥१५५॥

---

१ जतूकेत्यर्धं C पुस्तके नास्ति २ तैळपायिका B ३ कुट्टः B ४ खञ्जरीटइत्यर्धद्वयं B पुस्तके नास्ति ५ सेवधि k ६ खेलकइति स्यात् ७ किकीदिविः Ck: ८ केर B ९ गोजिकायो k कांजीकाया B

भोरिटः श्यामचटकः शैशिरः कणभक्षकः ।
गृहकर्तृक्षमो भीरुः कृषि[1]द्विष्टः कणप्रियः ॥१५६॥
नीलग्रीवो रक्तशिराः शुक्लपक्षो वनेचरः ।
कुरुबाहुः कुरुकुरुः स च [2]वाध्रीणसोऽथ च ॥१५७॥
स स्यात्कृष्णोदरशिरा वर्णतः कृष्णकर्बुरः ।
पन्थालकः[3] पुंसि भवेत् स्त्रियां स्याद्यवगण्डिका ॥१५८॥
सारङ्गश्चटकाकारः कृशकण्ठोऽथ हंसका ।
हुंकारकारका पाण्डुरोदरापि गुरूण्डुका ॥१५९॥
नीलच्छविः कृष्णगलः स ग्रामचटकाकृतिः ।
ककुभः ककुभाकारः स्थलजो रक्तपर्णकः ॥१६०॥
[4]चटहा चटघातिन्यां चिरीटी तु चिरण्टिका ।
[5]फाशब्दकारी फाकारो दुन्दुभिर्दुन्दुभिध्वनिः ॥१६१॥
गोपपुत्रस्तु लोपाको दात्यूहः कालकण्ठकः ।
अत्यूहोऽपि च दात्यौहो मासज्ञोऽपि च सः स्मृतः ॥१६२॥
क्रतुयष्टिस्तु यज्ञार्हो गिरिशा गिरिशाविका ।
गोक्षेडः स्यात्तु खदिरवर्णपक्षोप्यथापरः ॥१६३॥
डिण्डिमाणो डिण्डिमवच्छब्दोथ मञ्जुलीयकः ।
मञ्जुनादोऽथ त्रपुषो रञ्जकस्तु प्रियात्मजः ॥१६४॥

---

१ द्विष्टा Ck २ वाध्री B ३ यथालकः Ck ४ चटहा वट B ५ काशब्दकारी काकारो B

सूचीचञ्चुः पीतशीर्षः [1]सुगृहश्चाथ सर्षपा ।
खण्डालिका हालिपुत्रा तुच्छिका स्फोटिकाप्यथ ॥१६५॥
कुमारी पोतकी श्यामा ब्रह्मपुत्री धनुर्धरी ।
पाण्डवी पुत्रिका मोह्वा चटिका विष्णुलिङ्ग्यपि[2] ॥१६६॥
दुर्गोमाप्यथ गोवत्सा पुच्छाधोरक्तवर्णका ।
[3]पर्यंटिका कर्णिकिका रलालट्वापरा च सा ॥१६७॥
पुच्छार्धःपीतवर्णाथ फेञ्चः[4] पोटियकः पुनः ।
श्रीकर्णो नीलचटक इत्याद्या अथ तित्तिरिः ॥१६८॥
तित्तिरस्तैत्तिरोऽपि स्या[5]द्याजुषश्चापि कञ्जुलः ।
लघुमांसोऽथ [6]गौरो यः स कपिञ्जल ईरितः ॥१६९
यस्तु स्यात्पाण्डुकपिलः स कुतित्तिर इत्युत ।
चित्रवर्णस्तु ककुभो [7]वर्त्तीरोल्पकपिञ्जलः ॥१७०॥
वर्त्तिका वर्त्तकावर्त्तो वर्त्तकोऽपि च शब्दितः ।
तस्मिंल्लघुतरे पुंसि लवी लावो लवः[8] पुनः ॥१७१॥
तत्ररक्ते रक्तवर्त्मा वागुदस्तु गणाधियः ।
करढो व्याधनः [9]कर्चूर्नरः कूणिः कुमारकः ॥१७२॥
वर्त्तिका शाकुनेयस्तु [10]चुडो वृक्षाश्रयी पुनः ।
भयंकरो विशालाक्षो बृहद्रावी ततः पुनः ॥१७३॥

---

१ सुगृहB २ विष्फुलिङ्ग्यपिB ३ पर्यंटिकाB ४ केञ्चः पारियकःB ५ याजुयB ६ गौरेयःB ७ वत्तीरोCK ८ पुमान्B ९ कच्छू'B १० छुम्रोB

डुंडुलः पिङ्गलोऽथ स्युः कीटास्तत्र तमो मणिः ।
प्रभाकीटः कीटमणिः [1]खद्योतो द्योत इत्यपि ॥१७४॥
ज्योतिषोपी[2]ङ्गिणो माली वीजः स्यादुपसूर्यगः ।
पतङ्गः शलभोऽपि स्याद्भ्रान्तचित्रो निमेषरुक् ॥१७५॥
तैलकीटस्तु षड्बिन्दुस्तैलिनी द्रुनाशिनी ।
शक्रगोपस्तु वैराटिर्वर्षाभू स्तिन्तिभोऽग्निकः ॥१७६॥
रक्तवर्णश्चाग्निरजो भ्रमरस्तु [4]शिलीमुखः ।
रोलम्बः षट्पदो भृङ्गो मधुकृन्मधुपश्च सः ॥१७७॥
पुष्पंधयः कलालापो द्विरेफो मधुलोलुपः ।
इन्दिन्दिरोलिर्झंकारी भसलो भ्रमरोऽपि च ॥१७८॥
अली च चञ्चरीकः स्यात्पर्यायान्मधुपुष्पयोः ।
लिट्पः कीटः पालिपालौ पालितः सूदनः पुनः ॥१७९॥
भृङ्गराजश्चालिमको मधुलेही मधुव्रतः ।
वेणुपर्यायवासी स्याद् भ्रमरी कोशकारिका ॥१८०॥
पेशस्करी कीटयोनिर्मक्षिका कीटसंभवा ।
कीटमाता वान्तिकरा वर्वणा नीलमक्षिका ॥१८१॥
[5]भम्भरीली कर्बुराङ्गा [6]जीवत्क्रमिपुरीषका ।
[7]पायला त्वमृतोत्पन्ना वमनी सरघा [8]सरट् ॥१८२॥

---

१ स्यादुद्योतितB २ ङ्गणोB ३ स्तित्तिभोB ४ शिलामुखःB । ५ भम्भरो (रा) ली B ६ जीवत्क्रिमिपुरीषगाB ७ पापला ८ सराट्B

[1]मध्वर्थमक्षिकापि स्यात्तद्भेदाः क्षुद्र[2]वर्वणा[3] ।
गान्धारी वरदा क्षुद्रा क्रूरा सा स्वल्पपिङ्गला ॥१८३॥
अथ स्युः [4]पुत्तिकाः कृष्णवर्णा मशकसंनिभाः ।
वृक्षकोटरगाः स्थूलपिण्डिका अथ पातकाः ॥१८४॥
बृहत्यो मक्षिकाः पीता भ्रमर्योऽल्पा इतोप्यथ ।
तीक्ष्णा[5]स्या मक्षिकाः पीतवर्णा अर्घा अथापराः ॥१८५॥
वर्णतः पीतकपिला गन्धोली वरटा द्वयोः ।
अथ दालाः पीतवर्णास्ताश्च वृक्षदलाश्रयाः ॥१८६॥
दंशो दुष्टमुखः क्रूरो रुरुत्वक्संभवः स च ।
दंशी तज्जातिरल्पा सा क्षुद्रिका वनमक्षिका ॥१८७॥
मशको वज्रतुण्डः स्यात्सूच्यास्यः सूक्ष्ममक्षिकः ।
नीलाभः स्याद्रणरणो धूमलो रात्रिजागरः ॥१८८॥
झिल्ली चिल्ली चिरी चीरी झिल्लिकाचिल्लिके समे ।
चीरिका चीरुकी चीरुर्झिरुका झीरुकापि च ॥१८९॥
[6]झिरी झीरी चाथ[7] जर्त्ती पुनश्चर्मचटी च सा ।
जिनपत्रा तु जतुका जतूकाप्यथ पूर्णिका ॥१९०॥
[8]नासाच्छिन्दी च वरटी पराष्णी तैलपायिका ।
स्याद्वरोल्यथ पत्राण्डसंभवा तु [9]बकेरुका ॥१९१॥

---

१ मध्वार्थB २ वर्पणाB ३ भम्भरीलीत्यादि वर्वणान्तमर्धत्रयंK पुस्तके नास्ति ४ पुत्रिकाःKD पूतिकाःB ५ स्यान्मB ।. ६ झिम्भीB ७ जातीB ८ नासाच्छिन्नीति स्यात् ९ बकेरुहाB

गोमक्षिकाथ यूका स्यात्षट्पदी स्वेदसंभवा ।
[1]उकण्येोकोदनी वाल[2]कीट ओकोरणीति च ।।१९२।।
गोपालिका [3]केशटीका पक्ष्मजा पक्ष्मषट्पदी ।
श्वेतयूकाङ्कवस्त्रोत्था पशुयूका पशूद्भवा ।।१९३।।
महिषस्था महद्यूका लिक्षा यूकाण्डमित्यथ ।
गर्दभी तु गोमयोत्था [4]महाभीरुरितीरिता ।।१९४।।
विलोमगतिरित्याद्या विज्ञेयाः कीटजातयः ।
तृणादिना स्वकौशल्याच्छाखिशाखासु निर्मिते ।।१९५।।
स्थानेथवा कोटरादौ भृग्वादीनां दरादिषु ।
शाखान्ते वा लम्बमाने कुलायस्तु पुमानयम् ।।१९६।।
त्रिषु नीडं पक्षिगृहं स्यात् [5]क्लीबेऽथाण्डमस्त्रियाम् ।
कोशोऽस्त्रियां स्त्रियां पेशिः पेशी कोषोऽपि वा स्त्रियाम् ।।१९७
स्त्रियां चञ्चुश्च चञ्चूश्च त्रोटिस्त्रोटी सृपाटिका ।
स्त्री पक्षतिः पक्षती द्वे पक्षमूले छदोऽस्त्रियाम् ।।१९८।।
वाजः पक्षः पतत्रं स्यात्पिच्छं पत्रं तनूरुहम् ।
गरुत्स्यादथ संप्रोद्भ्यो डीनान्येषां गतिक्रियाः ।।१९९।।
समूहविसरव्यूहसंदोहनिवहप्रजाः ।
स्तोमौघवारसंघातनिकरव्रातसंचयाः ।।२००।।

---

१ उकण्यौको B २ कीटतुंको ३ केशोत्यादिमहद्यूकान्तं K पुस्तके नोपलभ्यते
४ मेहा C ५ षण्ड B

निचयः प्रचयश्चैव प्रकरश्चाकरः पुनः ।
समुदायः समुदयः समवायो गणश्च यः ॥२०१॥
जा चापि च जालं च पेटकं काण्डमस्त्रियाम् ।
पटली संहतिर्वृन्दं निकुरम्बं कदम्बकम् ॥२०२॥
राशि योः स्त्रियां राशी पुञ्जो पुञ्जश्च पुञ्जकः ।
पुंसि क्लीबे च कूटं स्यादुत्करोऽपि च पुंस्ययम् ॥२०३॥
पशूनां समजोन्येषां समाजः स्यात्सधर्मिणाम् ।
ये विश्वस्ताः पक्षिमृगास्ते छेका गृह्यकास्त्रिषु ॥२०४॥
पक्षिणा येन गृह्यन्ते पक्षिणोऽन्ये स दीपकः ।
[1]कापोतशौकमायूरतैत्तिरादीनि तद्गणे ॥२०५॥
स्त्री द्वयी द्वितयं द्वन्द्वे युगलं [2]यमलं युगम् ।
स्त्रीपुंसौ मिथुनं युग्मं द्वैतं च युतकं मिथु ॥२०६॥
यमलं त्रितयं जातं समस्तं स्त्री त्रयी त्रयम् ।
कल्पद्रौ केशवकृते फलिते नामसत्फलैः ॥२०७॥
एकादशः [3]सरभादिः प्रकाण्डः सिद्धिमागतः ।

---

गिरिर्गोत्रोचलः शैलः स्थावरो धातुभृद्धरः ।
कुकीलः सानुमान्व्यंशो[4] जीमूतः पृथुशेखरः ॥१॥

---

१ कापोताशोकCK २ यामलंB ३ शरभादिःCK ४ न्यंशोB

कटक्यहार्यः शिखरी नगो दन्ती शिलोच्चयः ।
ऐरावतोऽगो भाकूटः कुट्टारो दर्दुरः स्थिरः ॥२॥
गोत्रोऽद्रिः पर्वतः प्रस्थशृङ्गवृत्तेभ्य एव वान् ।
भूपर्यायधरो भूध्रः स च स्यात्कन्दराकरः ॥३॥
अथाकराकरोथ स्यात्सुमेरुः कर्णिकाचलः ।
स्वःस्वर्गिस्वर्णपर्यायगिरिपर्याय इत्यपि ॥४॥
मेरुः स्यादुत्तराद्रिस्तु गिरिपर्यायराडपि ।
हिमपर्यायतः प्रस्थालयवान्मेनकापतिः ॥५॥
कुबेरगिरिपर्यायो भवानीगुरुरित्यपि ।
हिरण्यनाभमैनाकसुनाभानां तथा गुरुः ॥६॥
श्वेताद्रिरथ नीहारस्तुषारस्तुहिनं हिमम् ।
प्रालेयं मिहिका चाथ हिमानी हिमसंहतिः ॥७॥
शीतं गुणे तद्वदर्थं[1] सुषीमः शिशिरो जडः ।
तुषारः शीतलः शीतो हिमः सतान्यलिङ्गकाः ॥८॥
रात्रिंदिवं हिमाधिक्यं यत्तु [2]हिमहर्दिवम् ।
[3]उज्झटिर्धूममहिषी रतान्धा च [4]कुहेलिका ॥९॥
धूमिका [5] स्यान्नभोरेणुपर्यायार्थात्कुहीति च[6] ।
रजताद्रिस्तु कैलाशोऽष्टापदः स्फटिकाचलः ॥१०॥

१ तद्वदर्थो B २ हिमदुर्दिनम् B ३ कुज्झटि B ४ कुहेटिका B ५ च नभो B
६ पि कुहीति च B

शिवपर्यायवासार्थः कैलासो हिमवद्धसः ।
क्रौञ्चः क्रोञ्चो गुहहृतः पुंसि क्लीबे युगंधरम् ॥११॥
अपि किष्किन्ध किष्किन्ध्यौ वानराणां गिरौ द्वयम् ।
दक्षिणाचल आषाढो माल्यवान्मलयोऽस्त्रियाम् ॥१२॥
रौहिणश्चन्दगिरिर्विन्ध्यस्तु जलवालुकः ।
वेङ्कटाद्रिः केसरी स्यात्सिंहः[1] केशववल्लभः ॥१३॥
सह्याचलस्तु मूर्द्धाद्रिस्त्रिकूटस्त्रिककुच्च सः ।
रेवोद्भवे तूपविन्ध्यमेकलामरकण्टकाः ॥१४॥
सुवेलः स्यात्त्रिमुकुट इन्द्रकीलस्तु मन्दरः ।
उज्जयन्तो रैवतः स्यात्सुदारुः पारियात्रकः[2] ॥१५॥
वारिपात्रो ऽथास्त्रियां स्याद्गन्धमादनमित्यपि ।
ऋश्यमूको रिश्यमूको मूर्द्धन्यमध्यगान्तकाः[3] ॥१६॥
लोकालोकश्चक्रवालश्चित्रकूटादयः परे ।
कूटोऽस्त्री शिखरं शृङ्गं प्रपातस्त्वतटो भृगुः ॥१७॥
मेखला मध्यभागोऽद्रेर्नितम्बः कटकोऽस्त्रियाम् ।
द्रोणी तु शैलयोः संधिः स्यात्प्रस्थः सानुरस्त्रियाम् ॥१८॥
पुमान्स्नुः स्यादथ गुहा दरी स्त्री कन्दरस्त्रिषु ।
दरिर्विलं[4] देवखातमखातं गह्वरी स्त्रियाम् ॥१९॥

---

१ हिंसहरः केशवल्लभः:Ck २ पात्रकः:B ३ तुगाCk । ४ विंलेCK

शिलोच्चयगतास्ते स्युः पादाः प्रत्यन्तपर्वताः ।
प्राग्भारा दन्तकास्तिर्यगद्रेर्याता बहिश्च ये ॥२०॥
अधिरूढाधित्यकाद्रेरासन्ना भूरुपत्यका ।
गिरेः पतत्प्रवाहे स्याज्झरी झरिरुभे स्त्रियौ ॥२१॥
द्वयोर्झरो निर्झरो ना स्फटिकः स्फाटिकः पुमान् ।
नर्यश्मा प्रस्तरो ग्रावा पाषाणश्चोपलोऽस्त्रियाम् ॥२२॥
स्त्रियां धृषद्धृशच्चापि दृशद्दृषच्छिलापि च ।
खनिः खानिः खनी खानी स्यात्स्त्रियामाकरश्च ना ॥२३॥
गुञ्जा स्त्रियां सुवर्णादिजन्मभूर्द्धातुकः पुमान् ।
शुक्लधातौ पाकशुक्ला कठिनी खटिनी खटी ॥२४॥
गैरिकं रक्तधातुः स्याद् गिरिज्वरसमुद्भवम्[1] ।
गिरिनद्धं गिरिणद्धं गिरिसंबद्धमित्यपि ॥२५॥
वनादि[2] मृगपक्ष्यादि धात्वादि सकलं त्रिषु ।
कल्पद्रौ केशवकृते फलिते नाम सत्फलैः ॥२६॥
सिद्धिं गतः प्रकाण्डोऽयं द्वादशः पर्वतादिमः ।

---

समुद्रः सागरः सिन्धुस्तरिषस्तारिषोऽर्णवः ।
लौहित्यस्तरणिर्धेनः पारावारो महाशयः ॥१॥

१ समुद्भवः B २ वनादि OK ।

तरीषो नभसः पेरुरुदन्वान्पृथिवीप्लवः ।
गङ्गाधरो महाकच्छो मितद्रुर्दारदश्च सः ॥२॥
दैत्यदानवशैलानां पर्यायेभ्यो गृहार्थकः ।
तिम्यूर्म्यर्थपदान्माली कोशार्थोपि पलंकषः ॥३॥
जलपर्यायराशिर्धिर्निधिर्नदनदीपतिः ।
पारावारोप्यकूपारो महीप्रावरणार्थकः ॥४॥
विततश्चन्द्रपर्यायजनको यादसां पतिः ।
रत्नाकरोऽपि जलदस्तद्भेदा लवणादयः ॥५॥
अपि ते स्युः सुरासर्पिर्दधिक्षीरपयोमयाः ।
स्वस्वापिधान [1]पर्यायात्सिन्धुपर्यायवाचकः ॥६॥
स्त्रियां तृप्तिरिरापः स्त्री भूम्नि पुंसि रसो द्वयोः ।
गौः क्लीबे प्राणदं क्षीरं वाश्चापि सलिलं जलम् ॥७॥
कृपीटं कमलं सारं क्षीरं विषमिदं घृतम् ।
कबन्धमुदकं पाथः कीलालं पुष्करं [2] सरम् ॥८॥
वनं पवित्रममृतं कंवलं कं कुलीनसम् ।
पानीयं पिप्पलं पीथं पातालं सर्वतोमुखम् ॥९॥
जीवनं भुवनं थादः[3] पावनं क्षणदं दकम् ।
अम्ब्वम्भः शंवरं तोयं कोमलं धरुणं सुखम् ॥१०॥

---

१ पर्याया:Ck २ सरः:Ck ३ पादः:Ck

घनपर्यायतः पुष्पं नीरमर्णश्च वारुणम् ।
निम्नगं दहनारिः स्यात्सरिलं कर्बुरं मधु ॥११॥
दैव्यं सलं विषं यादःपर्यायेभ्यो गृहार्थकम ।
ऋतमापो बन्धकं षण् न ना वारि कमव्ययम् ॥१२॥
काण्डोऽस्त्रियां घनरसो नरा नारा अपि स्त्रियाम् ।
भूम्नि गावः स्त्रियां भूम्नि गौः स्त्रियामपि सर्वतः ॥१३॥
इरा जडं जीवनीयं चलोदे संवरं कुशम् ।
शिवं शवं[1] शरं क्लीबे वा स्त्रियां स्यादुडूरुडुः ॥१४॥
सरः पुंस्यथ सामुद्रं मृगादिवृष्टिजे जले ।
आश्विने जलदैर्मुक्तमम्बु स्वातिविशाखयोः ॥१५॥
तत्र गाङ्गं दिव्यमपि धारं स्यादन्तरिक्षजम् ।
पार्थिवं पृथिवीजातं तत्कौपं च खनित्रिमम् ॥१६॥
[2]औद्भिदं तु झरोद्भूतं स्वयं जातमथ त्रिषु ।
स्यादाप्यमम्मयाप्यूह्यं वीचिर्वीची स्त्रियां पुमान् ॥१७॥
ऊर्मिर्द्वयोस्तरङ्गो ना भङ्गो भङ्गि स्त्रियामियम् ।
भङ्गी च लहरी वीचा लहरिश्चोर्म्यपि स्त्रियाम् ॥१८॥
त्रिष्वगलं महत्सु द्वौ कल्लोलोल्लकावुभौ ।
[3] पुटे भेदो वङ्कचक्रे भ्रमश्च जलनिर्गमः ॥१९॥

१ शवंB २ अद्भिदंCk ३ पुटभेदोB

तटं त्रिषु प्रतीरं च तीरं रोधश्च रोधसम् ।
स्यादथास्त्री परं पारं पारेपारमवारकम् ॥२०॥
पारावारे परार्वाची तीरे पात्रं तदन्तरम् ।
द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम् ॥२१॥
अम्मुंक्तमस्त्री पुलिनं सैकतं सिकतामयम् ।
मर्यादा तटभूमिः [1]स्त्री वेला स्याद्वृद्धिरम्भसः ॥२२॥
डिण्डीरोऽब्धिकफः फेनो [2]बुद्बुदस्थासकौ समौ ।
निषद्वरोऽस्त्री [3]जम्बालं तस्मिंस्तु कलिलो घने ॥२३॥
अपि तु स्या[4]त्पत्रयुक्ते पङ्कः कर्वटिकोऽस्त्रियाम् ।
दमः कर्दमशादौ च कूपकास्तु विदारकाः ॥२४॥
परिवाहः परीवाहो जलोच्छ्वासेऽथ निम्नके ।
गभीरमतलस्पर्शं गम्भारं चाप्यमी त्रिषु ॥२५॥
[5]स्थाघमस्थाघं चागाधं मस्तारं त्रिष्वमूनि च ।
तद्वस्तुन्यप्यथोत्तानमगाधार्थविपर्यये ॥२६॥
अनच्छं त्वप्रसन्नं स्यात्कच्चरं मलिनं पुनः ।
किट्टरं पुष्पितं सेव्यं शालूकं किट्टिमं चलम् ॥२७॥
दोहलं कलुषं चान्धमाविलं तद्विपर्यये ।
निर्मलं च त्रिषूत्तानात्पुंस्यगाधजले ह्रदः ॥२८॥

---

१ स्त्री वेलेतिB पुस्तके नोपलभ्यते २ वुद्वुदाB ३ जम्बालस्तस्मिंस्तुB
४ स्यात्स्येवB ५ स्थायमस्थायं चागाधमस्तारंB

सचाप्य[1]प्रवहार्थः स्याद् भिद्यउद्ध्यो [2]द्रहोऽपि च ।
वहः सरस्वान्प्रवहः प्रवाहो रोध इत्यपि ॥२९॥
तरङ्गिणी सागरगा तटिनी चञ्चला धुनी ।
स्रोतस्विनी द्वीपवती तलोदा ह्रदिनी नदी ॥३०॥
स्रवन्ती निम्नगा स्रोत्या सिन्धुः [3]सस्नुत्सरस्वती ।
ऋषिकुल्यापगा [4]माता धेना कूलंकषा शिफा ॥३१॥
अपगार्णा निर्झरिणी रोधश्चक्राच पार्वती ।
रोधस्वती समुद्रस्त्री ह्लादिनी च वहा धुनिः ॥३२॥
हिरण्यवर्णा कर्पूः स्यात्सरिज्जम्बालिनीत्यपि ।
इरावती रोधवक्रा रुजानाथ त्रिमार्गगा ॥३३॥
[5] देवनद्याश्च पर्याया शिवपर्यायशेखरा ।
स्यात्पदी विष्णुपर्यायात्त्रिस्रोता भीष्मसूस्त्रियाम् ॥३४
सिद्ध[6]नद्याश्च पर्याया धर्मद्रव्यपि गान्दिनी ।
गङ्गा त्रिपथगापि स्यात्सुरा[7]लम्बगमा पुनः ॥३५॥
हिमाद्रिपर्यायसुता स्वर्गपर्याय[8]वाप्यपि ।
जह्नोर्भगीरथस्यापि प्रजार्था च कुमारसूः ॥३६॥
यमुनायम्यर्कसुता कालिन्दी च यमस्वसा ।
एवं तापी तु तपनी शनिपर्यायतोनुजा ॥३७॥

---

१ प्रवहार्यः Ck २ प्रहो B ३ सस्रुत् BC ४ मात्रा B ५ देवनद्योश्च Ck
६ नद्योश्च CK ७ लयगमा B ८ वाच्यपि B

रेवा तु नर्मदा सोमोद्भवा स्यान्मेकलाद्रिजा ।
स्यात्पूर्वगङ्गापर्याया मुरला च [1]मुरंदला ॥३८॥
स्यादर्द्धगङ्गा काबेरी वासिष्ठी [2]गोमती पुनः ।
गोदा गोदावरी भीमोत्पला पि त्र्यम्बकोद्भवा ॥३९॥
गोला ब्रह्माण्डसंभूता गौतम्यथ च बाहुदा ।
करतोया सदानीरा सैव स्यात्सैतवाहिनी ॥४०॥
सैत[3]वाहून्यथ शताद्रुद्रुद्रूरपि शितादमू ।
द्रिद्री शुतु [4]पराण्ताः स्त्रियामथ विपाट् स्त्रियाम् ॥४१।
विपाशाथ [5]हिरण्यात्स्याद्वाहुर्वाहश्च शोणकः ।
काञ्चनाक्षी विशाला च चक्षुः सिन्धुः सरस्वती ॥४२॥
वेदाग्रजा ब्रह्मसुता ह्लक्षजाता च वाक्प्रदा ।
चन्द्रभागा चान्द्रभागी चन्द्रिका चान्द्रभागगा ॥४३॥
[6]रथेष्ठा च रथस्था च सरयुः सरयूरपि ।
अमोघातनये ब्रह्मपुत्रो लोहित्यलोहितौ ॥४४॥
पयोष्णयजा भारती स्याद्विशाला मुकुलाप्यथ ।
[7]ओघनादा सुवेषा च सुप्रभा मानसी ह्रदा ॥४५॥
अच्छोदा च पुनः शिप्रा गण्डकी विमलोदका ।
देववृता तथैवान्या वितस्तेरावती शिवा ॥४६॥

---

१ मुद्गला B २ गौतमी B ३ वाहिन्यथ CK ४ परावेताः ५ हिरण्या स्या CK
६ रथेष्टा BC ७ यावूनादा सुवेषा CK ऊर्धनादसुषेमा B

विभागा देविका रेभा धनपापा च मद्रिणी ।
कौशिकीचुमती केशा देवमाता कुमुद्वती ॥४७॥
[1]देवस्मृतिश्च पार्णाशा पीता चर्मण्वती [2]कपूः ।
कुन्त्यवन्ती वेणुमती विदर्भा सुरसा कुहूः ॥४८॥
पलाशिनी नन्दना च धूमा मन्दाकिनी दया ।
चित्रोपला चित्रवर्णा सिन्धु [3]रेखारिका तथा ॥४९॥
दशार्णा पिप्पली श्येनी [4]मञ्जुलावा पिशाचिका ।
कुल्लामती शुक्तिमती सिनीवाली तथापरा ॥५०॥
वीणा वैतरणी भीमा निर्विन्ध्या तृपिका सिता ।
कृष्णवेणा कृष्णगङ्गा कृष्णा कृष्णसमुद्भवा ॥५१॥
भयंकरा कृष्णवर्णाऽथापरा निषधावती ।
तुङ्गभद्रा भीमरथी घट्टगा सा मलापहा ॥५२॥
कृतमाला ताम्रपर्णी [5]पुष्यभद्रोत्पलावती ।
क्षमा जम्बूर्वैत्रवती सुभद्रा मन्दवाहिनी ॥५३॥
इत्याद्याः स्युः पुनर्नद्यो घर्घराद्याः परे नदाः ।
सारिणिः कृत्रिमा कुल्या सरित्स्यादथ च त्रिषु ॥५४॥
प्रणाली जलपर्यायपदवी सिन्धुसंगमे ।
संभेदोऽथ स्त्रियां भूम्नि सिकता अपि वालुकाः ॥५५॥

---

१ वेद B  २ कपूः KC  ३ रेखो CK  ४ मञ्जुली वा पिशाचिकी B
५ पुष्या B

पृषन्ति विन्दु [१]पृषतः पुमांसो विप्रुषः स्त्रियाम् ।
तीर्थोऽस्त्रियां पुंसि घट्टः[२] स्नानपानावतारके ॥५६॥
पुंसि पानीयवृद्धिः स्यात्प्लवः पूरोपि चाप्यथ ।
देविकासरयूद्भूते त्रिषु दाविकसारवौ ॥५७॥
नावा न्तार्यं तु नाव्यं स्यान्नौतार्ये वस्तुनि त्रिषु ।
स्त्रियां पुंसि तरण्डा तु तरणी तरणिस्तरिः ॥५८॥
द्वयोर्वारिरथः पुंसि तरान्धुस्तरणस्तरी ।
पोतो नौर्वार्विटः[३] क्लीबे वहित्रं वहनं पुनः ॥५९॥
तरीः[४] प्लवो भिलो नौका न स्त्रियामुडुपोलुपौ ।
आकर्षोपि च कर्षुः[५] स्यात्पुनः क्लीबे सुखायनम् ॥६०॥
तुलाधटः[६] पत्रवालो द्वयोः पादालकोपि च ।
पोलिन्दस्त्वन्तरादण्डो मङ्गोऽस्त्री मङ्गिनी[७] स्त्रियाम् ॥६१
नौकादण्डः क्षेपणी स्त्री क्षेपणिः क्षिपणिः स्त्रियाम् ।
क्षिपण्यपि तथैव स्यादरित्रे[८] केनिपातनम् ॥६२॥
कोटिपात्रं स्त्र्यभ्रिरश्री [९]काष्ठकुद्दालकः पुमान् ।
सेचनं सेकपात्रं स्याद् गुणवृक्षस्तु कूपकः ॥६३॥
गुणः पुंसि स्त्रियां रज्जुर्वरत्रा रश्मिरित्यपि ।
वातप्रतिच्छदो वाताधारो वातमहापटः ॥६४॥

---

१ पृषताःB २ घटःB ३ वैर्विटःK ४ तरिःB ५ कर्षःB ६ घटःB ७ भङ्गोऽस्त्री भङ्गिनीB ८ दरित्रंB ९ कष्टB ।

सांयात्रिकः पोतवणिग्यानपात्रं वहित्रकम् ।
वोहित्थं[1] वहनं पोतः पोतवाहो नियामकः ॥६५॥
निर्यामकः क्षेपकस्तु कर्णधारोऽपि नाविकः ।
पोतधारः[2] पोतधरो[3] यानादौ नौः समुद्रिया[4] ॥६६॥
सामुद्रिको मनुष्यः स्यात्सामुद्रं तद्भवे त्रिषु ।
[5]आतरस्तरपण्यं स्यादातारस्तरणं तरः ॥६७॥
संतारः संतरस्तारोऽप्यथ दुस्तारदुस्तरौ ।
काष्ठाम्बुवाहिनी द्रोणी द्रोणिद्रुणिरपि द्रुणी ॥६८॥
क्लीबेर्द्धनावं नौकार्द्धेऽतीतनौकेऽतिनु त्रिषु ।
मत्स्यपर्यायजीव्यर्थः कैवर्त्तो दाशधीवरौ ॥६९॥
दासेरकोथ जालं स्यादानायः पुंसि कोटिका ।
शणसूत्रं पवित्रं स्यात् क्लीबे मत्स्यादिबन्धनम् ॥७०॥
कुपिनी च स्त्रियां क्लीबे वडिशं मत्स्यवेधनम् ।
वडिशावलिशे द्वेस्त्री वलिशं विलिशं पुनः ॥७१॥
मत्स्याधानी कुवेणी स्यात्कुवेणिः कुविणापि च ।
एषां तु पञ्जराखेटे पलावश्च प्लवोऽपि च ॥७२॥
पृथुरोमा झषो मीन आत्माश्यनिमिषोण्डजः ।
कण्टकी शम्बरो मूको वल्कवान् शकली द्वयोः ॥७३॥

विसारो मत्सो[1] मत्स्योऽपि वैसारिणजलेशयौ ।
मछः शल्क्यथ तद्भेदा एककण्टकमञ्जरी ॥७४॥
सहस्रदंष्ट्रः पाठीनोप्यवदालक[2] इत्यपि ।
महामत्स्यो रूप्यवर्णो दीर्घः स्यादथ लोहितः ॥७५॥
कृष्णशल्की श्वेतकुक्षिस्तालाङ्गो[3] मत्स्यराडपि ।
वृत्त[4]वक्रोप्यथ पुनर्गर्गरः पीतवर्णकः ॥७६॥
पिच्छलाङ्गः[5] पृष्ठरेखाबहलः सच शल्ककः[6] ।
अथ भीरुः पृष्ठगलपुच्छेषु द्विद्विपक्षकः ॥७७॥
अशल्को वृत्ततुण्डोऽथ पालको वृत्तवक्त्रकः ।
नातिस्थूलो विशल्काङ्गः श्मश्रुलो दन्तवानपि ॥७८॥
संध्ययोरात्रिशेषे च प्रचारी [7]चाश्ववर्वरः ।
कुक्षौ पृष्ठे च कण्टालोप्यथान्यशछगलः पुनः ॥७९॥
गले द्विकण्टकः श्वेतः पृष्ठेकण्टः[8] सुविग्रहः ।
समानदीर्घवृत्तः स्यान्निःशल्कोप्यथ रोहितः ॥८०॥
रक्तमत्स्यो लोहितः स्याद्रोहिः सालो गडो गलः[9] ।
छालोथ नडजे मत्स्ये चिलिचीमश्चिलीचिमः ॥८१॥
खलेहः[10]खलिशश्चापि[11]नलमीनः खलेशयः ।
क्षीरजालोऽतिरक्ताङ्गो नातिदीर्घो न चाल्पकः ॥८२॥

---

१ मत्स्योCk २ दालुकB ३ स्तालग्गोB ४ वक्रोB ५ पिछिB ६ शङ्ककःK वल्ककःB ७ चाश्वBC ८ कण्ठः ९ गलोण्डजः १० खलहः B ११ तलCk

नातिस्थूलः स गोमेदोप्यथ स्यान्महिषः पुनः ।
स्थूलाङ्गो महिषाकारः स्थूलशल्कः स तालुनि[1] ॥८३॥
वितस्तिमात्रः स्वल्पाङ्गः स्थूलशल्कस्तथापरः ।
कर्णा[2]वेशोतिकृष्णाङ्गो वृत्ताल्प[3]स्थूलचर्म्यपि ॥८४॥
चन्द्रिका[4] सर्पतुल्याथ[5] तिमिर्योजनविस्तरः ।
तिमिंगिलो महामीनस्तिमिंगिलगिलस्तु सः ॥८५॥
तद्गिलश्चाथ कुलिशः[6]कराट[7]काष्ठील इत्यपि ।
वज्राभश्चाथ राजीवः कृशो दीर्घाकृतिश्च सः ॥८६॥
सस्याजीवस्तु[8]रेखाङ्कः पाटलः पाटलानिभः ।
[9] निरुलो जलपीने स्यात्सुरुलो[10]लोष्ठिताङ्कके ॥८७॥
स्यान्नन्दी वारला सैव समुद्राद्रङ्किकाप्यथ ।
सकण्टकश्चन्द्रिकः स्यात्पार्श्वे वर्त्तुल[11]इत्यथ ॥८८॥
फलकी स्याच्चित्रफलो वागुसो वागुजारतः ।
कुवरीकङ्क पृष्ठी स्याद्राजग्रीवो मदा[12]मंदः ॥८९॥
स्याद्द्वयोः[13]शकरी प्रोष्ठी श्वेतकालो जलव्यधे ।
[14]कङ्कत्रोटोथ भल्लीशा गाङ्गेयः शवराधिपः ॥९०॥
जलतालोऽपि च ज्ञेयः परि[15]कर्पूर इत्यथ ।
जलेचरः खशेरोथ जलचञ्चल इत्यपि ॥९१॥

---

१ तालुमिCK २ वेशोK ३ श्वाथB ४ संयK ५ तुल्योC ६ कटंCK काष्टील। ८ रेखाङ्गःB ९ विरुलोB १० लोष्टिBC ११ इत्यपिB १२ मंदःB १३ शवरीCK १४ शेरोB १५ कुपूंर

स चलत्पूर्णिमा चाथ गङ्गाटेयो [1]जलानिलः ।
जलवृश्चिक [2]इश्चाकाप्यथ स्याल्लघु[3]गर्गरः ॥९२॥
त्रिकण्टकोथ शालः स्याद् गन्धाहिः कूचिका द्वयोः ।
[4]स स्याच्छकुलगण्डोथ ब्राह्मी चम्पक[5]पादुकः ॥९३॥
पुंस्त्रियोर्मद्गुरः शृङ्गी दुर्नामा दीर्घकोश्यपि ।
उलुप्युलूपी चुलुकी चुलुम्पी [6]चुलपीत्यपि ॥९४॥
स तु राजीवसंज्ञः स्याद्यस्त्रिरेखासमन्वितः ।
शिलीन्ध्रः कचबो रामो दण्डारिः पाकमत्स्यकः ॥९५॥
संकोचिका [7]पत्तिमत्स्यो विषपुच्छोप्यमीनरः ।
जात्या मत्स्या द्विधा ज्ञेयाश्चर्मजाः शल्कजा इति ॥९६॥
प्रत्येकं ते द्विधा प्रोक्ताः स्थूलसूक्ष्मप्रभेदतः ।
द्रुमचर्मपिनद्धाङ्गाश्चर्मजाः शल्कवर्जिताः ॥९७॥
शल्कशुक्तिपिनद्धा [8]ये शल्कजास्ते प्रकीर्त्तिताः ।
केचित्समुद्रसंभूताः केचिन्नद्युद्भवा इति ॥९८॥
सारश्च शृङ्गसारश्च वञ्चिलो [9]वालकस्तथा ।
कण्टकारः संकुचकश्चर्मजाः सागरोद्भवाः ॥९९॥
कावाकः खिरिडिश्चैव पाठीनः सिंहतुण्डकः ।
एते मत्स्या महाकायाश्चर्मजा निम्नगोद्भवाः ॥१००॥

---

१ गलानिल इत्यन्यत्र । गलानिला B २ इन्द्राको C ३ मर्गरः त्रि ४ सस्यात्तु B ५ पत्रिकः B ६ चुलुपी B ७ पाचि B ८ श्च B ९ व्यलक k रलक B

पाटलः पिच्छकस्त्वेकस्तथान्यो दन्तपाटलः ।
मध्यकायाविमौ मत्स्यौ नदीजौ चर्मसंभवौ ॥१०१॥
[1] घाघेरो [2]गोजलश्चैव निद्रुवश्च तथाऽपरः ।
मत्स्यः कटरथश्चेति स्वल्पकाया नदीभवाः ॥१०२॥
[3] पडिमानो महाकायः शल्कजः सागरोद्भवः ।
[4] पल्लाकस्तोमकश्चेति [5]स्वल्पकायौ समुद्रजौ ॥१०३॥
[6] महाशीलः कल्हवश्च ताडको बडिशस्तथा ।
परगिश्च महाकायाः शल्कजाः सरिदुद्भवाः ॥१०४॥
रोहितः स्वर्णमीनश्च तथा खंडलियोपरः ।
मध्यकायाः सशल्कास्ते बलवन्तो नदीचराः ॥१०५॥
मरलिस्तुम्बरो[7]वौंचशल्कजा मध्यविग्रहाः ।
[8] कोलत्थश्च महानद्याः संगतस्य महीभृतः ॥१०६॥
षट्सप्तयोजनं यावन्नदीमायान्ति सागरात् ।
नद्यां कर्दमहीनायां सशिलायां भवन्ति ते ॥१०७॥
[9] कोवाकाद्या महाकायाः सशल्का मत्स्यजातयः ।
शिलासंकटके स्थाने गम्भीरे [10]करकादयः ॥१०८॥
वालुका बहुले तोये गम्भीरे रोहितादयः ।
सपङ्के च सुविस्तीर्णे प्रवाहरहिते ह्रदे ॥१०९॥

१ घाघेरोCK २ मिजलश्चैव विवद्रु B ३ षडिमानोB ४ पल्लीकB ५ मध्यकायौB ६ सहाB ७ वर्गौCk ८ कोलत्थाश्चB ९ कावाकोवा १० कारB

पाठीनप्रमुखा मत्स्या निवसन्ति सकच्छपाः ।
पाषाणप्रान्तविवरे नाभिदघ्नोदके तथा ॥११०॥
घाघरस्तुवरो वामी निवसन्ति निजेच्छया ।
नागस्तन्तुः स बध्नाति प्राणिनं जलमध्यगम् ॥१११॥
मत्स्याः स्त्रीजातयः सर्वे गर्जद्गर्भा हि ते स्मृताः ।
सर्वेषामुदरेण्डानां संघातो दृश्यते यतः ॥११२॥
शिशुकस्तु वसाढ्यः स्याज्जलात्सूकरमर्कटौ ।
शिशुमारोप्यथ पुनर्जलौका तु जलोरगी ॥११३॥
जलोका जालिका वेणी जलालोका जलाटनी ।
जलौकसः स्त्रियां भूम्नि सैवोक्ता जलजन्तुका ॥११४॥
जलायुका जलूकाथ[1] शल्कं वल्कं च वल्कलम् ।
मत्स्यस्य शकलेमी स्युरित्यपादा जलेचराः ॥११५॥
शिशुमारो महाङ्गः स्यात्स्वल्पाङ्गश्चुलकी च सा ।
नक्रस्त्वम्बुकिराटः स्यात्स च वाडवहारकः ॥११६॥
अम्बुनः कण्टकभटौ[2] वज्राकारशरीर्यपि ।
एतस्य भेदे कुम्भीरो मकरस्तु[3] झषाशना ॥११७॥
ह्रदमहोसिदंष्ट्रः स्यान्मरोलिर्जलरूपकः ।
जलात्प्लवा[4]खुनकुलविडालशुनका अपि ॥११८॥

---

१ पिB २ भरोB ३ श्चB ४ प्लवाB

कच्छपः कमठः कूर्मः क्रोडाङ्घ्रिः पञ्चगुप्तकः ।
मण्डूको दर्दुरो भेको वर्षाभूर्दर्दुरः प्लवः ॥११९॥
वर्षानन्दो [1]गाढवर्चाः शालूरः कोक इत्यपि ।
प्लवंगमश्च शालूरः सालुश्चापि प्रवंगमः ॥१२०॥
व्यङ्गः प्लवः शिली भेकी वर्षाभ्वी च डुलिर्डुली[2] ।
हरिनेत्रः कुलीरः स्यात् कलीरः कर्ककर्कटौ ॥१२१॥
बहिःकुटीचरस्तिर्यग्यानः स्यादथ घुर्घुरी ।
मृत्[3]किरा वारिपर्यायकृमिः स्त्री जलमक्षिका ॥१२२॥
[4]इत्येते पादिनोथ स्युः कोशिनः शुक्तिका स्त्रियाम् ।
मुक्तार्थान्मातृपर्याया महाशुक्तिश्च मौक्तिकात् ॥१२३॥
शुक्त्यर्थापि च मुक्तायाः स्फोटोथ कृमिसूरपि ।
क्षुद्रशुक्तिश्च पुटिका जलार्थाच्छुक्तिरित्यपि ॥१२४॥
[5]शम्बुकोऽपि च शम्बूकः[6] शाम्बूकः शम्बुको दरः ।
शङ्खोर्णवभवः कम्बुरस्त्रियां [7]पावनध्वनिः ॥१२५॥
अन्तर्वक्त्रो महानादस्त्रि[8]रेखोऽपि च सुस्वरः ।
हरिप्रियोऽपि धवलोप्यथ स्यात् क्षुल्लकोऽपरः ॥१२६॥
क्षुद्रशङ्खः शङ्खनकः [9]शम्बूकोन्यो जलोद्भवः ।
कृमिशङ्खश्च जलजजन्तुः कृमिजलोद्भवः ॥१२७॥

---

१ गूढवर्चा इत्यन्यत्र २ दुलिर्दुलीB ३ मृत्कुराCk ४ इत्येकB ५ शम्बुक इत्याद्यर्धद्वयंC पुस्तके नास्ति ६ सम्बूकःB ७ यावनB ८ रेखाB ९ शंखकोB

महाकपर्दो भल्लूकः कपर्दोऽस्त्री वराटकः ।
चराचरचरो वर्यो बालक्रीडनकश्च सः ॥१२८॥
हिरण्यःश्वेत इति च बहवोऽन्ये चलेचराः ।
पुंस्येवान्धुः प्रही कूप उदपानं तु पुंसि वा ॥१२६॥
कारोत्तरश्च वीनाही प्रहिः स्यादन्धकूपके ।
कर्करान्धुर्जलाष्ठावी[1] कूपिका तु जलाम्बिका ॥१३०॥
उद्घाटको घटीयन्त्रं स्यादावर्त्तोरघट्टकः ।
अस्त्री निपानमाहाव उपकूपजलाशये ॥१३१॥
नेमिर्नेमी त्रिका तन्त्री वीनाहोस्त्र्यास्यबन्धने
नान्दीपुटो [2]नान्दीमुखो गर्त्तः खातोपि केवटः ॥१३२॥
अवघट्टावटौ तुल्यावथ पुष्करिणीत्यपि ।
दीर्घी स्त्री यष्टिका वापी वापिश्चापि स्त्रियामुभे ॥१३३॥
मीनगोध्यपि वेशन्तः स्वल्पे सरसि पल्वलः ।
अस्त्र्याखातं देवखातमखातं पुंनपुंसकम् ॥१३४॥
स्यादस्त्रियां तलं तल्लं तटाकोऽस्त्री तडागवत् ।
पद्माकरः पुमान् क्लीबे सरसं च सरः पुनः ॥१३५॥
कासारस्तत्र महति सरसी स्यात् स्त्रियामियम् ।
खेयं तु परिखाधारः खानिका जलधारणम् ॥१३६॥

---

१ ष्ठीका B २ नान्दि B

[1] स्यादालवालमावालमावापोऽस्त्री द्विजप्रिया ।
केदारः स्यात् कर्दमिलः स चोक्तः पांशुमर्दनः ॥१३७॥
कुशेशयं गन्धसोमं कुड्मलं पुष्करं नलम् ।
महोत्पलं तामरसं राजीवं श्रीकरं पुनः ॥१३८॥
स्यात्सरःसरसीपङ्कपर्यायेभ्यो रुहार्थकम् ।
एभ्यो जन्मार्थकं चापि [2]जलार्थादपि जार्थकम् ॥१३९॥
विसपर्यायपुष्पार्थं कृष्णपर्यायकन्दकम् ।
लक्ष्मीपर्यायसद्मार्थं कन्दोट्टं दिनहासि तत् ॥१४०॥
शतात्सहस्रात्पत्रार्थं कमलं कुमुदं तु तत् ।
कुमुच्च शारदं पुण्डरीकं कैरवमित्यपि ॥१४१॥
रक्ते तु स्यात् कुवलयं कुवेलं कुवलं कुवम् ।
स्यादुत्पलं कोकनदमरविन्दमथापरम् ॥१४२॥
इन्दीवरं तु नीलाब्जमिन्दिरावरमित्यपि ।
कावारमीषत् श्वेतं तु नलिनं स्यादथ स्त्रियाम् ॥१४३॥
स्यात्पद्मं किंचिदारक्तमीषन्नीलं तथोत्पलम् ।
एषां तु वल्ली नलिनी विसिनी पुटकिन्यपि ॥१४४॥
नालीकिनी नलिनिनी कमलिन्यपि पद्मिनी ।
एषां बीजं तु [3]गालोड्यं पद्मार्था[4]दक्ष इत्यपि ॥१४५

---

१ स्यानालवालCK स्यालालवाड्B । २ दलाB ३ गालोध्रंB ४ द्वृक्षB

स्त्रियां क्रौञ्चादनी क्रौञ्चा श्यामा पद्मार्थकर्कटी ।
नालोऽस्त्रियां स्त्रियां क्लीबे मृणालं तु मृणालिका ॥१४६॥
षण्बिसं बिसतन्तुर्ना पद्मिन्यर्थाद्रुहं च तत् ।
शालूकमेषां कन्दः स्यात् पद्ममूलं [1]कटः पुमान् ॥१४७॥
[2]जलालूकं सूरणो ना करहाटः शिफा स्त्रियाम् ।
अनुष्णमुत्पलं क्लीबे नलपर्यायनामकम् ॥१४८॥
रात्रिपर्यायपुष्पार्थं शीतलार्थाज्जलार्थकम् ।
हिमपर्यायपद्मार्थमथ स्यात् कुम्भिका पुनः ॥१४९॥
पृश्निका पर्णिका वारिपर्यायेभ्यः परा स्त्रियाम् ।
मूलिका पर्णिका चाथास्त्रियां शैवाल[3] शेवले ॥१५०॥
शेवालश्चापि शेपालः शीपालः शैवलोऽस्त्रियाम् ।
शैवलं शीवलं तुल्यं वारिचामरमित्यपि ॥१५१॥
नाली नाला नालमपि नालः केसरकेसरौ ।
पुंसि क्लीबेऽथ नालीकं नालिकं नलिनं नलम् ॥१५२॥
विसंडकं तु [4]लविलं [5]शृङ्गाटो वारिकुब्जकः ।
अस्त्रियां शण्डषण्डौ द्वावब्जादीनां कदम्बके ॥१५३॥
शिफा स्त्रियां कन्दमस्त्री शिफाकन्दोऽपि [6]वा स्त्रियाम् ।
विसं त्रिषु मृणालो ना कोरकः पुन्नपुंसकः ॥१५४॥

---

१ कद्‌ः २ जलालूकः B ३ शेवलौ B ४ लविसं ५ शृङ्गारो Ck ६ चा B

संवर्त्तिका तु संवर्त्तिः संवर्त्ती नवपत्र्यपि ।
तत्कर्णिकामध्यगतबीजकोशो वराटकः ॥१५५॥
कल्पद्रौ केशवकृते फलिते नामसत्फलैः ।
त्रयोदशः प्रकाण्डोऽयमब्ध्याद्यः सिद्धिमागतः ॥१५६॥
समुद्रादिप्रकाण्डः (इतिपूरणप्रमुखकाण्डपूरणम्)

---

अधोभुवनपातालवलिसद्मार्थकानि तु ।
वडवामुखपर्यायं रसापर्यायतस्तलम् ॥१॥
नागपर्यायलोका[1] स्यादधोऽव्ययमित्यपि ।
रोकं विरोकं छिद्रं च रन्ध्रं श्वभ्रं च पुंसि वा ॥२॥
स्वभ्रं दरं च वा पुंसि सुषी सुषिरुभे स्त्रियौ ।
अतलं वितलं चैव सुतलं च तलातलम् ॥३॥
महारसाभ्यां च तलं पातालं स्युरमूनि षट् ।
तत्र स्युस्त्रिषु सत्त्वेमी स्यात्क्लीबे तमसं तमः ॥४॥
अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं पुनः ।
निशापर्यायचर्मार्थं भूच्छायं च रजोबलम् ॥५॥
दिक्कण्टको वियद्भूतिः खत्वग्वृत्रोऽप्यदर्शनः ।
निशापर्याय[1]रागार्थो दिनपर्यायकेसरः ॥६॥

---

[1] लोका B

खपर्यायपरागार्थो वियद्भूतिर्दिगम्बरः ।
क्लीबे दिनार्थाद्दण्डार्थं नीलपङ्कार्थमित्यपि ॥७॥
अन्धं तमोन्धतमसमन्धातमसमित्यपि ।
क्षीणं तमोवतमसं विष्वक् संतमसं च तत् ॥८॥
भुवि श्वभ्रे द्वयो[1]र्गर्त्ताऽवटिः स्यादवटोऽ[2]वटुः ।
कालेया दनुजा दैत्या ये चाप्यन्ये सुरद्विषः ॥९॥
सर्पा नागाश्च ते सर्वे सर्वपातालवासिनः ।
सुरपर्यायनञ्पूर्वा दित्यपत्यार्थवाचकाः ॥१०॥
ते पूर्वदेवपर्याया [3]इन्द्रपर्यायवैरिणः ।
कश्यपापत्यपर्यायाः पातालार्थाद्गृहार्थकाः ॥११॥
यज्ञपर्यायशत्र्वर्थाः [4]क्षत्र् इष्टिमुषोपि च ।
तुल्या एतैश्च कालेया दानवा वेदविद्विषः ॥१२॥
अव्रतास्तामसतपःशीलधर्मार्थवैरिणः ।
आदिदैत्यो हिरण्याक्षो ज्येष्ठः कश्यपसूनुषु ॥१३॥
दैत्यार्थादिन्द्रपर्यायः पूर्वदेवार्थ इत्यपि ।
हिरण्यकशिपुर्दैत्यो हिरण्याक्षानुजार्थकः ॥१४॥
कयाधूरस्य पत्नी स्यात्प्रह्लादाद्याः सुताश्च ते ।
कायाधवश्च प्रह्लादो[5] ह्लादः संह्लादसंज्ञकः ॥१५॥

१ गर्तौB २ वटुःB ३ इन्द्रCk ४ क्षराB ५ प्रह्रादोB

अनुह्लादश्च ते ह्लादास्तत्पुत्रैरिदमावृतम् ।
विरोचनस्तु प्राह्लादिर्वलिर्वैरोचनोऽपि च ॥१६॥
वैरोचनिश्च दीर्घायुर्दाता वाणस्तु तत्सुतः ।
शैवोथ वृषपर्वा तु वृषपर्वोथ शम्बरः ॥१७॥
संवरोप्यथ [1]मायावी स्यान्मयः कालनेमिनि ।
कालनेमिरितीत्याद्या दैत्यकालेयदानवाः ॥१८॥
रक्तबीजप्रभृतयो वैप्रचित्ता अथापरे ।
निवातकवचाद्याः स्युः कालेया असुराश्च ते ॥१९॥
एकयोक्त्या पुनर्दैत्या महिषाद्यास्तथैव च ।
अनन्ताः सर्व एवैते सर्वे देवविरोधिनः ॥२०॥
कल्पद्रौ [2]केशवकृते फलिते नामलुंवकैः ।
सिद्धिं गतः प्रकाण्डोऽयं पातालाह्वश्चतुर्दशः ॥२१॥

पातालप्रकाण्डः



सर्पो दर्वीकरश्चक्री कुण्डल्याशीविषश्च सः ।
वायुपर्यायभक्षार्थो लेलिहानो विषायुधः ॥१॥
चक्षुःपर्यायकर्णार्थो विलार्थाच्छयनार्थकः ।
अपि व्याह्लो दर्विकरो दर्वी[3]धृद्दर्विभृत्फटी ॥२॥

---

१ मायायीk २ केशवकृते फलिते नामलुंवकैरिति केवलं B पुस्तके दृश्यते ३ भृB

फणाधरः फणधरः फणावान्फणवानपि ।
बिलवासी बिलेवासी गूढपादो बिलेशयः ॥३॥
चक्री बिलशयश्चापि कुण्डली व्यालभोगिनौ ।
पृदाकुः कञ्चुकी व्याडः कुम्भीनससरीसृपौ ॥४॥
काकोदरो दन्दशूको विषाद्याद्धोधरोऽपि च ।
भुजं भुजो[1]रोरंजिह्मपत्रेभ्यो गो गमः फणी ॥५॥
द्वे दीर्घाद्रसनार्थः स्याल्लेलिहानश्च पुष्करः ।
गूढपाद्दीर्घपृष्ठोऽहिर्द्वयोर्ह्रीरश्च कद्रुजः ॥६॥
शेषस्तु नागपर्यायराजार्थोऽनन्त इत्यपि ।
विष्णुपर्यायशय्यार्थः सहस्रफणभूधरौ ॥७॥
सितपङ्कजचिह्नः स्यादालुको गौर इत्यपि ।
ज्येष्ठः [2]कद्रुतनूजानां सर्पराजस्तु वासुकिः ॥८॥
श्वेतो नीलसरोजाङ्को लोहिताङ्गस्तु तक्षकः ।
स्वस्तिकाङ्कशिरा[3]श्चाथ महापद्मोतिशुक्लकैः ॥९॥
दशभिर्बिन्दुभिर्युक्तशिराः पीत[4]सितां गले ।
दधच्छङ्खेन्दु [5]सदृशा ज्वालाधूमसमश्च सः ॥१०॥
कालीयः कालियस्तुल्यौ कृष्णपादार्थचिह्निते ।
अर्द्धेन्दु[6]मौलिः कुलिकोऽथापरे कम्बलः पुनः ॥११॥

१ रोरK २ कद्रB । ३ श्चापिB ४ शितोB सिता इति पाठः स्यात् ५ सदृशो इति पाठः स्यात् । ६ मौलिCk

बलाहकश्चाश्वतर इत्याद्यास्तत्कुलाधिपाः ।
तत्तल्लक्षणसंयुक्तास्तत्तत्कुलसमुद्भवाः ॥१२॥
राजसर्पो भुजङ्गाशो भोगी स्यादथ वाहसः ।
चक्री मण्डल्यजगरः पारीन्द्रोऽजगिलः शयुः ॥१३॥
स्त्रियां दृग्भूर्मार्गभित्स्याद्वल्लूतोथ [1]तिलिंसकः ।
गोनासो गोनसोऽपि स्याद् घोणसोथालगर्दकः ॥१४॥
जलपर्यायसर्पार्थैः समो राजिलडुंडुभौ ।
मातुलानो मातुला[2]हिर्द्विमुखः पुंस्यहीरणिः ॥१५॥
अहीरणी चाथ पुनर्भाण्ड [3]पुष्टस्तु कोकिलः ।
कन्दलान्तोथाश्वलाला स्त्रियां स ब्रह्मजिह्मगः ॥१६॥
निर्मोकरहिते तत्र निर्मुक्तो मुक्तकञ्चुकः ।
कुक्कुटादिः कुक्कुटाभो वर्णेन च रवेण च ॥१७॥
नागाः सर्वे काद्रवेयाः सपादा अपदाश्च ते ।
सकर्णाः कर्णरहिता मुखबालधराः परे ॥१८॥
इत्यादयो बहुविधा व्यालाः पातालभूचराः ।
सर्पी तु सर्पिणी चाथ स्यादाहेयं त्रिपूत च ॥१९॥
विषास्थ्यादि स्यादथ च फटायां तु फणा द्वयोः ।
स्फुटा स्फटा दर्वि दर्व्यौ भोगस्त्रि[4]ष्वथ वर्ष्मणि ॥२०॥

---

१ तिलित्सकः B २ ही द्वि B ३ पुच्छ B ४ ष्वस्य B

भोगस्त्रिष्वहिकोशस्तु निर्मोकः कञ्चुकोऽस्त्रियाम् ।
गरोस्त्री गरलः क्ष्वेडो गरलं विषमस्त्रियाम् ॥२१॥
अस्त्रियां विषभेदे तु हालाहलहलाहले ।
हलाहलं हालहालं शौक्तिकेयं च न स्त्रियाम् ॥२२॥
सौक्तिकेयोथ सौराष्ट्रिकः[1] स्यात्सारोष्ट्रिकोऽपि च ।
वत्सनाभश्च काकोलः कालकूटः प्रदीपनः ॥२३॥
ब्रह्मपुत्रो [2]दारकश्च पुंसि क्लीबे मता अमी ।
अहिच्छत्रो मेषशृङ्गः कुलिको मधुसिक्थकः ॥२४॥
इन्द्रो लाङ्गुलिको [3]विष्णुलिङ्गपिङ्गलगोतमाः ।
मुस्त[4]को दालवाद्याःस्युरथान्ये जङ्गमाः पुनः ॥२५॥
स्युर्दृग्दंष्ट्राविषानागाः पुच्छलोममहाविषाः ।
वृश्चिकाद्याः पुनर्लोमविषा व्याघ्रादयः पुनः ॥२६॥
लालाविषाश्च लूताद्या [5]आपा नखविषाः पुनः ।
कालान्तराधिकविषा मूषकाद्यास्ततः परे ॥२७॥
दूषीविषं कृत्रिमं स्यादवार्यमौषधं विना ।
आशीराशिस्तालुदंष्ट्रा जिह्वयोरन्तरालगा ॥२८॥
कथाप्रसङ्गस्तु विषाद्वैद्यो गारुडिकश्च सः ।
जाङ्गल्यथाहि तुण्डस्तु व्यालग्राह्याहितुण्डिकः[6] ॥२९॥

---

१ कश्वसाB २ नारदB दारदः श्रम ३ बिस्फुB ४ कन्दाB ५ बाधाB
६ काB

पुरी भोगवती चैषां भोगिन्यो नागकन्यकाः ।
कल्पद्रौ केशव[1]कृते फलिते नामसत्फलैः ॥३०॥

सर्पादिमः पञ्चदशः प्रकाण्डः सिद्धिमागतः ।

---

नारको नरकोऽपि स्यान्निरयो दुर्गतिः स्त्रियाम् ।
तद्भेदा स्तपनावीचि[2]महारौरवरौरवाः ॥१॥
स्त्रियामवाची[3] तद्भेदेप्यथ संहार इत्ययम् ।
संघातः कालसूत्रं च तत्र सत्त्वास्तुनारकाः ॥२॥
[4]अराप्यैन्द्री [5]कालकर्णी स्यादलक्ष्मीश्च[6] निर्ऋतिः ।
अकं दुःख[7]मघं कं कृच्छ्रं बाधनमित्यपि ॥३॥
स्यात्पीडनं विडम्बनं पीडा पीडिश्च पीड्यपि ।
अतिरार्त्तिर्व्यथा [8]पीडा बाधौ पुंसि स्त्रियामुभौ ॥४॥
विष्टिराजूः कारणा तु यातना तीव्रवेदना ।
[9]याचनाथामनस्यं स्यादामानस्यं प्रसूतिजम् ॥५॥
भील [10]माभीलमपि चामीषां वस्तुनि च त्रिषु ।
महापापकृतः प्रेताः परेता [11]अति[12]वाहिकाः ॥६॥

---

१ कृते फलिते नामसत्फलैरिति केवलं B पुस्तकेऽस्ति २ वीची B ३ मवांची B ४ आराप्यौन्द्री C ५ कर्णी B ६ स्तु B ७ मघमिति पाठःसर्वत्र ८ पीड B ९ पाचताया B १० मामील B ११ आति BC १२ वाहिकी: B

दुर्भोगभोगिनः क्लिष्टा भोग[1]पर्याप्तजीविनः ।
कल्पद्रौ केशवकृते [2]फलिते नामसफलैः ॥७॥
नारकाद्यः प्रकाण्डोऽयं षोडशः सिद्धिमागतः ।

---

जिनोऽकनिष्ठगो बुद्धः सर्वदर्शी महाबलः ।
सम्बुद्धः करुणाकूर्चो मारजिल्लोकजिच्च सः ॥१॥
दशार्हः श्रीघनस्तापी बहुत्तमगुणाकरौ ।
त्रिमूर्त्तिर्दशभूमीशः खश्यो वृद्धवाद्यपि ॥२॥
महामुखो विश्वबोधो महाबोधि[3]रर्हंमुनिः ।
[4]द्वादशाक्षो वीतरागः श्वेतकेतुर्महामुनिः ॥३॥
धर्मचक्रो धर्मराजः सर्वज्ञः सुगतः [5]स्ववित् ।
वागाशनिः कृश[6]धनः पञ्चज्ञानस्तथागतः ॥४॥
समन्तभद्रो भगवान् धर्मकालः सुभाषितः ।
षडभिज्ञो दशबलो व्योमाभस्तीर्थकृन्मुनिः ॥५॥
सर्वार्थसिद्धः संगुप्तो गौतमः कलिशासनः ।
शौद्धोदनिः शाक्यमुनिः सिद्धः शास्ता विनायकः ॥६॥

---

१ पर्याप्ति २ नाम सत्फलैरिति केवलं B पुस्तकेऽस्ति ३ रहर्मुनिः B ४ द्वादशार्तो B
५ स्ववित् K ६ धनिः B

अर्कबन्धुर्धर्मधातुर्जितारिः केवली वितः ।
महाश्रमणश्च पुनर्मुनीन्द्रोर्हन्समोऽपि च ॥७॥
मायादेवीसुतश्चक्री धरेयोपि च बाहुलः ।
क्षीणाष्टकर्मादेवाधिदेवः [1]श्रोमो जिनेश्वरः ॥८॥
तीर्थंकरस्तीर्थकरस्तापी पारगतश्च सः ।
परमेष्ठा वीतरागः स्वयंभूः पुरुषोत्तमः ॥९॥
कल्पद्रौ केशवकृते[2] फलिते नाम[3]सत्फलैः ।
जिनप्रकाण्डः संपूर्णो जातः सप्तदशः शुभः ॥१०॥
कल्पद्रौ केशवकृते फलिते नाम[3]सत्फलैः ।
प्रकाण्डैः सप्तदशभिर्भूमिस्कन्ध उपस्थितः ॥११॥

---

सुपर्वाणो देवयवः शान्ता [4]वृन्दारकाः सुराः ।
स्वप्नमृत्युजराव्याधिपर्यायपरिवर्जिताः ॥१॥
[5]सुबलाः पूजिता देवास्त्रिदशाश्च चिरायुषः ।
बर्हिःपर्यायवदनपर्याया ऋभवश्च ते ॥२॥
स्वाहायज्ञसुधानां च पर्यायेभ्योऽशनार्थकाः ।
मृत्युपर्यायनञ्पूर्वा दिविद्युनभसः सदाः ॥३॥

---

१ श्राह्रेK श्रामोB २ कृते फलिते नाम्नसत्फलैरिति केवलंB पुस्तके दृश्यते
३ लुंवकैःB ४ वन्दारकाःB ५ सुरळाःB

लेखा निलिम्पा गीर्वाणाः स्वर्गिणो मरुतो दितेः ।
अपत्यप्रत्ययार्थाः स्युस्तस्याः पुत्रार्थवाचकाः ॥४॥
दैत्यदानवकालेयवैरिपर्यायवाचकाः ।
त्रिदिवार्थास्स्युरीशाना [1]वयुनाः कामरूपिणः ॥५॥
वा पुंसि दैवतान्येवं हृग्विषा देवता स्त्रियाम् ।
अपि ते स्युः सुमनस आजानाः कर्मजाश्च ते ॥६॥
अृनामा त्वदितिर्देवपर्यायजननीत्यपि ।
आदित्याविश्ववसवस्तुषितानिलभास्वरः ॥७॥
महाराजिकसाध्याश्च रुद्रा एषां गणाः क्रमात् ।
धाता मित्रोर्यमा पूषा शक्रोंशो वरुणो भगः ॥८॥
त्वष्टा विवस्वान्सविता द्वादशो विष्णु[2]रित्यथ ।
क्रतुर्दक्षो वसुः कालकामौ च धृतिमानपि ॥९॥
मनुजो रोचमानश्च स्यात्पुरूरव [3]आर्द्रवः ।
दशकोयं गणोथायस्त्वनलश्चानिलो ध्रुवः ॥१०॥
धरः प्रभासः सोमश्च प्रत्यूषश्च वृकोष्टकः ।
भुवनो भावनो दक्षः सुजन्यः सुजनः क्रतुः ॥११॥
सुवर्णवर्णः प्रसुतो[4] व्यसुतश्चाव्ययो दश ।
एकद्वित्रिचतुःपञ्चज्योतिर्द्वित्रीन्द्र इत्यपि ॥१२॥

---

१ वंयुनाःB २ रित्यपिB । ३ आर्द्रवः K आद्रयःB ४B पुस्तके प्रसुतो इत्यनन्तरं पूर्वोक्तं बर्हिः पर्यायेत्याद्यर्धत्रयं लिखितम् ।

ताभिख्यः प्रतिसक्रन्मितश्च संमितोऽ[1]मितः ।
ऋतजित्सत्यजिन्मित्रः श्येनजित्पुरुजिद्धृतः ॥१३॥
अतिमित्रः सुषेणश्च ऋतधामा पराजितः ।
वरुणो विधृतो धाता महातेजा विधारणः ॥१४॥
ध्रुवो मिताशनः शक्तिः क्रीडनोन्यादृशो मुनिः ।
एतादृगीदृक् शरभो [2]धातुरूपो [3]विराड्गयः ॥१५॥
अनाधृष्यो वपुर्वामः कामो भीमः सहो द्युतिः ।
क्षिपो विमुक्त एकान्नपञ्चाशो गणश्चानिलः ॥१६॥
वहः स्यात्प्रोत्संविपरापरिभ्यश्च वहः परः ।
एषां तु सप्तसप्तानां सप्तकः सप्तको वहात् ॥१७॥
आत्मा ह्याशुमतो दक्षो [4]जुषः प्राणस्तथैव च ।
हविष्ठश्च गविष्ठश्च नवको भास्वरो गणः ॥१८॥
प्रद्युम्नो विद्युतः श्वेतो वज्रपक्षो बलाहकः ।
शतजिह्वो हिरण्याक्षः कुमुदो विजयाकृतिः ॥१९॥
सुगन्धिः पूर्णिमासश्च पौर्णमासो यमोपि च ।
वलाकश्च सुवीरश्च महाराजिकसंज्ञकः ॥२०॥
गणः पञ्चदशोथापि नरो नारायणस्ततः ।
हंसो नयश्च प्राणश्च मनोग्रहजगद्धितौ ॥२१॥

---

१ नितःB २ धातुगीषोB ३ विराह्नुषःB विराह्रूयःK ४ जुषमाणB ।

हयो वातश्च साध्यानां नवको गण ईरितः ।
अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः ॥२२॥
कपर्दी भुवनाधीशो भगः स्थाणुर्वृषाकपिः ।
गिरिशो वीरभद्रोऽयं रुद्रैकादशको गणः ॥२३॥
विद्याधराप्सरोयक्षरक्षोगंधर्वकिंनराः ।
पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ॥२४॥
विद्याधरांस्तु विद्याध्राः कामरूपाः कलाविदः ।
जीमूतवाहनाद्यास्ते गन्धर्वेभ्योऽवराः स्मृताः ॥२५॥
अथाकृत्यः शोभयन्त्य [1]ऊर्ज्यो विकुरयो रुचः ।
आप्नु [2]वत्योऽमृतरुचो वेगवत्यश्च भीरवः ॥२६॥
रोचयन्त्यो बभ्रवश्च भुवश्चेत्यप्सरोगणाः ।
स्त्रियां बहुष्वप्सरसः स्ववेंश्या उर्वशीमुखाः ॥२७॥
स्पर्शानन्दा रतिमदा अपि स्युः सुदयात्मजाः ।
[3]उरुवाशिन्युर्वशी स्यादूर्वश्युरुवशी क्वचित् ॥२८॥
अनुत्तमा सुरूपा च सुकेशी च मनोवती ।
मेनका सहजन्या च [4]पर्णाशा पुञ्जिकस्थला ॥२९॥
ऋतुस्थला घृताची च विश्वाची पूर्व[5]वित्तिका ।
पञ्चचूडा सामवती चित्रलेखा च सुप्रभा ॥३०॥

---

१ ऊर्ज्या वेकुरयो B २ वन्त्योऽम्रूनदुवो B ३ इदमर्धं B पुस्तके न स्पष्टम्
४ पर्णासा B ५ चित्तका C

मिश्रकेशी सुग[1]न्धिश्च विद्युत्स्पर्शा तिलोत्तमा ।
अदृश्या लक्ष्मणा क्षेमाप्यसिता [2]रुचिका तथा ॥३१॥
सुव्रता च सुबाहुश्च सुबोधा सुवपुस्तथा ।
पुण्डरीकानुदारा च [3]सुदारा सुरसा तथा ॥३२॥
हेमा सरस्वती कामा कमलापि च सूनृता ।
सुमुखा हंसपादा च [4]वासोरी रतिलालसा ॥३३॥
इत्याद्यप्सरसो यक्षा मेघवर्णः क्षमाकरः ।
यमो दण्डरथो भीमः पद्मचन्द्रश्च मौलिमान् ॥३४॥
प्रद्योतो भूतिमान्भव्यः केतुमानथ राक्षसाः ।
हेत्यश्चैव प्रहेत्यश्च सलिलेन्द्रसुकेशिनौ ॥३५॥
नैकषेयो यज्ञहा स्यात्सूर्यो विद्युद्रुधस्तथा ।
रसनो व्याल इति चाथापि गान्धर्वको गणः ॥३६॥
चित्राङ्गदश्चित्ररथश्चित्रसेनोऽङ्गिराः कलिः ।
ऊर्णायुरग्रजः सोम उग्रसेनो हहा हुहुः ॥३७॥
हाहा हूहूः पुनरपि केषांचन मतेऽव्ययौ ।
केचिद्धोहाहुहू मित्रौ हहाहूहू पुनश्च तौ ॥३८॥
विश्वावसुः सूर्यवर्चा नदीचित्रश्च ताम्रकः ।
दुराधिश्च शुचिर्हंसस्तृप्तिः पर्जन्य इत्यपि ॥३९॥

---

१ न्धीच B २ विद्युत्पर्णा B ३ रुचिरा B सुधारा ४ वासीरीरत B

वृषपर्वा नारदश्च पर्वतश्च[1] नरश्च ते ।
समा गन्धर्वगान्धर्वदिव्यगायनगातवः ॥४०॥
अथ किंपुरुषास्ते स्युः किंचित्पुरुषलक्षणाः ।
छागाश्चैडक[2]पर्यायमुखपर्यायशब्दिताः ॥४१॥
सूच्यास्या वानरास्याश्च पिशाचा नामतो गणाः ।
[3]दुःपूरणा विषादाश्च ज्वलनाः कुम्भमात्रकाः ॥४२॥
अङ्गारकाः प्रतुण्डाश्च उपवीरा[4] उलूखलाः ।
[5]अकर्णाश्चक्रखण्डाश्च पांसवः पात्रपाणयः ॥४३॥
स्कन्दनाश्च वितुण्डाश्च विपुलाश्चाथ गुह्यकाः ।
महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ ॥४४॥
मुकुन्दकुन्दनीलाश्च खर्वः सिद्धास्त्वतः पुरः ।
सर्वानुभूतिर्गणिमान्मणिभद्रश्च नन्दनः ॥४५॥
सुसिद्धः सुमनाः शङ्खः कण्डूतिर्वसुमानपि ।
पिङ्गाक्षश्चतुरश्चाथ भूतानां तु गणाः पुनः ॥४६॥
[6]विपरीतकरा दान्ताः सर्वज्ञाः सर्वदर्शिनः ।
नानाप्रकारवदना नानाबाहुशिरोधराः ॥४७॥
चतुष्पथपथाट्टालशून्यालयकृताश्रयाः ।
ककुभा तु ककुप्काष्ठा दिग्दिशा हरिता हरित् ॥४८॥

---

१ पर्वतः किंनराश्च तेC २ श्वेडकOK ३ दुर्विंदाश्चB ४ उपवीशB ५ कक्कर्णाOK ६ विपरीतेB ।

सूर्यपर्यायोदयार्था [1]प्राची पूर्वा च मङ्गला ।
दक्षिणावाच्यपाची[2] च पश्चिमा तु प्रतीच्यपि ॥४९॥
सूर्यार्थादस्तपर्यायाऽथोदीची त्वपराजिता ।
इन्द्राग्नियमरक्षो[3]म्बुवायुश्रीदपिनाकिनाम् ॥५०॥
पर्यायतोऽपि तस्येदमीबन्ताः स्युः क्रमादिमाः ।
ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ॥५१॥
पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ।
करिण्योऽभ्रमुः कपिला पिङ्गलानुपमा क्रमात् ॥५२॥
ताम्रपर्णी शुभ्रदन्ती [4]वामना चाञ्जनावती ।
रविः शुक्रो मही सूनुः स्वर्भानुर्भानुजो विधुः ॥५३॥
बुधो बृहस्पतिश्चेति क्रमाद्दिक्पतयो ग्रहाः ।
[5]क्लीबाव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम् ॥५४॥
विदिशाऽपदिशा काष्ठा चोपदिक् स्यादतः पुनः ।
अभ्यन्तरं त्वन्तरालं द्वयोर्मध्यगतं च यत् ॥५५॥
दिगैक्ये चक्र[6]वालं तु चक्रवाडं च मण्डलम् ।
यथापरेतरा पूर्वा तथा पूर्वेतरापरा ॥५६॥
यथोत्तरेतरापाची तथाऽपाचीतरोत्तरा ।
अपाग्भवमवाचीनमुदीचीन[7]मुदग्भवम् ॥५७॥

---

१ वाची^OK २ चाप्यपाचीB ३ रक्षो व (वः वरुणः इत्यर्थः स्यात्) ४ चाङ्गनेति पाठोऽन्यत्र ५ क्लीबेत्यर्धद्वयं केवलं B पुस्तके दृश्यते, दिक्स्यादतः पुन इति K पुस्तके पूर्वश्लोके एव दृश्यते ६ वातं B ७ मुदाभवम् B

प्रत्यग्भवं प्रतीचीनं प्राचीनं प्राग्भवं पुनः ।
सार्वदिक्कं तु दिश्यं स्यादमूनि त्रिषु तद्वति ॥५८॥
यामार्द्धैरष्टभिः [1]सूर्यमीशान्यादिदिशः क्रमात् ।
आप्रातः प्रातरारभ्य भुनक्त्यङ्गारिणी च सा ॥५९॥
[2]भुक्तोज्झिता भुज्यमाना ज्वलिता चोपधूपिता ।
एताः सोपद्रवास्तिस्रः पञ्चान्या निरुपद्रवाः ॥६०॥
आदित्या वसवो रुद्रा अत्र वैवस्वतेन्तरे ।
[3]गणास्त्रयश्च देवानां शुचिरिन्द्र इति क्रमः ॥६१॥
आजानाः कर्मजनुषः सर्वे देवगणा इति ।
कल्पद्रौ केशवकृते [4]भुवस्कन्धे द्वितीयके ॥६२॥
साधारणः प्रकाण्डोऽयं प्रथमः सिद्धिमागतः ।

इति अष्टादशप्रकाण्डः ।

---

धनंजयोग्निर्ज्वलनो वीतिहोत्रोऽचतिः [5]शिवः ।
जुहुराणः शुष्म घासिर्हव्यवाड् दमुना वसुः ॥१॥
सप्तार्चिः पावनो [6]वह्निर्विश्वप्सा वायुवाहनः ।
कृपीटयोनिः कुतपो रक्तवर्णस्तनूनपात् ॥२॥

---

१ सूर्यैतीशाB सूर्यईशान्यादीति पाठः स्यात् २ भुक्त्वोB ३ गणा इत्यर्धंB पुस्तके नास्ति ४ स्वर्गस्कन्धे मनोहरेCK ५ शिरःB ६ वह्निर्विश्वभावायुराहनंB

छागार्थवाहनार्थः स्याज्जातवेदा उषर्बुधः ।
दूतो वैश्वानरो मन्त्रो दीधितिः स्वर्णसप्तयोः ॥३॥
बर्हिः शुष्मा कृष्णवर्त्मा स्वाहापतिविरोचनौ ।
आश्रयाशो बृहद्भानुः [1]शिखावान्भूनिकेतनः ॥४॥
हिरण्यरेताः कपिलो नाचिकेतो विभावसुः ।
समित्पीथः शुचिपतिस्तमोवैर्याशुशुक्षणिः ॥५॥
क्लीबेऽपां पित्तमप्पित्तं ज्योति[2]र्बर्हिर्हविश्च षण् ।
अपि वायु[3]सखानन्तः पाचनः पावनोनलः ॥६॥
बर्हिः शुष्म उदर्चिः स्याद्बहुलो हव्यवाहनः ।
अग्निहोत्रोग्निशुष्मा च बभ्रुः शुक्रश्च पावकः ॥७॥
आश्रयाशोप्याशयाशो हव्याशः शुचिराशिरः ।
शोचिष्केशः शमीगर्भो विश्वप्सश्च समन्तभुक् ॥८॥
पर्परीको रोहिदश्वो वसुर्वायु[4]सखो हरः ।
उषर्बुद्बहलो हव्यः कृशानुर्जागृविर्वसुः[5]॥९॥
धूमध्वजश्छागरथो हुतार्थादशनार्थकः ।
बलिदीप्तश्चोर्ध्वगतिर्दमूनाश्च विभावसुः ॥१०॥
[6]द्युः कः कर्कश्च दस्मश्च [7]शोणो धिष्ण्यश्च भास्करः ।
तुत्थः श्रेष्ठश्च यज्ञश्च तमोहा हौमिरेधतुः ॥११॥

१ शिखान्मुनि च केतवः B २ बर्हि BO ३ सखो B ४ सखा B ५ वैसुः CK
६ द्युः CK ७ शोणे CK

स्याद्भुवन्युश्च धमनश्छिदिरः [1]सुशिरोऽपि च ।
[2]रीपिङ्गलश्चक्रवाडोऽदेवताडो वृषाकपिः ॥१२॥
अग्निहोत्रो महावीरः पशुपर्यायतः पतिः ।
जलेन्धनोऽब्धिकुक्ष्यग्नि[3]रौर्वश्च वडवानलः ॥१३॥
संवर्त्तको वाडवः स्याद्वडवामुख इत्यपि ।
वनवह्निर्दवो दावः स्कन्धाग्निः स्थूलकाष्ठ[4]धक् ॥१४॥
[5]छगणस्तु करीषोत्थश्छागलोऽथ तुषोद्भवे ।
कुकूलः [6]कूकलोऽपि स्यान्मुर्मुरोऽथ चितागते ॥१५॥
क्रव्यादोऽथ तृणोद्भूते स्यात्तरत्सम इत्यपि ।
ज्वलतः प्रोद्गतकणौ स्यातां [7]सुत्वरकुष्करे ॥१६॥
त्रिषु [8]स्फुलिङ्गो धूमस्तु वन्ह्यर्थेभ्यो ध्वजार्थकः ।
भम्भोऽम्भः[9]सूर्मरुद्वाहः खतमालोऽस्त्रियां स्तरी ॥१७॥
जीमूतवाही[10]धूम्रो ना करमालः सुगन्धिनि ।
अगर्वादिभवो धूपो घ्राणादीन्द्रियतर्पणः ॥१८॥
धूमधाराधूमलता लंधूमो धूमजे मले ।
यत्तृणादौ स्थिते तत्र धूमाङ्गोऽथ कला[11]दश ॥१९॥
धूम्रार्चि[12]रूष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी ।
सुश्रीः सुरूपा कपिला हव्य[13]कव्यवहे अपि ॥२०॥

१ सुशिरोCK २ पिङ्गलश्चक्रवाडोपिB ३ रौर्वश्चेत्यक्षरत्रयंKC पुस्तकयोर्नास्ति ४ धक्B ५ हेगणCK हेगणB त्रिकाण्डादौ छगणः ६ कुकूलोB ७ सुष्करकुष्करेB ८ स्फुलिङ्गा ९ भःB १० धूम्रानोB ११ दथCK १२ रूष्म १३ कव्येB

अग्नेःप्रिया स्वधा स्वाहा स्तव्यस्त्राय्यस्य रोहितः ।
अश्वा विधूमे ज्वलिते काष्ठांशेऽङ्गार इत्यपि ॥२१॥
इङ्गालोप्यथ निर्वाणे कोकिलः सरसेऽरसे ।
स्त्रियां रक्षा विभूतिः स्यात् क्लीबे भसितभस्मनी ॥२२॥
अग्न्युच्छिष्टं पुमान्क्षारः सामिज्वलितदारुणि ।
अलातमुल्मुकं तुल्ये स्त्र्यर्चयो हेतयः शिखाः ॥२३॥
अर्ची तद्वत्स्त्रियां क्लीबेऽप्यर्चि ज्वाला स्त्रियां पुमान् ।
स्त्रियां महत्यां तस्यां तु झलक्का च भभक्कया ॥२४॥
यालातसंभवा सोल्काऽथाग्नेः स्वेच्छोद्भवाः कणाः ।
त्रिषु स्युरथ संतापः संज्वरोऽथ[1] जलादिकात् ॥२५॥
प्रतप्तादुद्भवे पुंसि बाष्प[2]ऊष्मश्च पुंस्ययम् ।
कल्पद्रौ[3] केशवकृते भुवस्कन्धे द्वितीयके ॥२६॥

भूस्थदेवप्रकाण्डोऽयं द्वितीयः सिद्धिमागतः ।

---

स्पर्शनः कः समीरो यः[4] स्पर्शनो मारुतो नभः ।
वायुस्ततो मातरिश्वा हरिरात्मा वहश्च वाः ॥१॥

---

१ ज्वलाB २ ऊष्मा पुमांश्च षणCK अनयोर्वाष्प इति नोपलभ्यते ३ केशवेत्यादि-द्वितीयके इत्येतदन्तं केवलंB पुस्तके दृश्यते ४ पःCK

[1]सृदाकुः पञ्चलक्ष्मा च विश्वप्सा अजिरः पुनः ।
[2]धारावलीरौ खश्वासः क्षिपणुश्च जगद्बलः ॥२॥
धूलिध्वजो बलदेवो महाबलमलिम्लुचौ ।
चञ्चलश्चपलः प्राणः संहर्षः प्रवहो वहः ॥३॥
पृषदश्वो गन्धवहो जगत्प्राणः समीरणः ।
सदागतिर्गन्धवाहौ निःपावश्चाशुगोनिलः ॥४॥
शुचिर्नभस्वत्पवनपवमानप्रभञ्जनाः ।
वाहो मरुल्लोहघनः[3] पश्चिमोत्तरदिक्पतिः ॥५॥
श्वसनः श्वसिनो वातिश्चलश्चापि [4]जगत् जगत् ।
महतः पृषताश्वोपि शरयुर्मेघकारकः ॥६॥
शीतलो जलकान्तारो मेघारिः स्मरोऽपि च ।
पृश्न्याकुलश्च वातूलो वातगुल्मः[5] प्रकम्पनः ॥७॥
अपि वातो महावायुर्निदाघसमयानिले ।
[6]चारार्थाद्वायुपर्यायो झञ्झा[7] प्रावृड्भवेऽनिले ॥८॥
दाक्षिणात्यस्तु वासन्तः स चोक्तः मलयोत्तरः ।
आः सङ्गिनी च वाताली स्याद्वात्या वातमण्डली ॥९॥
वातोद्भवं तु वातूलं त्रिषु द्रव्ये गतेऽपरे ।
प्राणादयो दशाङ्गस्थास्तत्तत्स्थान[8]समाश्रयाः ॥१०॥

---

१ सप्तकुष्टः B २ धरावलीCB धराचलाK ३ घनःCK ४ भगन्B ५ गुल्म्यः B
६ चराB ७ संसाB ८ नेB

प्राणो नासाग्रहृन्नाभि[1]पादाङ्गुष्ठान्तगोचरः ।
अपानः पृष्ठपृष्ठान्तपार्श्वमन्या[2]गतिस्ततः ॥११॥
समानः संधिहृन्नाभीपूदानो हृच्छिरोन्तरा ।
सर्वत्वग्वृत्तिको व्यानो नाग आकुञ्चनक्रियः ॥१२॥
प्रसारणक्रियः कूर्मो [3]वल्गनार्थो धनंजयः ।
कृकरो धावने[4]दक्षो न मुञ्चति मृतं वपुः ॥१३॥
वहः स्यात्प्रोत्संविपरापरिभ्यश्च परो वहः ।
एते वायुगणाः सप्त सप्तस्कन्धसमाश्रयाः ॥१४॥
अन्तरिक्षस्य तत्रस्थाः [5]पान्ति लोकांश्चतुर्विधान् ।
एव[6]मेकान्नपञ्चाशत्तरसी तु रयः स्यदः ॥१५॥
[7]जवोथ शीघ्रं त्वरितं लघु क्लीबेऽरमव्ययम् ।
क्षिप्रं द्रुतं सत्वरं च चपलं तूर्णमाशु च ॥१६॥
सततेनारताश्रान्तसंततताविरतानिशम् ।
नित्यानवरताजस्रमव्ययं स्याद्भरः[8] पुमान् ॥१७॥
अतेर्वेलार्थमात्राः स्युर्भृशमुद्गाढनिर्भरे ।
तीव्रैकान्तनितान्तानि गाढबाढदृढानि च ॥१८॥
क्लीबे शीघ्राद्यसत्त्वे स्यात् त्रिष्वेषां भेद्यगामि यत् ।
इन्द्रो वृद्धश्रवा जिष्णुर्मेघार्थाद्वाहनार्थकः ॥१९॥

१ पादोङ्गुष्ठाज B २ गतिःस्मृतः B ३ चलनार्थो B ४ दक्षो B ५ यान्ति B
६ मेकोन C ७ तरो B ८ ध्रुवः B

ऐरावतोद्रिपर्यायभिन्मरुत्वांस्तुलोपि च ।
अर्की[1] विडौजा मघवा[2] वैकुण्ठाखण्डी[3]रकौटिराः ॥२०॥
वृत्रो घनाघनः शक्रः [4]सुनासीरः पुरंदरः ।
पुरुहूतः प्रयागश्च वासवो हरिवाहनः ॥२१॥
देवपर्यायतः श्रेष्ठपर्याय ऋषभध्वजः ।
धाराङ्कुरो[5] दुश्च्यवनः [6]कौशिकश्चन्दिरस्तपः ॥२२॥
पुलोमपाकनमुचिबलवृत्रनिषूदनः ।
वास्तोः सुराणां प्राच्याश्च लोकानां च दिवःपतिः ॥२३॥
शच्या अपि च जम्भारि[7]पर्यायो माहिरो हरिः ।
स्वराट् संक्रन्दनोनुग्रधन्वा [8]पर्थज्ञ इत्ययम् ॥२४॥
[9]पामनेमिर्विडौजोपि वज्रपाण्यर्थ इत्यपि ।
पूतक्रतुर्महेन्द्रश्च दल्मी[10]वाणस्तुलोपि च ॥२५॥
देवत्रिलोकीपर्यायराजार्थो मघवानपि ।
प्राचीनबर्हिः सुत्रामा[11]सूत्रामापि वृषः पुनः ॥२६॥
शतक्रतोश्च पर्यायः सहस्रान्नयनस्य च ।
स्याद्दभुक्षास्तुराषाट् च तप आतङ्कुरावणौ ॥२७॥
किणालातश्च हरिमा[12]न्वियुतो वज्रदक्षिणः ।
देवदुन्दुभिपर्जन्यौ बाहु[13]जज्ञोस्य तु प्रिया ॥२८॥

---

१ अर्कोB २ मघवोB ३ ण्डिरB ४ शुनासीरःB ५ शेB ६ स्व (ख) दिर-स्तपःB ७ पर्यायामहिरोB ८ यथत्तB, ९ यामB १० वाणाB ११ चूत्रामाCK सूत्रीमा सूत्रोमीपिB १२ न्विपुताB १३ तज्ञोB

पूतक्रताय्यी च[1] शची स्यादिन्द्राणी शतावरी ।
पुलोमतनयार्थापि गन्धोली जयवाहिनी ॥२९॥
[2]सहस्रपूर्णचन्द्राढ्या चारुरावा शचा शचिः ।
सचिः स्यात्तविषी चापि ताविषी तनयोस्य तु ॥३०॥
जयो जयन्तो[3]जयतो यागसन्तान इत्यपि ।
देवसेना तस्य सुता जयन्ती च गुहप्रिया ॥३१॥
हयंकषो मातलिः स्यादिन्द्रपर्यायसारथिः ।
वृषणाश्वावस्य हरी हय उच्चैःश्रवा [4]बिलः ॥३२॥
अप्युच्चैः श्रवसः सस्यात्सप्तवक्त्रार्थ इत्यपि ।
मयूररोमसदृशाः सहस्रं हरयो हरेः ॥३३॥
[5]विश्वौकसारा वृषभाऽमरा सुदर्शना न ना ।
अमरावत्यपि पुरी वनं तु मिश्रका स्त्रियाम् ॥३४॥
षण्वृषणवसु [6]पारुष्यं नन्दनं कन्दसारकम् ।
ऐरावणोस्त्रियामैरावतश्चापि सदामदः ॥३५॥
अभ्रपर्यायमातङ्गो भद्ररेणुः पुमानयम् ।
चतुर्दन्तो हस्तिमल्लः सूर्यपर्यायसोदरः ॥३६॥
स्यात्सुदामा श्वेतगजोऽभ्रमुप्राणेश्वरार्थकः ।
द्वाःस्थस्तु देवनन्दी स्यात्सरो नन्दीसरोस्य च ॥३७॥

---

१ तु[Ck] २ सहस्रेत्याद्यर्धं B पुस्तके नास्ति ३ जयतो इति CK पुस्तकयोर्नास्ति
४ निलः B ५ वस्वौकसारेत्यन्यत्र ६ पारुथं K

वैजयन्तौ तु प्रासादध्वजौ वज्रोऽस्त्रियां पुनः ।
गिरि[1]कण्टकपर्यायः शतकोटिश्च गौः पुमान् ॥३८॥
[2]शंवसंवौ[3]स्वरुः सान्तं स्यात् स्त्रियामशनी[4]शरुः ।
पृदाकुर्ना ह्रादिनी स्त्री पविः पुंस्यविरित्यपि ॥३९॥
[5]भिन्द्रो भिदिर्भिदूर्जम्भ इन्द्रार्थादायुधार्थकम् ।
शतधारं शतारं चास्त्रोत्थं भिदिरमम्बुजम् ॥४०॥
अस्त्रियां कुलिशं[6]शम्बो दम्भोलिरशनिर्द्वयोः ।
भेदिरं भेदिरशनी चाशनोऽपि पुमानयम् ॥४१॥
एकं वज्राशनिरपि केषांचन मते द्वयोः ।
स्वरु[7]र्हृग्भूर्विमानोऽस्त्री व्योमार्थाद्वाहनार्थकम् ॥४२॥
देववाहनपर्यायं मन्दारः पारिजातकः ।
संतानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥४३॥
पञ्चैते देववृक्षार्थी नासत्यावश्विनौ यमौ ।
आश्विनौ वाडवेयौ तौ स्ववैद्यावश्विनीसुतौ ॥४४॥
तौ दस्रावपि नासत्यौ दस्रो नासत्यइत्यपि ।
नासत्यदस्रावेकोक्त्या तौ च [8]रासभवाहनौ ॥४५॥
गदान्तकौ यज्ञवहौ विश्वपर्यायकृत्तु सः ।
अपि त्वष्टा विश्वकर्मा सुरपर्यायवर्द्धकिः ॥४६॥

---

१ चण्टकB २ शंवसंवाविति Ok पुस्तकयोरतिदुष्पठम् ३ स्वदुःB ४ शादुःB ५ भिद्रोB ६ शम्भोB ७ हंन्भूB ८ रारभOK

अथ स्याच्छ्राद्धदेवार्थो यमः कालोन्तको हरिः ।
कृतान्तो हर्षणः कङ्को महिषाद्वाहनध्वजः ॥४७॥
दक्षिणाशा[1]पितृप्रेतधूमोर्णानां [2]यमस्य च ।
धर्मजावितयोरीशपर्यायः समवर्त्त्यपि ॥४८॥
दण्डाद्यामधारधरश्चित्रगुप्तश्च [3]पार्परः ।
अर्कपर्यायपुत्रार्थः कीनाशो मृत्युरित्यपि ॥४९॥
कालिन्दीसोदरः कर्मकर औदुम्बरश्च सः[4] ।
विश्वप्साः शमनो धर्मो यमनो दण्ड इत्यपि ॥५०॥
महासत्यः पुराणान्तः कालकूटः पुनश्च सः ।
अस्य प्रिया तु धूमोर्णा पुरी संयमनी पुनः ॥५१॥
दासौ चण्डमहाचण्डौ चित्रगुप्तोऽस्य लेखकः ।
[5]वैध्यतस्तु प्रतीहारः [6]कालीची तु विचारभूः ॥५२॥
[7]पञ्चिका [8]दुर्गसंधानी पितरस्तु पितामहाः ।
स्वधाकव्यभुजश्चन्द्रगोलस्थाः पूर्वजा अपि ॥५३॥
न्यस्तशस्त्रा देवपूज्या एतेषां सप्तको गणः ।
प्रभाकरा बर्हिषदोग्निष्वात्ताः कव्यभोजनाः ॥५४॥
उप[9]हूता आज्यपाश्च सुकालिन इति क्रमात् ।
अमूर्त्ताश्च समूर्ताश्च राक्षसस्तु खसात्मजः ॥५५॥

---

१ पति इति सर्वत्र पाठः २ यमराजः, धर्मराज इत्यादि ३ पापरः K पार्यंसः B ४ कः B
५ वैचित्रस्तु CK वैद्युतस्तु B ६ काणीची B ७ पञ्जिका B ८ अग्रसंधानी वैज ९ हूता B

संध्या[१]बलो यातुधानो हनूषः शमनी[२]षदः ।
[३]उद्गरस्तब्धसंभारपलप्रिय[४]कखासुताः ॥५६॥
रात्र्यर्थाद्बलपर्यायस्त्रिशिराश्च प्रवाहिकः ।
रात्रिंचरो रात्रिचरः कर्बुरो निकषात्मजः ॥५७॥
कर्बूरः स्यात्पुण्यजनः क्रव्यात् क्षश्चापि नै[५]ऋृतः ।
विखुरः कोणपः शङ्कुरासरो रतविष्वणः ॥५८॥
कीनाशश्च पलाशश्च नृचक्षा यातुरस्त्रियाम् ।
क्लीबे भूतं च रक्षश्च पुं वा नैऋृतनिऋृती ॥५९॥
पिशिताशनपैशाचौ पलादश्च पलादनः ।
[६]आशार आशिरोऽपि स्या[७]दाशिरः कुणपोऽस्रपः ॥६०॥
[८]अस्त्रपः कर्वरोऽपि स्यात् क्रव्यादो जातुधानकः ।
क्रव्याच्चापि पिशाचश्च कापिशेयोऽस्य मातरि ॥६१॥
निकषा नैकषेयी स्यात् [९]स्त्रियः स्त्रीप्रत्ययार्थकाः ।
धनदानुजपर्यायो रावणो राक्षसेश्वरः ॥६२॥
कैकसेयो वैश्रवणः पौलस्त्यः शंकराश्रयः ।
दशाभ्यश्च शिरःकण्ठमुखपर्याय इत्यपि ॥६३॥
लङ्कायाः पतिपर्यायो देवपर्यायवैर्यपि ।
मर्त्यार्थारिः कुम्भकर्णविभीषणाग्रजार्थकः ॥६४॥

१ बलोB २ पदाःB ३ उद्गरःB ४ रवाB ५ नौऋृतःB ६ आशारश्चाशिरोपि स्यात् दाशिरः कुणपोस्रपःB ७ दाशर इति स्यात् ८ अश्रपःB ९ स्त्रियाःC

मन्दोदरी प्रिया त्वस्य मयपुत्री मनस्विनी ।
इन्द्रजिन्मेघनादः स्याद्रावणिश्चात्तपूर्वजः ॥६५॥
अमात्याः स्युः प्रहस्ताद्याः पुरी लङ्कास्य भग्न्यपि ।
[1]शूर्पणखा शूर्पणखी तालव्यादिरियं मता ॥६६॥
मारीचो मातुलोस्य स्याच्चन्द्रहासोऽसिरस्य च ।
वरुणो जलकान्तारो मेघनादः पुरंजनः ॥६७॥
अब्धिपर्यायसन्नार्थः प्रचेता वश्च कुण्डली ।
अब्यादः पश्चिमदिशापतिपर्यायपाशिनौ ॥६८॥
सुखाशोऽपि विलोमः स्याज्जम्बूको जम्बुकोऽपि च ।
अप्युद्दामः [2]संवृतः स्याद्दुन्दुभि[3]स्तस्य तु प्रिया ॥६९॥
गौरी[4]तल्ली काह्लली स्यादथ श्रीदः सितोदरः ।
कुह एलविलो यक्षो नृधर्मा गुह्यकेश्वरः ॥७०॥
शम्भुपर्यायमित्रार्थः पौलस्त्यो नरवाहनः ।
एकपिङ्गो वैश्रवणः कुबेरो धनदश्च सः ॥७१॥
पिशाचकी राजराजो धनयक्षनिधीश्वरः ।
इच्छावसूरत्नकरः सत्यसंगर इत्यपि ॥७२॥
वक्रनेत्रो रत्नगर्भो वसुश्चापि बको द्रुमः ।
एककुण्डलपर्यायः [5]सोमः पद्मार्थलाञ्छनः ॥७३॥

---

१ सूर्पB २ संकुरःB ३ श्चास्यB ४ तल्लिःB ५ सोपःB

धनकेलिः सुप्रसन्नो [1]महासूचः प्रमोदितः ।
श्रेष्ठोथाप्यस्य तनयो नलकूवर इत्यपि ॥७४॥
द्वितीयस्तु मणिग्रीवो विमानं पुष्पकं पुनः ।
पुष्यमस्यैव नगरी वसुसारा वसुप्रभा ॥७५॥
[2]वस्वौकसाराप्यलका वनं चैत्ररथं पुनः ।
मायुराजः सारथिः स्यात् कैलासः स्थानमप्यथ ॥७६॥
अथ यक्षो गुह्यकः स्याद्वरपर्यायवास्यपि ।
स च पुण्यजनो राजा किंनरश्च मयुः पुमान् ॥७७॥
तुरङ्गार्थमुखार्थोथ निधिः स्त्री [3]सेवधिः पुमान् ।
शेवधिश्च कुनाभिश्च स्याद्वर्णकविरप्यथ ॥७८॥
ईशः शम्भुः पशुपतिरट्टहासो बकः शिवः ।
अजो मः प्रहसः शूली भोगः [4]संजश्च शंकरः ॥७९॥
व्योमपर्यायकेशार्थः पशुपर्यायतः पतिः ।
घस्रो जयन्तो गिरिशो मृडो भीष्मो महेश्वरः ॥८०॥
ईश्वरो हः शर्वगुह्यौ चन्द्रपर्यायशेखरः ।
स्यान्नीलात्कालतः कण्ठपर्यायस्त्र्यम्बकार्थकः ॥८१॥
उग्रोरुः खण्डपरशुर्भूतेशः प्रमथाधिपः ।
झोटिङ्गः शिशिरो बभ्रुः कटमर्दश्च[5]रेवतः ॥८२॥

---

१ महासहः B २ विश्वौकसारेत्यमरावत्यां पूर्वमुक्तम् ३ शवधिः B ४ संतश्च ५ रैवतः B

मृत्युंजयः कृत्तिवासा भालार्थाल्लाञ्छनार्थकः ।
भालदृग्गोपतिर्हीरः पिङ्ग[1]दृग्त्र्यवैढोऽव्ययः ॥८३॥
पिनाकी च कटाटङ्को जटाटीनो महानटः ।
अद्रिधन्वा कपर्द्युग्रस्तमोहा नन्दिवर्धनः ॥८४॥
केदार[2]श्चन्दिलो भीमो भैरवो गजदैत्यभित् ।
शितिकण्ठो गुडाकेशः श्रीकण्ठः पांशुचन्दनः ॥८५॥
कटप्रूर्मिहिराण्ः स्याच्छिपिविष्टः कपालभृत् ।
वामदेवो जगद्योनिरुड्डीशो धूर्जटि[3]र्हरः ॥८६॥
महादेवः कङ्कटीकः कूटकृच्चाब्दवाहनः ।
बहुरूपो देवमणिर्दिगम्बरवृषाकपी ॥८७॥
कृशानुरेतःपर्यायाः स्मरपर्यायशासनः ।
हिरण्यवह्न्योः पर्यायरेताः स्यान्नीललोहितः ॥८८॥
भवो बुद्धः कृतकरोऽक्षत उत्सर्वतोमुखः ।
सुप्रसादो महाकालः स्थाणू रुद्रश्च भौतिकः ॥८९॥
कालंजर उमार्थेभ्यः पत्यर्थस्त्रिपुरान्तकः ।
नरास्थिमाल्यम्बरीषः कोपवाद्यपराजितः ॥९०॥
गङ्गाधरोऽन्धकमखपर्यायरिपुवाचकः ।
वृषपर्यायकेत्वर्थो वाहनार्थः खरुर्वरः ॥९१॥

---

१ दृक् त्र्यंबो २ श्चदिलो B ३ हैंसः B ।

शवरो मन्दरमणिर्विशालाक्षोऽग्निलोचनः ।
स्यात्सिताङ्गश्च [1]समहा महाङ्गीनो महाम्बुकः ॥९२॥
उन्मत्तवेशो वरदो भूमिकायो दशोत्तमः ।
धूर्तकूटो महानादः सुभगोगण्डै[2]कलोचनः ॥९३॥
स्त्रीदेहार्द्धोऽहिपर्यङ्को [3]जटापर्यायवानपि ।
[4]कोलो नरार्थादाधारो जयन्तश्चापराजितः ॥९४॥
दिशां प्रियतमो वृद्धो योगी धूम उलन्दकः ।
समुद्राद्वाहनार्थश्च संध्यापर्यायनाट्यपि ॥९५॥
अहिर्बुध्न्यो रेरिहाणो हिबुध्नः कपिशोऽञ्जनः ।
[5]भद्राक ऊर्ध्वरेताः स्याद्भगाली च कपाल्यपि ॥९६॥
श्मशानसद्मा गोपालः सर्वज्ञश्च विषान्तकः ।
महेशः खण्डपरशुः शिपिविष्टश्च सर्वगः ॥९७॥
भर्गो भर्ग्यः खण्डपर्शु[6]र्भरुः शङ्कुर्हरिः पुनः ।
शंभूः सर्वोऽपि वामः स्या[7]द्गिरिशो नटराडपि ॥९८॥
नाट्यप्रियोऽस्थिपर्यायधन्वर्थोपि ध्रुवः स च ।
एकदृक्स्यात्पञ्चमुखपर्यायोऽपि महाव्रती ॥९९॥
कङ्कटीको [8]गुह्यगुरुरर्द्ध[9]कालो दिशांप्रियः ।
बहुरूपः सुप्रसादो नवशक्तिश्च कूटकृत् ॥१००॥

---

१ समहागीनोऽपि च महाबुकः B २ नेक B ण्वेक बैज ३ जवा K ४ कालो B
५ भद्रकः B ६ परशु BCK ७ द्विरीशो B ८ गुप्त B ९ कीलो B ।

स्यादष्टमूर्त्तिपर्याय एकलिङ्गं च न द्वयोः ।
कपर्दोऽस्य जटाजूटोऽस्त्रियां खट्वाङ्ग इत्यपि ॥१०१॥
शूलोऽस्त्रियां पिनाकोऽपि त्रिशूलं त्रिशिखं च षण् ।
अजगावं चाजगवमजकावं तदिष्यते ॥१०२॥
तदेवाजकवं प्रेतमञ्जरी स्त्री त्रिशूलकम् ।
शवपांशुलकं [1]चाथ कावं गावं कवं गवम् ॥१०३॥
अजाद्धनुः स्यादप्येवं पिनाकोऽस्त्री ततोप्यथ ।
प्रमथाः स्युः पारिषदाः पार्षदाः स्युर्गणाश्च ते ॥१०४॥
ब्राह्मी माहेश्वरी चैन्द्रा कौमारी वैष्णवी तथा ।
वाराही चण्डी चामुण्डा मातरोष्टावतः [2]पराः ॥१०५॥
विभूतिभूं‍तिरैश्वर्यमणिमा महिमा पुनः ।
गरिमा लघिमा प्राप्तिः प्राकाम्यं चेशिताष्टधा ॥१०६॥
भृङ्गिरीटिभृ‍ङ्गिरिटिभृ‍ङ्गी [3]नाड्यस्थिविग्रहः ।
भृङ्गिरीटः शलोपि स्याद्गणानामग्रणीश्च सः ॥१०७॥
वृषश्चापि शलो दक्षो महाभैरव[4]भैरवौ ।
महाकालः पुनर्बाणो लूनबाहु[5]र्वृषाणकः ॥१०८॥
वीरभद्रस्तु हीराजो हेलकस्तु कृतालकः ।
अथ चण्डो महाचण्डः कुशाण्डी कङ्कणप्रियः ॥१०९॥

---

१ चाग्र्यं B २ पराCk ३ नाड्यस्थि B ४ कौरवौ Ck ५ वैषाणकः CK

यजनो [1]मज्जनश्चापि छाग[2]मेषौ महाघसः ।
महाकपाल आलातः संतापनविलापनौ ॥११०॥
महाकपोलः पैलोऽजः [3]श्वेतकर्णः खरस्तथा ।
उल्कामाली महालम्भः श्वेतपादः खरांशुकः ॥१११॥
गोपालो ग्रामणीर्मायुर्घण्टाकर्णकरंधमौ ।
कपाली कृतकी लिम्पः [4]स्थूणः कर्णविकर्णकौ ॥११२॥
स्थूलकर्णो महाशीर्षो हस्तिकर्णः प्रतर्दनः ।
व्यालजिह्वो धर्मधनः संहारः क्षेमकोऽपरः ॥११३॥
भीमको [5]ग्रामकः स्विन्नो धीलण्डो मकराननः ।
पिशिताशी महाकुण्डो नखारिरहिलोचनः ॥११४॥
क्षण[6]कुन्थो[7]ऽप्रजातारिर्बकारिश्च शिवंकरः ।
विप्लावो लोमवेतालस्तामसः सुमहाकपिः ॥११५॥
उत्तुङ्गो[8]हेमजम्बूकः कण्डानककलानकौ ।
चर्म[9]ग्रीवो[10]जलोन्मादो ज्वालावक्त्रो विहुण्डनः ॥११६॥
हृदयो वर्त्तुलः पाण्डु[11]र्भुंडिरित्येवमादयः ।
नन्दिस्तु नन्दी शालङ्कायनिस्ताण्डव[12]नालिकः ॥११७॥
तण्डुर्नन्दीश्वरः[13]केलिकिलः कूष्माण्डको गणः ।
मञ्जुवक्त्रो मञ्जुघोषो मञ्जुश्रीर्ज्ञानदर्पणः ॥११८॥

---

१ मलनोश्चापिB २ मैषौC ३ शंखकर्णःB ४ स्थूलाकर्णB ५ यामकः ६ कन्थोB ७ पजामाकोष्टकारिश्चB ८ हयेति पाठः मर्वत्र ९ ग्रीवेB १० जलात्पादोB ११ रभृडि-त्येवB १२ तालिकइत्यन्यत्र १३ केलीकिलःB

स्थिर[1]चक्रो वज्रधरः कुमारोष्टारचक्रवान् ।
[2]नीलोपली [3]महारंजी प्रज्ञाकायश्च वादिराट् ॥११९॥
धियां पतिश्च खड्गी च नीलशार्दूलवाहनः ।
दण्डी बालव्रतः पञ्चवीरो वागीश्वरः शिखी ॥१२०॥
सिंहपर्यायकेलिः स्यादथ स्याच्छशि[4]शेखरः ।
[5]हेरम्बो देहको वत्सो निकुम्भी वक्रसंचरः ॥१२१॥
देवो वज्रकपाली च वज्रटी चाथ गौर्यपि ।
उमा कात्यायनी गोला सिनीवाली दृषद्वती ॥१२२॥
गौरा कालंजरी चण्डा चण्डाका चण्डकापि च ।
सिंहार्थाद्वाहनार्था स्यात्काली हिण्डी[6]श्वरीश्वरा ॥१२३॥
हिमाद्रिदक्षनन्दानां पर्यायेभ्यः सुतार्थका ।
[7]चण्डिश्च बाभ्रवी माता चर्या शिखर[8]वासिनी ॥१२४॥
गौतमी [9]सौः कृष्णपिङ्गा मारी च गणनायिका ।
शिवा भवानी रुद्राणी शर्वाणी सर्वमङ्गला ॥१२५॥
एका वरालिकानंशा शिवदूती यमस्वसा ।
अपर्णा रोहिणी दुर्गा मृडानी चण्डिकाम्बिका ॥१२६॥
कोटव्यदितिकैटभ्यः कैटभा[10]यादवी च सा ।
[11]शृङ्गा टेका शची देवी महादेवी कुमारिका ॥१२७॥

---

१ चक्रीB २ नीलोत्पलाB ३ महाराजीC ४ शैखरःB ५ हेरम्भाB ६ श्वरीश्वरेतिB पुस्तके न दृश्यते ७ चण्डी चB ८ वाशिनीB ९ सोःB १० वादवीB ११ श्रृङ्गाष्टिकाB

शूलभृत् कर्बुरी भ्रामर्यनन्ता विजयापि च ।
जयन्ती मालिनी तुङ्गी [1]दुर्वाराजवरा च सा ॥१२८॥
कालं[2]जरी भद्रकाली नारायण्यपराजिता ।
वृषाकपायी षष्ठी स्यात्तामस्यपि च लम्बिका ॥१२९॥
स्या[3]द्दर्हिध्वजपर्याया बाभ्रवी नकुली तथा ।
निशुम्भशुम्भमहिषमथनी भूतनायिका ॥१३०॥
नन्दिनी कौशिकी कृष्णा भ्रामरी रेवती[4]वरा ।
कालरात्रिर्महामाया विशालाक्ष्येकपाटला ॥१३१॥
महाविद्या सिनीवाली परमब्रह्मचारिणी ।
गण्डिनी योगिनी भीमाऽमोघा विन्ध्यनिवासिनी ॥१३२॥
वरदा वदरीवासा प्रगल्भा कृष्णपिङ्गला ।
कृष्णेन्द्रयोश्च पर्यायभगिन्यर्था च जाङ्गली ॥१३३॥
हिमा बहुभुजा स्कन्दमाता च श्री[5]दनाञ्जनी ।
सावित्री मन्दरावासा कर्वरी च महाजया ॥१३४॥
कोटिः कलापिनी [6]गङ्गी रक्तदन्ता च [7]वारुणी ।
हासानन्ता च [8]कूष्माण्डी मानस्तोका किरात्यपि ॥१३५॥
मलयाद्रिनिवासार्था जयन्ती गोकुलोद्भवा ।
अष्टादशभुजा पोत्री [9]नीलवस्त्रोग्रवारिणी ॥१३६॥

---

१ दुर्वैराB २ जराB ३ द्वार्हध्वजB ४ चराB ५ बलाञ्जिनीB ६ गाङ्गीB
७ वारुणीB ८ कुष्माण्डीB ९ नीलवस्त्र्योग्रवारिणीB

कुण्डा नारायणी शैला शाकंभर्यतुलप्रभा ।
सुनन्दा विकला लम्बा विकराला करालिका ॥१३७॥
नन्दयन्ती शतमुखी रौद्री नन्दा निरञ्जना ।
बलदेवस्वसा पुण्या महारौद्रा महानिशा ॥१३८॥
कुण्डा [1]कालंगमीहा च [2]दर्दुरी कुलदेवता ।
कालपर्यायदमनी पुनः शिखरवासिनी ॥१३९॥
जया च विजया सख्यौ मनस्तालस्तु वाहनम् ।
सिंहोस्याः कर्णमोटी तु चर्ममुण्डा च [3]चर्चिका ॥१४०॥
चामुण्डा च महागन्धा भैरवी च कपालिनी ।
मार्जारकर्णिका देव्योनन्ताः सर्वाधिपा इमाः ॥१४१॥
[4]बालचर्यो महासेनः पर्यायः शरजन्मनः ।
षडाननार्थः [5]सेनानीर्गुहः शिख्यर्थवाहनः ॥१४२॥
गौरीगङ्गाकृत्तिकाग्निपर्यायेभ्यः सुतार्थकः ।
द्वादशाक्षो जयन्तोऽपि महातेजाश्च शक्तिभृत् ॥१४३॥
क्रौञ्चतारकवैर्यर्थो देवसेनापतिश्च सः ।
कामजित्कामदः कान्तः स्कन्दः शीघ्रः शुचिः शिशुः ॥१४४
मयूरकेतुः स्वाहेयो [6]भूतेशो महिषार्दनः ।
षष्ठीप्रियो रेवतीजः पवित्रो मातृवत्सलः ॥१४५॥

---

१ कालिङ्गचिह्वा(ह्वा) चB २ दर्दुराB ३ चर्चिकेतिB पुस्तके नास्ति ४ बालाचर्यो महासेनपर्यायः B ५ सेनानिर्गुहः B ६ भूतेषोB

विश्वामित्रप्रियश्चण्डो दीप्तः शरवणोद्भवः ।
वासुदेवप्रियश्चापि स च द्वादशबाहुकः ॥१४६॥
प्रियास्य देवसेना स्याच्छस्त्रं शक्तिश्च वाहनम् ।
मयूरस्तनयौ [1]शाखविशाखावथ तद्गणाः ॥१४७॥
बालग्रहाः पूतनाद्या अथ मेघो बलाहकः ।
जलपर्यायतो वाह[2]धरमुग्दभृतः पुनः ॥१४८॥
[3]दर्दुरः खतमालः स्यान्नभःपर्याय[4]हस्त्यपि ।
व्योमधूमो वायु[5]दारुर्मदपीलुर्मदांबरः ॥१४९॥
अन्नं क्लीबे त्वरः कोशो भेको देवो घनोऽपि च ।
[6]धाराधरो धूमयोनिस्तडित्वानपि वारिदः ॥१५०॥
जीमूतः शंबरो वातरथोऽपि स्याद्वराहकः ।
[7]गडेरोब्दो गदयित्नुर्नभसोर्थाद्ध्वजार्थकः ॥१५१॥
मुदिरः स्त्री वारिमसिर्नश्राडब्दे तु वर्षुके ।
शब्दान्विते च पर्जन्यपर्यन्यौ वर्षुके घने ॥१५२॥
घनाघनो वर्षमस्त्री स्त्री वृष्टिर्वर्षणं च षण् ।
[8]वर्षं तस्य प्रतीघाते वग्राहावग्रहौ तडित् ॥१५३॥
शम्पा सौदामिनी विद्युच्चञ्चला च शतह्लदा ।
[9]सौदामनी च सौदाम्नी ह्लादिनी चाशनिर्द्वयोः ॥१५४॥

---

१ अस्य शाखो विशाखश्चनेगमेष (य) श्च पृष्ठजाः वैज २ मुग्भृत्ततःB ३ ददुरोःK ४ हृत्यपिB ५ दारूमन्दB ६ वाराधरोB ७ मदयित्नुर्गुडेरोब्दः स्तनयित्नुर्नभोध्वगःB ८ वर्षंतस्यB ९ सौदामनी चेतिK पुस्तके नास्ति ।

[1]त्तणस्याणोश्च पर्यायाद्भापर्याथा ह्रस्विसा ।
चपलार्थ्या च चिलिचिम्य[2]शन्यैरावती समे ॥१५५॥
[3]स्फूर्जथुश्चापि [4]विस्फूर्जथुश्च विस्फुर्जथुः समाः ।
आकालिकी च त्तणिका सैवोक्ता जलवालिका ॥१५६॥
तच्चाञ्चल्ये चाकचिक्यं क्लीबे स्यादथ [5]तद्ध्वनौ ।
स्फूर्जथुर्वज्रपर्यायाद्घोषपर्यायको नरि ॥१५७॥
अम्भोबीजस्य पर्यायः स्याद्द्वयोः करकः करः ।
क्लीबे बीजोदकं वर्षा बीजपर्यायमित्यपि ॥१५८॥
अम्ब्वर्थाद्घनपर्यायो मेघपर्यायतः कफः ।
तोयपर्यायडिम्भो ना स्त्रियां मेघास्थिपुञ्जिका ॥१५९॥
मेघास्थि, वर्षणं तु स्याद्द्योघृतं च परामृतम् ।
कादम्बिनी मेघमाला [6]सर्वं मेघभवं त्रिषु ॥१६०॥
अस्त्रियाद्यं च तद्घोषे गर्जितं स्तनितं च षण् ।
रसितं मेघपर्यायाज्ज्योतिषोर्थ इरंमदः ॥१६१॥
आयुधं त्विन्द्रपर्यायाद्धनुरैरावतं पुनः ।
तदेव स्याद्वात[7]रुषं वायुपर्यायतः फलम् ॥१६२॥
वल्मीकपर्यायभवं भिन्नं वा ऋजुरोहितम् ।
दीर्घर्जु चाप्यथासारो धारासंपात इत्यपि ॥१६३॥

१ त्तणस्था B २ स्याशन्यैरावती समा B ३ स्फूर्जथ B ४ विस्फूर्जथु B ५ तद्-ध्वनौ B ६ सर्वे CK ७ रूषं B

वायूद्धताम्बुलेशाः स्युः सीकराः शीकरा अपि ।
सीभरः शीभरास्ते स्युरथ स्यादपवारणम् ॥१६४॥
अन्तर्द्धा व्यवधा स्त्रीत्वेप्यन्तर्द्धिर्व्यवधिः पुमान् ।
अन्तर्द्धानतिरोधाने [1]च्छदनाच्छादने अपि ॥१६५॥
अपिधानपिधाने च व्यवधानं ततोप्यथ ।
अभ्रादिधूममहिषीसंवृतेह्नि दुर्दिनम् ॥१६६॥
चन्द्रमाश्चन्दिरः सोमः [2]क्लेदुः पैद्रश्च पक्षजः ।
सृप्रः पर्वविपद्गौरः [3]परिज्मश्च[4]विरोचनः ॥१६७॥
तिथिप्रणीश्च विश्वप्सा भुवन्युर्विकुसो हरिः ।
ग्रह[5]नेमिर्जयन्तोऽपि राजपर्यायको विधुः ॥१६८॥
[6]ऋक्षपर्यायनेम्यथ[ॅ]श्चित्राटीरो विभावसुः ।
दशश्वेताश्वपर्यायः [7]सुधापर्यायसूरपि ॥१६९॥
[8]स्तृर्दक्षजारोहिणीर्निडोषधीनां द्विजन्मनाम् ।
कुमुदिन्याश्च कौमुद्या ग्रहाणां चार्थतः पतिः ॥१७०॥
कलाशशैणच्छायानां पर्यायेभ्यो भृदर्थकः ।
जैवातृकोऽब्ज इन्दुग्लौर्विधुश्चन्द्रोऽत्रिनेत्रभूः ॥१७१॥
नभःपर्यायचमसो निशापर्यायतो मणिः ।
स्याच्छीतकरपर्यायो निशापर्यायतः करः ॥१७२॥

---

१ च्छदनB २ केदुःB ३ परिज्मश्चB ४ विरोचनम्B ५ णेमिB ६ यज्ञपर्याय-वम्यर्थB ७ सुधापर्यायेतिB पुस्तके नास्ति ८ स्तृदKC

हिमश्वेतद्युतिः शम्भुपर्यायेभ्यः शिरोमणिः ।
छायामृगसुधार्थेभ्यः [1]पिब्रुः सिन्धुः सुधार्थतः ॥१७३॥
तन्वर्थो यजतः [2]सप्रो जरणो द्रुस्तपः पुनः ।
कुमुदार्थाच्च बन्ध्वर्थो [3]राजराजः सुधांशुकः ॥१७४॥
कृत्तिकासंभवार्थः स्या[4]त्तापसः शपितोपि च ।
[5]क्रुष्टो मा विक्लिदः स्यन्दः सिन्धूत्थो बुध एकभूः ॥१७५॥
[6]परिज्छो वयुनाः स्नेहूः पुंसि नेमिः स्त्रियां पुनः ।
समुद्रार्थान्नवनीतं तारापीडोऽथ [7]तत्कलाः ॥१७६॥
अमृता मानदा विश्वा तुष्टिः पुष्टी रतिर्धृतिः ।
शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा ॥१७७॥
पूर्णा पूर्णामृता चेति षोडश स्युरथास्त्रियाम् ।
बिम्बः खण्डं च वा पुंसि पुंस्यर्द्धोर्द्धं समेंशके ॥१७८॥
स्यात् क्लीबे शकलं भित्तं शल्कं च[8] मण्डलं त्रिषु ।
कलङ्कोऽस्त्री लाञ्छनं च चिह्नं लक्ष्म च लक्ष्मणम् ॥१७९॥
अङ्कः पुंस्य[9]थ कान्तिः स्यात् कान्त्यपि स्यात् द्युतिश्छविः ।
अभिख्या परमा शोभा सुषमापि [10]द्युतीच्छवी ॥१८०॥

---

१ पिब्रः C पिष्णुः B २ संतो B ३ राजराज इत्यस्य स्थाने राजइत्येव CK पुस्तकयोरस्ति ४ त्तापसंशपितो B ५ ऊसोमो विक्लिधःसंदू सिंध्वर्त्था B, जूर्णो इति K पुस्तकपठितक्रुष्टो इत्यस्य स्थाने C पुस्तके वर्तते ६ परिज्मा वयुनस्तेहुः C ७ तत्कला B ८ चेति B पुस्तके नास्ति ९ ति B १० द्युतिश्छवी B

विह्वला[1]र्थं तु नीहारो वश्यो [2]वश्याय इत्यपि ।
नक्षत्रं [3]तारका तारा न पुमानुडु वा स्त्रियाम् ॥१८१॥
वा पुंसि ऋक्षं भं ज्योतिः स्तृ दिवाभीतमित्यपि ।
रात्रिदृश्यं च भासन्तमथ चन्द्रमसः स्त्रियः ॥१८२॥
एकोक्त्या दक्षपुत्र्यस्ताः क्रमात्स्युरथ न द्वयोः ।
स्त्रियामश्विन्यश्विकिनी क्लीबे चाश्वयुगित्यपि ॥१८३॥
दस्रपर्यायदेवत्यं वालिनी भरणी स्त्रियौ ।
भरणिर्यमपर्यायदेवत्यमथ कृत्तिकाः ॥१८४॥
स्त्रियां भूम्न्येव बहुला अग्न्यर्थाद्देवतं च तत् ।
प्रजापत्यर्थदेवत्यं रोहिण्यथ मृगः पुमान् ॥१८५॥
मार्गो[4] मृगशिरः षण् स्त्री मृगशीर्षं च षण् स्त्रियाम् ।
चन्द्रपर्यायदेवत्यमिल्वला[5]स्त्विल्वका अपि ॥१८६॥
इन्धकास्तच्छिरस्था यास्तारकाः पञ्च ता अथ ।
आर्द्रा स्त्री रुद्रपर्यायदेवत्यमथ पुंसि च ॥१८७॥
द्वित्वे पुनर्वसू चापि देवत्यमदितेरथ ।
द्वयोस्तिष्यश्च पुष्यश्च गुर्वर्थाद्देवतार्थकम् ॥१८८॥
[6]आश्लेषा सर्पदेवत्यमथ [7]भूम्नि स्त्रियां पुनः ।
स्यान्मघाः पितृदेवत्यमथ द्वित्वे स्त्रियामिमे ॥१८९॥

---

१ जंतु B २ वस्याय B ३ तारकं ४ मार्ग B ५ स्त्विन्वका B ६ स्त्र्या B ७ भूम्नि स्त्रियां पुनरिति B पुस्तके नास्ति ।

[1]ते स्यातां पूर्वफल्गुन्यौ भग[2]दैवतमित्यपि ।
तथैवोत्तरफल्गुन्यावार्यम्णं स्यादथ स्त्रियाम् ॥१६०॥
[3]हस्तः सवितृ[4]दैवत्यं चित्रा पुंस्यपि च स्त्रियाम् ।
त्वष्टृपर्याय[5]दैवत्यमथ स्वातिस्तु पुंस्त्रियोः ॥१६१॥
स्वाती स्त्रियां [6]च वाय्वर्थाद्देवत्यमथ च स्त्रियाम् ।
विशाखेन्द्रा[7]ग्निपर्यायदेवत्यं चाप्यथ स्त्रियाम् ॥१६२॥
अनुराधा तु मित्रार्थाद्देवत्यमप्यथास्त्रियाम् ।
[8]मूलं स्याद्रक्षःपर्यायदेवत्यमप्यथ स्त्रियाम् ॥१६३॥
पूर्वाषाढाम्बुपर्यायाद्देवत्यमथ च स्त्रियाम् ।
स्यादेवमुत्तराषाढा वैश्वदेवमथ त्रिषु ॥१६४॥
श्रवणं विष्णुपर्यायाद्देवत्यं स्यादथ स्त्रियाम् ।
धनिष्ठा च श्रविष्ठा च वसुपर्यायदैवतम् ॥१६५॥
अथ स्त्रियां शतभिषा पुंसि च स्याच्छताद्भिषक् ।
शततारा स्त्रियां क्लीबे देवत्यं वरुणार्थतः ॥१६६॥
अजैकपाददेवत्यं पूर्व[9]भद्रपदा स्त्रियाम् ।
अथाहिर्बुध्न्यदेवत्यं स्त्रियां [10]प्रोष्ठपदापि च ॥१६७॥
तथो[11]त्तरा भाद्रपदा रेवती तु स्त्रियां पुनः ।
पौष्णं स्यादथ ऋक्षाणि तेषामन्तो न कर्हिचित् ॥१६८॥

---

१ तौB २ देवतमित्यथB ३ हस्तंB ४ देवत्यंB ५ देवत्यB ६ जलार्थेभ्यो दैवत्यCK ७ ग्न्योःCK ८ ज्येष्ठा न काप्यादर्शपुस्तके दृष्टा ९ भाद्रB १० प्रौष्ठB ११ त्तरभद्रCK

भूपर्यायसुतार्थस्तु वक्रआरोऽपि मङ्गलः ।
रक्तार्थादङ्गपर्यायः शिवपर्यायवीर्यजः ॥१९९॥
अङ्गारः स्यादषाढाभूः खपर्यायोल्मुकार्थकः ।
नवार्चिरथ पञ्चार्चिर्धनिष्ठाभूः [1]प्रहर्षुलः ॥२००॥
रोहिणीचन्द्रपर्यायपुत्रार्थः स्याद्दृक्पथः[2] ।
श्यामपर्यायगात्रार्थो वयुनश्चन्दिरो बुधः ॥२०१॥
ज्ञः परिज्मैकदेहार्थः [3]स च सूर्यसहाचरः[4] ।
स्यन्दः [5]स्वःसिन्धुसिन्धूत्थः क्लेदुः खचमसोऽपि च ॥२०२॥
नेम्यर्थोप्यरुणोऽथ स्यात्प्रचरव्या तु महामतिः ।
बृहस्पतिः साद्धिषणो गुरुः संवर्त्तपूर्वजः ॥२०३॥
पाखण्डकर्त्ता गोविन्दो द्वादशार्चिश्च दीदिविः ।
[6]वाग्म्याङ्गिरस[7]पारुष्याश्चत्ताश्चित्रशिखण्डजः ॥२०४॥
जीवो गीष्पतिपर्यायो [8]गीष्पर्यायरथार्थकः ।
देवार्थाद्गुरुपर्याय उतथ्यस्यानुजार्थकः ॥२०५॥
प्राक्फाल्गुनेयः प्रख्यावाक् नन्दिघोषस्तु तद्रथे ।
शुक्रस्तु भार्गवः काव्यः कविः शुक्लो मघाभवः ॥२०६॥
आस्फुजि[9]द्भागवान्धिष्ण्य एकार्थान्नयनार्थकः ।
दैत्यादिगुरुपर्यायो दिन[10]दृश्यः सितो भगः ॥२०७॥

---

१ सहर्षुलःB २ दुदक्पथः ३ सचेतिCK पुस्तकयोर्नाङ्कित ४ चराःB ५ स्वसिन्धुCK
६ वाग्म्याCK ७ पारुष्यौ चत्ताB ८ गीःपर्यायB ९ द्भगवाB १० दृश्यासिताB

इनो भृगुः षोडशार्चिः शतपर्वेश इत्यपि ।
शनैश्चरस्तु लौहित्यः सप्तार्चिः क्रूरदृकूपथः ॥२०८॥
नीलो मन्दः शनिः शौरिः शौरी सौरोऽव्ययं शनैः ।
सौरिः क्रोडो रेवतीजो राहुस्तु सिंहिकासुतः ॥२०६॥
[1]दैत्यग्रहः शीर्षदेहः सूर्याचन्द्रमसोररिः ।
तमोऽस्त्री ग्रहकल्लोलो भरणीभूर्विधुंतुदः ॥२१०॥
अभ्रार्थाच्च पिशाचार्थः स्वर्भानुः स्यादथो शिखी ।
[2]आश्लेषाभूर्वारुणः स्यादहिः केतुश्च [3]तद्गणाः ॥२११॥
बहवो विविधाकारा धूमकेतुपुरःसराः ।
गुरोः पुत्रः कचः शंयुः [4]स्याद्भरद्वाज इत्यपि ॥२१२॥
वसिष्ठश्च वशिष्ठोऽपि कश्यपः काश्यपः समौ ।
मारीचोऽप्यनुसूयायाः पतिस्त्वत्रिरतः पुनः ॥२१३॥
भार्गवो जमदग्निः स्याद्यमदग्निरपि स्मृतः ।
राहूगणो गौतमः स्याद्गोतमोप्यथ गाधिजः ॥२१४॥
विश्वामित्रः कौशिकः स्यादेते वैवस्वतेन्तरे ।
एकयोक्त्यर्षयः सर्वे तेऽपि चित्रशिखण्डिनः ॥२१५॥
ध्रुवो नक्षत्रनेमिः स्यादुत्तानचरणात्मजः ।
[5]ज्योतीरथो ग्रहाधारः सुनीतितनयार्थकः ॥२१६॥

---

१ दैत्यशीर्षग्रहश्चैव B २ अश्लेषा K ३ तद्गणाः B ४ स्याद्भारद्वाज B ५ ज्योतिरसो

पितृदेवनभोमार्गपर्यायश्च नभः सरित् ।
भचक्रमध्यसूत्रं तन्मूलान्मृगशिरावधि ॥२१७॥

ग्रहपर्यायनेमिः स्यादथागस्त्यो घटोद्भवः ।
दण्डयामश्च दीप्ताग्निरगस्तिश्चाग्निमारुतः ॥२१८॥

दक्षिणर्षि[1]र्वारुणिः स्यात्सत्याग्निर्मान्य इत्यपि ।
[2]मानसूनुश्च तपनो मैत्रावरुणिरित्यपि ॥२१९॥

और्वशेयोऽ[3]शिववातापील्वलारिर्विन्ध्य[4]कूटकः ।
नहुषेन्द्रत्वशत्रवर्यो मैत्रा[5]वरुण इत्यपि ॥२२०॥

प्रियास्य वरदा लोपामुद्रा (कौषीतकी तथा) ।
(वरप्रदापि सैवोक्ता) वैदर्भ्यथ च तत्सुतौ ॥२२१॥

[6]दृढच्युदिध्मवाहश्चाथैकयोक्त्येन्दुभास्करौ ।
पुष्पवन्तावदन्तौ च मतुवन्तौ च तावथ ॥२२२॥

उपाद्रागः प्लवो रक्तो द्रवः सर्गस्तथाऽऽहितः ।
[7]उपरागः स्त्रियामीतिर्ग्रहो ना ग्रहणं च षण् ॥२२३॥

अभ्युत्पातोऽपि चोत्पातो रिष्टं चारिष्टमित्यपि ।
पुंसि क्लीबेप्यजन्यं स्यात् क्लीबे ऽ[8]लग्नमित्यपि ॥२२४॥

ग्रहावर्त्तद्वादशांशो राशिः पुंस्यथ ते क्रमात् ।
मेषो वृषश्च मिथुनं क्लीबे [9]कन्यातुले स्त्रियौ ॥२२५॥

---

१ वारुणश्च सत्याग्नि B २ अनसूनु KC ३ पि B ४ कण्टकः B ५ वरुण B ६ घट B
७ अपरागः CK ८ लग्नमिति B पुस्तके न दृश्यते ९ कर्कटः सिंहश्च न काप्यादर्शपुस्तके वर्णितौ ।

वृश्चिको ना धनुः क्लीबे मकरः कुम्भमीनकौ ।
ते तत्तन्नामपर्याया मासं शुक्रबुधारुणाः ॥२२६॥
मासांस्त्रयोदश गुरुः शनिस्त्रिंशत्ततस्तमः ।
अष्टादश तथा केतुः प्रायो भौम[१]स्त्रयस्ततः ॥२२७॥
[२]मासान्सप्तदशेज्योथ सहस्रं द्विशतोत्तरम् ।
सप्तर्षयस्तथागस्त्यो [३]भुनक्त्यब्दान्ध्रुवोऽपि तु ॥२२८॥
सर्वदा सकलान्राशीन्भचक्रस्योपरिस्थितः ।
कल्पद्रौ केशवकृते [४]भुवः स्कन्धे द्वितीयके ॥२२९॥
[५]नभःस्थदेवकाण्डोऽयं तृतीयः सिद्धिमागतः ।

---

कालोऽपष्ठुर्जह्नोदिष्टोऽनेहाः पीथो मतिस्तिथः ।
आमतिः समयः पीयुरथ वास्रस्तु वासरः ॥१॥
घस्रो ध्रंसोघृणिर्द्यौः स्याद्दिवसश्च तिथिर्द्वयोः ।
कर्म[६]वाटी तिथी द्वे स्त्री क्लीबेऽहर्दिनमस्त्रियाम् ॥२॥
दिवाव्ययं याममालो व्युष्टांशश्चाथ पञ्च ताः ।
नन्दा भद्रा जया रिक्ता पूर्णाः सप्तापि ताः क्रमात् ॥३॥

---

२ स्ततस्त्रयः B ३ मासान्सप्तदशाज्योथ KC मासानूसप्तदशाब्जोपि B ४ भुनक्त्य-ब्दान्ध्रुवो K भुनक्त्यब्दा(ब्दा)न्ध्रुवो B ५ नभः CK ६ प्रकाण्डेन समं स्कन्धो द्वितीयः CK ७ कर्मवाला B

रव्यांद्यास्ताः [1]पञ्चदश स्युरथ प्रतिपत् स्त्रियाम् ।
पक्षतिर्मासपक्षाद्याग्नेयी वा ब्राह्मणो[2]परा ॥४॥
गिरिजा गणपः सर्पाः स्कन्दः सूर्यः शिवः शिवा ।
यमो विष्णुर्हरः कामः शर्वश्चन्द्रः पितामहाः ॥५॥
पूर्णिमामेति गदिते दिवसाः स्युश्चतुर्विधाः ।
घटीषष्टिमितोर्कस्य राशिभोगस्य चापि यः ॥६॥
त्रिंशांशस्तिथ्यवच्छन्नो यावद्दत्तं च सावनः ।
सौरो दैवस्तथैवार्क्षश्चाथ योगाः क्रमादमी ॥७॥
विष्कम्भः प्रीतिरायुष्मान्सौभाग्यश्चापि शोभनः ।
अतिगण्डः सुकर्मा च धृतिः शूलं ततः पुनः ॥८॥
गण्डो वृद्धिर्ध्रुवश्चापि व्याघातश्चापि हर्षणः ।
वज्रं सिद्धिर्व्यतीपातो वरीयान्परिघः शिवः ॥९॥
[3]सिद्धः साध्यः शुभः शुक्लो ब्रह्मेन्द्रश्चापि वैधृतिः ।
तत्रातिगण्डो गण्डोऽपि द्वितीयश्चाष्टमः स्त्रियाम् ॥१०॥
एकादशः षोडशान्त्यावस्त्रियां नवमोऽपि च ।
तद्वत्पञ्चदशोन्ये नर्योगाः स्युः करणानि च ॥११॥
शुक्लप्रतिपदः पूर्वार्द्धान्त्यार्द्धस्य प्रभेदतः ।
किंस्तुघ्नं च ववं चापि बालवं कौलवं च षण् ॥१२॥

---

१ पञ्चदशाथ च प्रतिपदस्त्रियाम् B २ ऽपि च B ३ सिद्धिः B

[1]तैतलं गरं वणिजं भद्रा विष्टिरुभे स्त्रियौ ।
पञ्चम्यास्तु ववादि स्युर्यावत्[2]कृष्णचतुर्दशी ॥१३॥
तस्याः परेऽर्द्धे शकुनिः पूर्वेऽर्द्धे चतुरंह्रिकम् ।
अमोत्तरार्द्धे नागाख्यममून्येकादशैव हि ॥१४॥
करणानीति तिथयश्चतुरङ्गाः प्रगेऽव्ययम् ।
प्रातश्च काल्यं कल्यं षण्[3]दिवसार्थान्मुखार्थकम् ॥१५॥
व्युष्टं विभातं [4]प्रत्यूषः स्त्रियां [5]प्रत्युषमित्यपि ।
गोसर्गश्चाथ मध्याह्नो दिनार्थान्मध्यमित्यपि ॥१६॥
मध्यं दिनमथोत्सूरोऽपराह्णः पुंनपुंसकम् ।
दिवसार्थावसानस्य पर्यायं सायमव्ययम् ॥१७॥
सायोऽपि स्यात्स्त्रियां संध्या पितृपर्यायसूर्दमा ।
निशमुखं च प्रदोषः स्यात्संधा संधिश्च पुंस्ययम् ॥१८॥
संध्यानां त्रितये चापि वैणवं च त्रिसंध्यकम् ।
पुंसि त्रिसंधिश्चाथ स्याच्चतुर्थ्यां प्रहरावधि ॥१९॥
आसार्द्धयामं सप्तम्यां त्रयोदश्यां ततः पुनः ।
आयामयुगमेवं स्यात् प्रदोषोऽध्यायविघ्नकृत् ॥२०॥
षष्टिदीर्घाक्षरोच्चारा मेरुका घटिका घटी ।
नाडी च नाडिका यामनाडी स्याद्यामबोधिणी ॥२१॥

१ तैतुलं B २ शुक्ल B ३ दिवसार्थोन्मुखार्थकम् Ck र्थके B ४ प्रत्यूषोऽस्त्रिया-मिति स्यात् ५ प्रत्युषसीत्यपि B—सित्यपि k

विकालिका मानरन्ध्रात्ताम्रिकाप्यथ तद्द्वयम् ।
[1]अह्नः पञ्चदशोंशोऽस्त्री मुहूर्त्तस्ते क्रमादथ ॥२२॥
आद्यो रौद्रोथ द्वितीयोऽ[2]हिः सितोथाज इत्यपि ।
मैत्रोथारभटश्चापि पितरः सारटोऽ[3]प्यथ ॥२३॥
सावित्रो वासवश्चाथ वैराजश्च जयन्तकः ।
आप्योथ विश्वो गान्धर्वो वेधास्तु कुतपोऽभिजित् ॥२४॥
विधिस्तु रौहिणो विन्दोथोबलश्च [4]विरेचनः ।
एकादशस्तु विजयः पुरुहूतोथ नैऋृतः ॥२५॥
वह्निश्चाथ महेन्द्रस्तु रक्ष[5]श्चाथ जलेश्वरः ।
चतुर्दशः पञ्चदशो भटस्तु स्यात्तथा भगः ॥२६॥
स्यादेवं पञ्चदशधा दिवसः पञ्चधा पुनः ।
प्रातः संगवमध्याह्नाः पराह्णः सायमित्यथ ॥२७॥
पूर्वाह्णः प्रहरः सार्द्धो मध्याह्नस्तु तदुत्तरः ।
प्रहरोऽथापराह्णस्तु घटिकानां चतुष्टयम् ॥२८॥
सायाह्नः प्रहरश्चैवं चतुर्द्धाथ त्रिधा पुनः ।
पूर्वाह्णश्चापि मध्याह्नोऽ[6]पराह्णश्चेत्यथ द्विधा ॥२९॥
पूर्वाह्ण[7]श्चापराह्णश्च रात्रेस्तावन्त एव[8]हि ।
आद्यो रौद्राथ [9]गन्धर्वोऽजैकपादथ भास्करः ॥३०॥

---

१ अहः पञ्च B २ दिः सितोप्यज B ३ ऽपि च B ४ विरोचनः B ५ आयं B
६ ऽप्यपराह्णोप्यथ द्विधा B ७ श्च पराह्न ८ तु Ck ९ गान्धर्वो B

अहिर्बुध्न्योऽथ पूषापि कुबेरोऽथ सदागतिः ।
दस्रादथ यमोऽग्निश्च विधातात्वष्टमस्ततः ॥३१॥
सौम्योऽदितिस्तु ब्राह्मोऽथ वाक्पतिर्द्वादशो रविः ।
त्रयोदशोप्यथापि स्युस्त्वष्टृब्रह्मसमीरणाः ॥३२॥
[1]स्यान्नैर्ऋतः पञ्चदशः स्याच्चतुर्भिस्तु तैः पुनः ।
प्रहरश्च यमो यामो घटीपर्यायमालकः ॥३३॥
अथ[2]क्षपा तु रजनिः क्षणदा क्षणिनी निशा ।
अव्ययानव्ययं दोषा वसती वसतिः समौ ॥३४॥
रात्रिस्त्रियामा स्या[3]द्घोरा श्यामा तुङ्गी निषद्वरी ।
याम्या च रक्षोजनना रजनी चक्रभेदिनी ॥३५॥
उमा हुतार्चिः पैशाची शर्वरी नक्तमव्ययम् ।
क्षपा तमस्विनी [4]तुङ्गा तमिर्वासरकन्यका ॥३६॥
तमी तमा हिमा चैव वासतेयी विभावरी ।
निशीथिनी निशीथ्या निट् शताक्षी[5]वासुरा निशा ॥३७॥
यामिनी स्यात्तमिस्रापि तमस्यतितमोयुता ।
ज्योत्स्ना तु चन्द्रिकायुक्ता [6]बहुनिड्गणरात्रकम् ॥३८॥
पक्षिणी पक्षतुल्याभ्यां दिनाभ्यां वेष्टिता निशा ।
गर्भकं रजनीद्वन्द्ववेष्टितं यदहर्भवेत् ॥३९॥

१ स्यान्नैऋतिःB २ क्षियाC क्षिपाB ३ द्धोराCK ४ तुङ्गीति सर्वत्र ५ वासराB
६ बहूनिCK

अर्द्धरात्रो निशीथश्च [1]शिवावसर इत्यपि ।
निःसंपातो महानिट् चाथोच्चन्द्रापररात्रकौ ॥४०॥
अपि पश्चिमरात्रोऽथ श्वनिशं श्वनिशा च सा ।
यस्यां मत्ता निशि श्वानो भूतःकृष्णचतुर्दशी ॥४१॥
भूतेष्टाचाथ तद्भूत पञ्चदश्योर्यदन्तरम् ।
पर्वमूलं च प्रतिपत्पञ्चदश्योर्यदन्तरम् ॥४२॥
स पर्वसंधिरथ च पूर्णमासी तु पूर्णिमा ।
पूर्णमा पौर्णमासी च कलाहीने विधौ च सा ॥४३॥
विज्ञेयानुमतिस्तत्र पूर्णे राका निशाकरे ।
सरस्वती शारदी तु द्यूतपर्यायपूर्णिमा ॥४४॥
[2]शक्रोत्सवो ध्वजोत्थानं क्लीबे कोजागरः पुमान् ।
स्यादस्त्री कौमुदीचारः शरत्पर्वाथ होलिका ॥४५॥
होलाकापि च होली च वासन्ती कूर्दना स्त्रियः ।
मधूत्सवः कामिमहो रजःपर्यायतो महः ॥४६॥
पुष्ययुक्ता पूर्णमासी मासे पौषी च सा पुनः ।
मृगशीर्षयुता[3]मार्गशीर्षे स्यादाग्रहायणी ॥४७॥
अमावास्यामाऽ[4]मावस्याऽमामासी चाप्यमावसी ।
सूर्येन्दुसंगमो दर्शस्तत्र नष्टेन्दुमण्डला ॥४८॥

---

१ सर्वांB २ शाक्रोत्सवCk ३ मार्गंशीर्ष्यैवमाग्रK ४ ऽमावस्वाB

कुहुः कुहूश्च गुङ्गुश्च गुङ्गू[1]र्नष्टाब्जमण्डला ।
सिनीवाल्यथ दीपाली यक्षनिड्वलिपर्व च ॥४९॥
स्यादस्त्रियामहोरात्रमथ नक्तंदिवं पुनः ।
नक्तं दिवं चाहर्दिवं नैरन्तर्येऽव्ययं पुनः ॥५०॥
निमेषनिमिषौ तुल्यौ व्यापारे नेत्रपक्ष्मणोः ।
अष्टादश निमेषास्तु काष्ठास्त्रिंशत्तु ताः कलाः ॥५१॥
तास्तु त्रिंशत् क्षणस्ते तु मुहूर्तो द्वादशापि च ।
ते तु त्रिंशदहोरात्रः पक्षस्ते दश पञ्च च ॥५२॥
स च स्याद्द्विविधः शुक्लकृष्णपर्यायभेदभाक् ।
पितॄणां दिनरात्र्योश्च पर्यायौ तावनुक्रमात् ॥५३॥
मासस्तु दिनमालो[2]मा वर्षार्थात्कोश इत्यपि ।
अंशः श्रामश्चतुर्द्वासः सावनस्तु दिनैर्नगैः ॥५४॥
चान्द्रः स्यात्पूर्णिमाऽमान्तः सौरस्तु रविसंक्रमात् ।
आसङ्क्रान्त्यथ सर्वर्क्षभोगादिन्दोः स भोद्भवः ॥५५॥
मार्गशीर्षो मार्गशिरो वर्षाग्र्यः स्यात्सहाः सहः ।
आग्रहायणिको मार्गः स च स्यादाग्रहायणः ॥५६॥
तिष्यश्चापि च पुष्योऽपि पौषस्तैषः सहस्यवत् ।
अस्त्री माघे तपाश्चापि तपस्यस्तपसस्तपः ॥५७॥

---

१ दंष्टाब्जेति पाठः स्यात् २ मार्वेK नावB

फाल्गुनाडः फाल्गुनिकः फल्गुनः फाल्गुनोऽपि च ।
स्याच्चैत्रावरजो मोहनिकोथ स्यान्मधुः पुमान् ॥५८॥
चैत्रश्च चैत्रिकोऽथ द्वौ वैशाखे राधमाधवौ ।
[1]उत्सरः स्यादथ ज्येष्ठे ज्यैष्ठश्च खरकोमलः ॥५९॥
आषाढपूर्वजो ज्येष्ठामूलीयः शुक्रमस्त्रियाम् ।
श्रावणानुज आषाढ आशाढोऽषाढ इत्यपि ॥६०॥
शुचिर्नभस्तु नभसो नभाः श्रावणिकश्च सः ।
भाद्रो भाद्रपदः प्रौष्ठपदोऽपि च नभस्यकः ॥६१॥
अथाश्वयुक् चाश्वयुज आश्विनेप्यथ कौमुदः ।
इष ऊर्जः कार्त्तिकिको बाहुलः कार्त्तिकः सरी ॥६२॥
अधिमासोंहस्पतिः स्याद्द्वात्रिंशद्दिनमालकैः ।
दिनैः षोडशभिर्यानैश्चतुर्नाडीसमन्वितैः ॥६३॥
प्रवृत्तिरस्य प्रायेण क्वचिन्न्यूनाधिकैरपि ।
सोऽसंक्रान्तो द्विसंक्रान्तः कालेन बहुना स च ॥६४॥
जायते स[2]क्षयस्तौ द्वौ गर्हितौ शुभकर्मणि ।
यत्र क्षयो भवेन्मासस्तत्र द्वावधिमासकौ ॥६५॥
मासत्रये कार्त्तिकादौ क्षयो नान्येषु माःसु च ।
द्वाभ्यां सौरादिमासाभ्यामृतुः समयवाचकः ॥६६॥

---

१ उत्सूरःB २ क्षयाह्वो द्वौC

हिमागमस्तु हेमन्तः प्रालेयो रौद्र[1]हेमनौ ।
अस्त्रियां शिशिरः [2]सैषो वसन्तः पिकबान्धवः ॥६७॥
पुष्पपर्यायकालार्थः सुरभिश्च प[3]लाङ्कः ।
[4]उष्णस्तूष्मायणोऽपि स्यान्निदाघस्तप ऊष्मकः ॥६८॥
ग्रीष्म ऊष्मागम[5]स्त्र्यूष्मा स्यादुष्णोपगमः पुनः ।
घनार्थादत्ययः पुंसि स्त्रियां स्याच्छरदा शरत् ॥६९॥
भूयो वर्षति पर्जन्यो गङ्गाया दक्षिणे तटे ।
अतः प्रावृट् च वर्षाश्च द्वावृतू परिकल्पितौ ॥७०॥
तस्या एवोत्तरे कूले हिमद्विन्ध्यसंकुले ।
भूयः शीतमतस्तत्र हेमन्तशिशिरावुभौ ॥७१॥
शिशिराद्यैश्च ऋतुभिरयनं स्या[6]त्त्रिभिश्च षण् ।
अयने द्वे गतिरुदग्दक्षिणार्क[7]स्य वत्सरः ॥७२॥
ससंपरीदे[8]दनुभ्यो युगांशो हायनोऽस्त्रियाम् ।
ऋतुवृत्तिर्मासमालः कालग्रन्थिः शरत्स्त्रियाम् ॥७३॥
शरदापि स्त्रियां भूम्नि समा वत्सः पुमानयम् ।
पुंसि वा वरिषं[9]वर्षं स्त्रियां भूम्नि समा अपि ॥७४॥
संपत्संवदव्यये द्वे मकरः कर्कटायने ।
तुलामेषौ तु विषुवत्[10]विशुवद्द्वे नपुंसके ॥७५॥

---

१ मेहनौB २ सैषB ३ लाङ्गक इति केवलंB पुस्तके ४ इदमर्धंB पुस्तके नास्ति ५ स्तूष्माB ६ त्ततश्चB ७ स्तुCK ८ ददाB ९ वर्षे १० विभुवK

विषुणो विषुवान् पुंसि विषुवोऽप्यव्यये उभे ।
विश्वग्[1] विष्वक् च विषुवत्केषांचनमतेऽव्ययम् ॥७६॥
[2]विष्णुपद्यः सिंहवृषकुम्भा वृश्चिक इत्यपि ।
षडशीतिमुखाः कन्या[3]धनुर्मीनयुगानि च ॥७७॥
अथ भेदा वत्सराणामतुलैः (३६०) सावनो भवेत् ।
दिवसैर्मातुलैः३६५सौरश्चान्द्रः स्याद्विमलै३५४र्दिनैः।७८।
आर्चो [4]वराङ्गै३२४र्गौरोपि पतङ्गैः ३६१ पञ्चधेति च ।
कृतं सत्ययुगं क्लीबे त्रेताग्नेयी स्त्रियामुभे ॥७९॥
द्वापरो यज्ञियः पुंसि क्लीबे कर्मयुगं कलिः ।
तिष्यो झर्झरकोऽथैषां वर्षसंख्याः क्रमादिमाः ॥८०॥
हृठसर्पैः १७२८००० [5]तद्भरकै १२८६००० र्भतुच्छैः
[6]७६४००० खलवैः ४३[7]२००० क्रमात् ।
सर्वैस्त्रि[8]नान्तैर्वर्षैः स्यान्नृणां पूर्णचतुर्युगी ॥८१॥
तेषां तावच्छती संध्या संध्यांशश्च यथाक्रमात् ।
[9]अष्टाविंशी प्रयात्येषा तस्याः स्यात्सांप्रतं कलिः ॥८२॥
तद्गताब्दाः कुतिथिभाः [10]४७६१ संवर्तः पलयः क्षयः ।
परिवर्तः परीवर्तः संहारः कल्प इत्यपि ॥८३॥

---

१ विषद्वKC २ विष्णूB ३ धनुमीनCK ४ वराङ्गैः शोरोपिB ५ तद्धर ६ ८B ७ ३CK ८ भान्तैCK ९ प्रयोज्ये तस्या स्यात्CK १० विक्रम सं १७१६ केशवस्य कल्पद्रुकृतः समयः ।

जह्वानकः समसुप्तिः संह्वारो युगकल्पयोः ।
दैनंदिनो लोकशेषः परान्तः सर्वनाशनः ॥८४॥
[1]दैनन्दिनः प्राकृतश्च स च स्याद्द्विविधोऽथ च ।
किल्विषं कल्मषं किण्वं[2] कल्कः पङ्कश्च[3] न स्त्रियाम् ॥८५॥
पुंसि पाप्माथ सुकृतं श्रेयः पुण्यं वृषः पुमान् ।
क्लीबे[4] धर्मं च धर्मोऽस्त्री मुदा मुच्च स्त्रियामुभे ॥८६॥
मोदो मोदः समाप्रेभ्यो मदः संमद इत्यपि ।
नन्द्यानन्दथुरानन्दिर्नन्दिरानन्द एव च ॥८७॥
क्लीबाव्ययं तु कं जोषमुपजोषमथो सुखम् ।
कमव्ययं च खं शर्म सौख्यं श्वःश्रेयसं पुनः ॥८८॥
शातं सातमथो भद्रं[5] भगं मद्रं च भावुकम् ।
भविकं मङ्गलं वा ना भव्यं द्रव्यं शिवं शुभम् ॥८९॥
शस्तं प्रशस्तं कुशलं[6] कुषलं क्षेममस्त्रियाम् ।
श्रेयः श्वःश्रेयसं रिष्टं निःश्रेयसमरिष्टवत् ॥९०॥
शमव्ययं भवः पुंसि द्रव्ये पापादिकं त्रिषु ।
काले शुभोत्तरे तु स्यात् स्त्रियामायतिरित्यपि ॥९१॥
तज्जं फलमुदर्को ना क्लीबे सांदृष्टिकं हि तत् ।
तात्कालिकं तदात्वं स्यादयः शुभावहो विधिः ॥९२॥

---

१ दैनन्दिनः प्राकृतश्चेति केवलं २ यौल्कःCK ३ नाB ४ धर्मश्चCK
५ भर्गंCK ६ कुषलमितिB पुस्तके नास्ति ।

हेतुर्ना कारणं बीजं क्लीबे करणमित्यपि ।
क्लीबश्चाद्यं कारणं तु निदानं मूलवस्तु तत् ॥९३॥
क्षेत्रज्ञ आत्मा पुरुषः पूरुषश्चाक्षरः कविः ।
अन्तर्यामीश्वरो देही जीवोजो बहुलो[1]ऽतनुः ॥९४॥
ब्रह्मास्त्रियां कः स एष पुमर्थः प्रकृतिः स्त्रियाम् ।
स्वः षण् प्रधानमव्यक्तमक्षरं बहुधातुकम् ॥९५॥
क्षेत्रं तमः प्रसूनं स्यात् पुंसि सत्त्वं रजः पुमान् ।
[2]रजस् क्लीबे तमः पुंसि तमस् क्लीबेऽथ जन्म[3]षण् ॥९६॥
जननं च प्रजननं जननिश्च जनिः[4]स्त्रियौ ।
उद्भवः संभवो भावो भवो [5]जन्युश्च पुंस्यमी ॥९७॥
जनी जनू जनुश्चास्त्री जीवो जन्यश्च पुंस्ययम् ।
करणं खं पदं पुंसि [6]हृषिं वैकारिकेन्द्रिये ॥९८॥
अक्षं च नियतं चाथ भूतानि तनवः पुनः ।
घोरा विकारा भूतानि विशेषा विग्रहा अपि ॥९९॥
प्राणी तु चेतनो जन्मी जन्तुजन्यशरीरिणः ।
व्यष्टिर्जातिः स्त्रियां जातं क्लीबेथ व्यक्तिरित्यपि ॥१००॥
[7]स्त्रियां समष्टिः पृथगात्मत्वे.................. ।
........................चित्तं तु हृदयं च हृत् ॥१०१॥

---

१ ऽजनुःB २ रजसःB ३ चB ४ स्त्रियाम्CK ५ जन्यश्चB ६ हरिर्वैकारिकेन्द्रियेB हर्षिवैका-वै हृषीकं विषयीन्द्रियम् अम ७ स्त्रियामित्यादे हृदयं च तदित्यस्याधंद्वयस्यलुप्तबहूक्षरस्य स्थाने समष्टिः पृथगात्मत्वे चित्तं तु हृदयं च तदित्येकमलुप्ताक्षरमर्द्धंB पुस्तकेस्ति ।

चेतः स्वान्तं मानसं च मनः क्लीबेऽन्तरिन्द्रियम् ॥
कल्पद्रौ केशवकृते [1]भुवःस्कन्धे द्वितीयके ।
कालाभिधः प्रकाण्डोऽयं साङ्गः सिद्धिमुपागतः ॥१०२॥

---

षड्जर्षभौ च गान्धारो मध्यमः पञ्चमोऽपि च ।
धैवतश्च निषादश्च सप्त कण्ठादिजाः स्वराः ॥१॥
कण्ठो[2]रस्तालुरसना नासाशीर्ष[3]समुद्भवाः ।
[4]आस्यात् षड्जोऽपरे कण्ठादृषभो हृदयो भवः[5] ॥२॥
नासिकोत्थश्च गान्धारो मध्यमो नाभिसंभवः ।
उरसः शिरसः कण्ठात्पञ्चमस्य च संभवः ॥३॥
धैवतोऽपि ललाटोत्थो निषादः सर्वसंधिजः ।
स्युर्मन्द्रमध्यताराख्या ग्रामाः स्थानस्थितिप्रदाः ॥४॥
त्रयः स्वरेषु प्रत्येकं स्युस्ते तेष्वपि [6]मूर्च्छनाः ।
सप्तस्वरेषु नन्दत्सु स्वस्वस्थानस्थितेषु च ॥५॥
प्रत्येकमूर्छनैकैका ग्रामेष्वेषु प्रजायते ।
बोधा[7]लला समाधानी पूरणी चापराजिता ॥६॥
विगलिप्ता संयमिनी मृद्वी च आमिताक्षरा ।
[8]द्राविता मङ्गला रामा [9]सुखकृज्जयशेखरा ॥७॥

---

१ भूमिस्कन्धेCK २ रुतालु इति सर्वत्र पाठः ३ समुद्भवःCk ४ तस्मात्CK ५ हृदयोद्भवःB ६ मूर्त्सनाःCK ७ ऌताB ८ इति ताCK ९ सुरवा जयB

रमणी शोभिता नादा तथा[1]सिभरिजा मता ।
नादानू[2]कासिका चण्डा इत्येता एकविंशतिः ॥८॥
ताना एकोनपञ्चाशत्तन्नतेन्नकतुन्नकाः ।
विज्ञेयाः क्रमशः सर्वे सप्त सप्त स्वरे स्वरे ॥९॥
नादान्ता निष्कला गूढा सकला मधुरा पुनः ।
कामाङ्गा मदिरा श्यामा तारा चन्द्रानना शुभा ॥१०॥
असंपूर्णा वरा पूर्णा [3]रेजिका वालिकापरा ।
प्रसन्नवदना वामा बाला मधुरता तथा ॥११॥
द्वाविंशतिस्तु श्रुतय एता ज्ञेयाः स्वरानुगाः ।
श्रुतिभिः कियतीभिश्च संयुक्तास्ते स्वराः[4] क्रमात् ॥१२॥
चतुः[5]श्रुतिस्त्रिश्रुतिश्च द्विश्रुतिश्च [6]स्वरा मताः ।
श्रुतिभि[7]र्मूर्छनाभिश्च ग्रामैस्तानैश्च संहिताः ॥१३॥
समागताः स्वरास्तैस्तु रागा[8] भाषादयः कृताः ।
श्रीरागश्च वसन्तश्च भैरवः पञ्चमोऽपि च ॥१४॥
मेघरागः षष्ठ इह ज्ञेयो नट्टनरायणः ।
षट् षड् भार्याः क्रमादेषामासां नामान्यनुक्रमात् ॥१५॥
गौडी कोलाहला चापि गान्धारी द्रविडी तथा ।
पञ्चमी देवगान्धारी षष्ठी[9]देवलकौशिकी ॥१६॥

---

१ सिभरिताB २ काशिकाB ३ राजिकाB ४ स्वरा मताःB ५ शुचिB ६ स्वराः क्रमात्B ७ मूर्त्सनाCk ८ भावाB ९ मालवB

श्रीरागस्य भवन्त्येता वासन्त्यः स्युरतः पराः ।
आन्दोली कौशिकी चैव तथा प्रथममञ्जरी ॥१७॥
[1]गुडेगिरी देवशाखा रामा स्यादथ भैरवी ।
[2]विलाडली गुर्जरी च कर्णाटी चापि रक्तिका ॥१८॥
हंसाथ त्रिगुणा स्तम्भतीर्थी चाभीरिका पुनः ।
ककुभा च वराडी च सामेरी चाप्यमूरपि ॥१९॥
मतान्तरे मेघरागभार्याः स्युरथ चापराः ।
बंगाला मधुरा चैव कामोदा [3]चोत्तसारिका ॥२०॥
देवगिरी[4] देवपाला स्युरेताः पञ्चमाश्रयाः ।
मतान्तरेपि पुनस्तोटिकापि च मोटिका ॥२१॥
नदडुंबी च मल्हारी सिंधु[5]मल्हारिकाप्यथ ।
देवशाखा मालवश्रीर्द्धना[6]श्रार्दीपकादयः ॥२२॥
स्वचतुर्जातिसंयुक्ता रागाङ्गानि भवन्त्यमी ।
बृहती च पुलंध्री च [7]सैरन्ध्री ललितादयः ॥२३॥
भाषान्तराभिधा भीमपलाशी प्रमुखा अथ ।
वैराटिका वृद्धहंसा तथा सौराष्ट्रिकादयः ॥२४॥
शोकप्रकाशकाश्चान्ये क्रियाङ्गेषु प्रकीर्त्तिताः ।
केदार[8]कर्णौ स्थानाख्या तथा मालवकादयः ॥२५॥

---

१ मुण्डागिरीB २ वेलावलीB ३ चोटसर्गकाB ४ देवगीरीB ५ मल्लारिकाB
६ श्रीदीपB ७ सैन्धवीB ८ कद्यारस्थानाB

कर्णाटबंगालमुखाः सर्वे गौडा उपाङ्गकाः ।
ज्ञेया रागेषु रागाङ्गाः क्रियाङ्गोपाङ्गकावपि ॥२६॥
तथा भाषासु[1] भाषाङ्गास्तेपि स्युः स्वस्वदेशजाः ।
समाश्चतुर्विधा देश्यशुद्धगन्धालि[2]छाइलाः ॥२७॥
[3]नुडवः खाडवः पूर्णोऽपूर्णश्चेत्यथ[4]च ध्रुवाः ।
मठश्च[5]प्रतिमंट्टश्च तृतीयस्त्व[6]पि सारकः ॥२८॥
[7]अडुतालस्ततो रास एकताली क्रमादिमे ।
[8]जयन्तः शेखरोत्साहौ तद्वन्मधुरनिर्मलौ ॥२९॥
[9]कुतलः कमलश्चारो नन्दनश्चन्द्रमाः खरः ।
कामदो विजयश्चैव कन्दर्पजयमङ्गलौ ॥३०॥
तिलको ललितश्चामी ध्रुवाः स्युरिह षोडश ।
उद्ग्राहे स्यात्पद[10]द्वन्द्वं मध्ये कार्यं पदद्वयम् ॥३१॥
[11]आभोगे पदयुग्मं स्यात्[12]खण्डानीत्थं ध्रुवस्य च ।
षट्पदस्तूत्तमः प्रोक्तो मध्यमः पञ्चभिः परैः ॥३२॥
कनिष्ठश्च चतुर्भिः स्यादेवं ते त्रिविधा ध्रुवाः ।
उद्ग्राहे खण्डकद्वन्द्वं[13]युक्तिद्वयविनिर्मितम् ॥३३॥
अन्यानि तु पदानि स्युः सर्वाणि नियमादृते ।
एकादशाक्षरा[14]त्खण्डादेकैकाक्षरवर्द्धितैः ॥३४॥

---

१ भावासु २ छादलाः B ३ औडवः B ४ तु B ५ प्रतिमंहश्च B ६ भिसारकः B ७ अजताल B ८ जयन्तशेखरोत्साहाविति स्यात् ९ कुन्तलः B १० च्छन्द CK ११ अभोगे B १२ स्वनाडीत्थं १३ पङ्क्ति B १४ द्यावदेकै B

खण्डैर्ध्रुवा भव[1]न्त्येवं षड्विंशत्यादितः क्रमात् ।
कमलाकरः कलापः कामश्चैवात्र[2]सुन्दरः ॥३५॥
वल्लभो मङ्गलश्चापि षडुक्ता म[3]ण्डका अथ ।
अमरो[4]मन्दिरश्चापि[5]विचारः कुन्दसंज्ञकः ॥३६॥
चतुर्विधो[6]थ षोढा स्यादथ निःसारकाभिधः ।
[7]सुनरोऽपि विशालः स्या[8]न्नन्दो वैकुण्ठवाञ्छितौ ॥३७॥
विजयोथाडुतालस्तु षोढा स्याच्चमरामरौ ।
अथ षोढा रासकः स्यात्कम्बुजो मुदिराम्बुजो ॥३८॥
विनोदश्चन्द्रसरसोऽथैकताली त्रिधा मता ।
रामा तारा चन्द्रिका च द्रुतमध्यविलम्बिताः ॥३९॥
एकमात्रिकतालेन[9]सूडाद्याः स्युरनेकधा ।
नाट्यं तौर्यत्रिकं गीतं नृत्तं[10]वाद्यं त्रयं च तत् ॥४०॥
[11]संगीतं प्रेक्षणार्थेस्मिञ्शास्त्रोक्ते[12]नाट्यधर्मिका ।
गीतं गानं च गान्धर्वं गेयं स्त्री गीतिरित्यपि ॥४१॥
व्यक्तं पूर्णं प्रसन्नं च सुकुमारमलंकृतम् ।
समं सु[13]रक्तं सुश्लक्ष्णं विकृष्टं मधुरं तथा ॥४२॥
दशैते स्युर्गुणागीते तत्र व्यक्तं स्फुटैः स्वरैः ।
पूर्णं [14]पूर्णाकममकं प्रसन्नं प्रकटार्थकम् ॥४३॥

---

१ न्त्येव CK २ सुन्दरB ३ मटकाB ४ मन्दरB ५ विचारेB ६ यCK ७ सवदोपिB ८ न्मन्दोB ९ सुडाB १० वाद्यत्रयंB ११ संगीतेB १२ नाथवर्षिकाB १३ रक्तंसुश्लक्ष्णमितिB पुस्तके नास्ति १४ पूर्णार्थंगमकमिति स्यात् ।

सुकुमारं कण्ठभवं त्रिस्थानोत्थमलंकृतम् ।
समवर्णलयस्थानं सममित्यभिधीयते ॥४४॥

सुरक्तं वल्लकीवंशकण्ठध्वन्यं सुतालुकम् ।
नीचोच्चस्थानमध्यादौ शुक्लले श्लक्ष्णमुच्यते ॥४५॥

उच्चैरुच्चारणादुक्तं विकृष्टं भरतादिभिः ।
मधुरं धुर्यलावण्यपूर्णं जनमनोहरम् ॥४६॥

दुष्टं लोकेन शास्त्रेण श्रुतिकालविरोधि च ।
पुनरुक्तं कलाबाह्यं गतक्रममपार्थकम् ॥४७॥

ग्रामसंदिग्धमित्येवं दशधा गीतदुष्टता ।
नर्त्तनं नटनं नाट्यं नृत्यं नृत्तं च ताण्डवम् ॥४८॥

पुंसि क्लीबे पुंसि नाटो लासो लास्यं नपुंसकम् ।
अथ हल्लीसकं स्त्रीणां यत्तमण्डलनर्त्तनम् ॥४९॥

पानगोष्ठ्यामुच्चतालं रणे वीरजयन्तिका ।
स्थाने नाट्यस्य रङ्गः स्यात्पूर्वरङ्ग उपक्रमः ॥५०॥

पुंसि प्राङ्नाट्यकं क्लीबे क्रियासूचकमस्त्रियाम् ।
अङ्गहारोङ्गहारिश्च व्यञ्जकाभिनयौ समौ ॥५१॥

स चतुर्विध आहार्यो रचितो भूषणादिभिः ।
वचसाङ्गेन सत्त्वेन वाचिकाङ्गिकसात्त्विकाः ॥५२॥

त्रिष्वेते नाटकं भाणो डिमः प्रहसनं पुनः ।
व्यायोगश्च प्रकरणं वीथी समवकारकः ॥५३॥
ईहामृगोङ्क इत्येते भेदा नाटकजा दश ।
स्याद्देवदेवयोर्वाणी संस्कृ[1]तं प्रकृतिः स्त्रियाम् ॥५४॥
तदुद्भवं प्राकृतं तन्मागधी [2]सूरसेन्यपि ।
अपभ्रंशो भूतभाषा भाषाः षडथ वृत्तयः ॥५५॥
भारती [3]सात्त्विकी कैशिक्यारभट्योत्रनाटके ।
चतस्रोथापि कंदर्पध्वजपर्यायमित्यपि ॥५६॥
वाद्यं वादित्रमातोद्यं तूर्यं [4]तूरमथो ततम् ।
वीणाप्रभृतिकं वाद्यं कांस्यतालादिकं घनम् ॥५७॥
वंशादिकं तु सुषिरमानद्धं मुरजादिकम् ।
अवनद्धं तदेव स्यात्पिनद्धमपिनद्धवत् ॥५८॥
वीणा स्त्रियां घोषवती विपञ्ची कण्ठकूणिका[5] ।
वल्लकी साथ तन्त्रीभिः सप्तभिः परिवादिनी ॥५९॥
शिवस्य वीणा कोलम्बी सरस्वत्यास्तु कच्छपी ।
महती नारदस्येश[6]गणानां तु प्रभावती ॥६०॥
विश्वावसोस्तु बृहती [7]तुंवरोस्तु कलावती ।
चंडालानां तु कण्डोली कोलम्बोऽस्याः कलेवरे ॥६१॥

---

१ तिB २ शोरB ३ साधकीB ४ तोरC ५ कर्णिकाB ६ नारदस्यैषाC
७ तुम्बुरोश्चB

निबन्धनं तूपनाहः प्रवालो दण्डमस्त्रियाम् ।
प्रसेवकस्तु ककुभः कलिका कूणिका स्त्रियौ ॥६२॥
मूलं वंशशलाका स्यात्समन्वितलये तु ना ।
एककालश्चैकतालो मृदङ्गो मुरजः पुमान् ॥६३॥
आलिङ्ग्य ऊर्ध्वकः पुंसि स्यादालिङ्गी स्त्रियामपि ।
[1]हरीतक्याकृतिश्चाङ्क्या स्यादालिङ्ग्या यवाकृतिः ॥६४॥
गोपुच्छाकृतिरूर्ध्वाख्यः प्रोक्तः सर्वत्र टोककः ।
स्याद्यशःपटहो ढक्का भंभा भेरी स्त्रियां पुमान् ॥६५॥
आनकश्चापि भेरिः स्त्री दुन्दुभिश्चानकः पुमान् ।
प्रणवः[2] पणवस्तुल्यौ पटहोऽस्त्र्यथ मर्दलः ॥६६॥
[3]तूरं तूर्यं च विजयः [4] कबर्दिः करतालिका ।
काहला ध्वनितालो[5]ऽस्त्री डमरुः[6] सूत्रकोणकः ॥६७॥
भयकृत्प्रेतपटहो मृत्युदण्डकरश्च सः ।
भक्ततूर्यं नृपाभीलं मल्लतूर्यं महास्वनः ॥६८॥
[7]उगण्डः प्रतिपत्तूर्यं मद्गुः षण् जलवाद्यकम् ।
नृत्ये[8] तूर्ध्वाकृते पादे दण्डपादाख्यतण्डवम् ॥६९॥
विवाहादौ मङ्गले यद्वाद्यं सा प्रियवाहिका ।
मृदङ्गमुखपिष्टस्य लेपे [9]भौमक इत्यपि ॥७०॥

---

१ हरीतक्येत्याद्यर्द्धद्वयस्य स्थाने B पुस्तके—हरीतक्याकृतिस्त्वङ्क्यो यवमध्यस्तथोर्द्धकः । कायस्थाकृतिवश्चाथ स्यादालिङ्ग्यो यवप्रभः इत्यर्द्धद्वयं दृश्यते २ पणावः प्रणावौ तुल्यौ CK ३ वूरं CK ४ कपर्दिः B ५ नालो B ६ डमरः B ७ उगाडः B ८ तूर्ध्वी B ९ भोगक B

घण्टामध्यगतं लोहं[1] शङ्कुः पुंसि ललिः स्त्रियाम् ।
काहला धूर्त्तपुष्पाभा सच्छिद्रा पत्रकाहला ॥७१॥
पिच्छोला स्वरनौकार्था झल्लरी झल्लरिः स्त्रियौ ।
झर्झरश्चाथ वेणुस्तु वंशो विवरनालिका ॥७२॥
मुरली मुखवाद्ये तु वक्कतालः पुमानयम् ।
भ्रुभ्रुभ्रभृम्यः कुंसः स्यान्नटे स्त्रीवेषधारिणि ॥७३॥
वेश्याचार्यः पीठमर्दः सूत्रधारस्तु सूचकः ।
स्याद्बीजदर्शकश्चापि सर्वार्थस्य प्रकाशकः ॥७४॥
नान्दी तु पाठको नान्द्याः पार्श्वस्थः पारिपार्श्वकः ।
नटोऽस्त्रियां सर्ववेशी लयालम्भोथ नर्त्तकी ॥७५॥
लासिकाथो वारवाणिः [2]प्रगातैकनटौ समौ ।
कथकोथासहायः स्यात्तालावचरको नटः ॥७६॥
पात्राणि नाट्य'धिकृतास्तत्र द्वेषस्तु भूमिका ।
शैलूषो भरतः सर्ववेशी भरतपुत्रकः ॥७७॥
नटः कृशाश्वी शैलाली चारणस्तु कुशीलवः ।
केवलः प्लवकश्चाथ भेडश्चाटवटः समौ ॥७८॥
वासन्तिकः केलिकिलो वैहासिकविदूषकौ ।
प्रहासी प्रीतिदश्चाथ षिङ्गः[3] पल्लविको विटः ॥७९॥

---

१ लोहशङ्कुः B २ तेकनटौ B ३ पिङ्गः B

क्रोशध्वनिः क्रोशतालो वीक्षापन्नः सविस्मयः ।
स्वदोषाच्छादनं [1]अत्तोऽस्त्रियां स्यान्मूलकारिका ॥८०॥
ग्रामीणंतोषकं नृत्यं वरमन्वीति कथ्यते ।
गणिकानुचरैरज्जुकेति वाच्या नृपेण च ॥८१॥
राष्ट्रियो नृपतेः[2] श्यालोऽनूढाभ्राता ह्य[3]पण्डितः ।
वर्करः परिहासः स्यादुत्प्रासस्तूपहासगीः ॥८२॥
[4]वार्द्धापिकोत्साहिका च क्लीबे वर्द्धापनं हि तत् ।
नाट्योक्तौ महिषो मार्ष [5]आर्यो विद्वांश्च भावुकः ॥८३॥
राजा भट्टारको देवः कुमारो भर्तृदारकः ।
भर्तृदारिका तत्सुता स्याज्ज्येष्ठा भग्न्यन्तिकापि च ॥८४
आर्त्तिका चान्तिकान्ताम्बा स्यादन्तिश्चाप्यतः पुनः ।
देवो देवी भृत्यजनैर्वाच्योऽयमृषिभिर्द्विजैः ॥८५॥
वयस्य राजन्निति वा स च वाच्यो विदूषकैः ।
कृताभिषेका महिषी देव्यश्चान्या नृपस्त्रियः ॥८६॥
भोगिनी त्वपरैरन्या चुल्लैर्गोस्वामिनीति सा ।
हण्डे हण्डा द्व [6]नीचे हञ्जा हञ्जे च चेटिकाम् ॥८७॥
प्रति प्रति सखीं चापि [7]हलाऽमून्यव्ययानि च ।
भर्त्तार्यपुत्रोथापि स्युर्भदन्ताः सौगतादयः ॥८८॥

---

[1] अंतुC भत्तुK [2] शालोCK [3] त्वB [4] वर्द्धापिकोB [5] अर्योCK [6] नीचB नीचामिति स्यात् [7] हलेCK

अथ तत्रभवानत्रभवांश्च भगवानपि ।
आर्यमिश्रा[1]गौरविताः पूज्ये योज्या अमी त्रिषु ॥८९॥
शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः ।
रौद्रबीभत्सवात्सल्यशान्ता नाट्ये रसा दश ॥९०॥
एते ज्ञेया अथ पुनः शृङ्गारोस्त्र्युज्ज्वलः[2] शुचिः ।
कौशिकः श्यामपर्यायः स च ज्ञेयश्चतुर्विधः ॥९१॥
संयोगो विप्रयोगश्च मिश्रः सामान्य इत्यपि ।
स्थायिसात्त्विकसंचारिभावा अत्र त्रयस्त्रिधा ॥९२॥
रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः क्रमादमी ॥९३॥
रागानुरागौ द्वौ तुल्यौ रतिश्चानुरतिः समे ।
हसस्तु हासः [3]शूकश्च घर्घरश्च स्त्रियां हसिः ॥९४॥
हास्यं षणथ तद्भेदास्तत्राहृष्टरदे स्मितम् ।
चक्रौष्ठिका तु[4] ना हासः किंचिद्दृष्टरदाङ्कुरे ॥९५॥
किंचिच्छ्रुते विहसितमट्टहासो महीयसि ।
अनुस्यूतेऽट्टहासोऽट्टाट्टहासोतिहासकः ॥९६॥
अपहासोऽकारणजे हसनं स्फुरदोष्ठके ।
सोत्प्रासे ह्याच्छुरितकं क्लिष्टे तूदरपीडनम् ॥९७॥

---

१ गौरचित्ताःCK २ ळंCK ३ शुकश्चB ४ ननो हासःB

छलं मिषं च वैदग्धी[1]भङ्गी चेभनिमीलिका ।
शोकः खेदः शोचनं षण् शुक् स्त्रियामथ रुट् स्त्रियाम् ॥९८॥
रुषा क्रुधा क्रुच्च मन्युः क्रोधः कोपोप्यमर्षवत् ।
रोषश्च प्रतिघो भामोऽथ स्त्रियां कियदेतिका ॥९९॥
प्रौढिः प्रगल्भतायोग उद्योगश्च समावुभौ ।
उत्साह उद्यमो ऽस्त्री स्यादध्यवसाय इत्यपि ॥१००॥
पुंस्यूर्जोतिशये तत्र न ना वीर्यमथ स्त्रियाम् ।
भिया भीर्भीतिराशङ्का क्लीबे प्रतिभयं भयम् ॥१०१॥
दरोऽस्त्रियां साध्वसं च [2]दार उत्त्रास इत्यपि ।
त्रासातङ्कौ च भयनं क्लीबे चाथ भयानकम् ॥१०२॥
भयंकरं प्रतिभयं भयं भीष्मं भयावहम् ।
भीषणं [3]भैरवं घोरमाभीलं डमरं पुनः ॥१०३॥
बीभत्समपि बीभत्सु विकृतं वैकृतं पुनः ।
वैकृत्यं भासुरं चोग्रमेतान्यष्टादश त्रिषु ॥१०४॥
अनुकम्पा तु करुणा दया चापि कृपा घृणा ।
स्त्रियां स्युः पुंस्यनुक्रोशः कारुण्यं न स्त्रियामथ ॥१०५॥
स्त्रियां जुगुप्सा [4]कुत्सेच्छा [5]विस्मयः पुंस्यथापि च ।
आश्चर्यमद्भुतं चोद्यं चित्रं [6]पुंल्लकमित्यपि ॥१०६॥

---

१ भङ्गिश्चेभB २ दरCk ३ भीरवं B ४ कृतेच्छाB ५ विस्मयाःB ६ फुल्लकB

मोह्यावीन्नं च षडमी त्रिषु स्युरथ पुंस्यमी ।
शमः शान्तिः स्त्रियां पुंसि शमथोपशमावपि ॥१०७॥
स्तम्भः स्वेदश्च रोमाञ्चः स्वरभङ्गश्च वेपथुः ।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विका गुणाः ॥१०८॥
स्तम्भो जाड्यं स्वेदधर्मौ [1]निदघः पुलकोऽस्त्रियाम् ।
कण्टकोञ्चश्च रोम्णः स्यादुद्गमो हर्ष इत्यपि ॥१०९॥
उद्धर्षणो[2]ल्लुकसने रोमहर्षणमित्यपि ।
शिखरं पुंसि च क्लीबे पुलश्चाप्यथ कल्लता ॥११०॥
स्वरभङ्गोऽथ कम्पस्तु वेपथुः पुंसि न द्वयोः ।
वैवर्ण्यं कालिमा चाथ नेत्रार्था[3]श्चाम्बुरोदने ॥१११॥
अस्त्रं चास्त्र्यस्तुबाष्पाश्रूण्यथ स्यात्प्रलयः पुमान् ।
नष्टचेतस्त्वमथ च स्त्रियां चिन्ता तु चिन्तिया ॥११२॥
आध्या[4]हम्मी [5]हम्मिरपि स्याज्जृम्भी जृम्भि[6]रित्यथ ।
स्यात्तन्तिश्चिन्तनं क्लीबेऽथोत्साहोध्यवसायकः ॥११३॥
अतिशक्तियुते तत्र वीर्यं [7]वीर्या ततः पुनः ।
[8]हेवाकोऽध्यवसायित्वं जृम्भस्तु त्रिषु जृम्भणम् ॥११४॥
[9]आध्या ध्यानं पुंसि वा स्यादुत्कण्ठोत्कलिके स्त्रियौ ।
हल्लेखा स्याद्रणरणस्तद्व[10]दायल्लकः पुनः ॥११५॥

---

१ निदाघइति स्यात् २ ल्लसनेB ३ श्चाथB ४ हस्मीB ५ हासिरपिB ६ रित्यथCK ७ वीर्यात्ततः पुनःB ८ हिवाकोC ९ आध्यानंCK १० दायल्लकंB

औत्सुक्यं स्यात्पुनः क्लीब औत्कण्ठ्यमपि वा पुनः ।
परिहासः केलिमुखः केलिर्देवननर्मणी ॥११६॥
ताम्बूलमालिकोद्वाहे वरयात्रा तु दौन्दुभी ।
गोपाली वरकेशान्तिर्यात्रा वर[1]निमन्त्रणा ॥११७॥
स्यादिन्द्राणीमहो हेलि[2]रुल्लुलुर्मङ्गलध्वनिः ।
अथ स्वस्त्ययनं पूर्णकलशो मङ्गलादिकम् ॥११८॥
[3]शान्तिकं मङ्गलस्नानं बालपल्लववारिणा ।
हस्तलेपे तु करणं हस्तबन्धे तु पीडनम् ॥११९॥
तच्छेदे समयभ्रंशो धूलि[4]पृक्ते तु वार्त्तिकम् ।
आटोपटोपटंकारावेशा आरभटिः स्त्रियाम् ॥१२०॥
कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे ।
कुसृतिर्निकृतिः शाठ्यं पुंस्युपाधिर्मिषं छलम् ॥१२१॥
अस्त्री दम्भः कल्ककूर्चौ प्रमादोऽनवधानता ।
कौतूहलं कौतुकं च कुतुकं च कुतूहलम् ॥१२२॥
बालाकुचोत्सेधदत्तनखे पुंसि वराटकः ।
स्त्रीणां विलासविब्वोकविभ्रमा ललितं तथा ॥१२३॥
हेला लीलेत्यमी भावाः क्रियाः शृङ्गारभावजाः ।
द्रवकेलिपरीहासाः [5]क्रीडा लीला च नर्म च ॥१२४॥

---

१ निमन्त्रणम् B २ रूललु B ३ शान्तिके OK ४ युक्ते B ५ क्रीडा लीलेत्यादि कुर्दनं स्वित्यन्तं B पुस्तके न दृश्यते ।

व्याजापदेशौ लक्षं षण् भङ्गिर्भङ्गी निमीलिका ।
पदं लक्ष्यं कुर्दनं तु क्रीडा खेला च कूर्दनम् ॥१२५॥
क्रन्दितं रुदितं क्रुष्टं स्वास्थ्यं क्लीबे धृतिः स्त्रियाम् ।
संतोषः पुंसि धैर्यं षण् स्यातां रिङ्गणरिङ्खणे ॥१२६॥
स्खलनं विप्रलम्भस्तु विसंवाद उभौ समौ ।
निद्रा स्त्रियां षण् शयनं संवेशः संलयः समौ ॥१२७॥
स्वापोऽपि सुप्तं क्लीबेऽपि सुस्वापः सुखसुप्तिका ।
इन्द्रियाणां तु संमोहे तन्द्रा नान्दीमुखीत्यपि ॥१२८॥
प्रमीला तन्द्रिका तन्द्री तन्द्रिश्चापि प्रमीलनम् ।
[1]अथ स्याद्दहरस्थस्य मनसः [2]स्मरणभ्रमः ॥१२९॥
पुंसि स्वप्नः श्वासहेती रागसंगौ च गृध्नुता ।
[3]अहंकारोऽभिमानोऽस्त्री मानो गर्वश्च गर्वरः ॥१३०॥
चित्तोन्नतिरथावज्ञा हेला चैवावमानना ।
अवहेला परीभावोऽवमानश्च पराभवः ॥१३१॥
परीभवः [4]परिभवः परिभावोवहेलनम् ।
अनादरोऽवहेलं चाप्यवमानोऽवमाननम् ॥१३२॥
तिरस्क्रिया तिरस्कारो न्यक्कारो[5]निकृतिः स्त्रियाम् ।
निकारः सूक्षणं क्षेपो[6]रीढा सूर्क्षणसूर्क्षणे ॥१३३॥

---

१ अयCK २ स्मरणंB ३ स्त्र्यहंकारोB ४ पराभावःB ५ निःकृतिःK
६ रीढाk

शालिर्द्वयोरभिभवो[1]ऽभिभूतिश्च शला स्त्रियाम् ।
अवज्ञानं च नीकारो व्रीडा व्रीडोप्यपत्रपा ॥१३४॥
मन्दाक्षमपि मन्दाक्ष्यं लज्या लज्जा त्रपाह्रियौ ।
व्रीडनं चाप्यथासूयेर्ष्यान्वीर्या[2] क्षान्तिरित्यपि ॥१३५॥
स च विप्रतियारोथ चरितं शीलमस्त्रियाम् ।
[3]चारित्रं शुभ्रचरिते स्नेहस्तु प्रणयः पुमान् ॥१३६॥
प्रेमास्त्रियां प्रियत्वं षण् हार्दं स्यादथ दोहृदः ।
पुंसि क्लीबे स्पृहा लिप्सा वाञ्छा तृष्णा तृषा रुचिः ॥१३७॥
कान्तिरिच्छा रुगाकाङ्क्षा तृषस्तर्षो मनोरथः ।
अनुतर्षोभिलाषश्च काम ईहारुची स्त्रियौ ॥१३८॥
अत्यर्थं लालसः सोऽस्त्री पुंस्याधिस्तु मनोव्यथा ।
आधी स्याद[4]वहित्था तु स्यादाकारस्य गोपनम् ॥१३९॥
अवहित्थमपि क्लीबेऽथ स्वभावस्तु पुंस्ययम् ।
निसर्गश्च पुनः क्लीबे स्वरूपं रूपमित्यपि ॥१४०॥
कम्पितं कम्पनं कम्पो वेपथुः स्यादथ क्षणः ।
महोत्सवोद्धवाः पुंसि महः सान्तं नपुंसकम् ॥१४१॥
मनीषा धिषणा धीश्चिच्चेतना शेमुषी चिदा ।
प्रज्ञा संज्ञा चितिर्द्धामा विज्ञानं ज्ञानमित्यपि ॥१४२॥

---

१ विभू B २ न्वीर्ष्या B ३ चारित्र्यं B ४ दवहिद्धा B

काव्या संविज्ज्ञप्तिरात्मा पुंसि धीर्धारणावती ।
मतिरप्राप्तविषया बुद्धिः संप्रतिदर्शिनी ॥१४३॥
अतीतानुस्मृतिर्मेधा प्रज्ञा कालत्रयस्मृतिः ।
प्रतिभा नूतनोल्लेखवती पण्डा तु शास्त्रगा ॥१४४॥
शिल्पादिगा तु विज्ञानं क्लीबे ज्ञानं तु मोक्षगा ।
शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा ॥१४५॥
ऊहापोहोर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ।
चित्ताभोगस्तु मनसिकारः स च[1] मनस्करः ॥१४६॥
मानसं कर्मसंकल्पश्चर्चा संख्या विचारणा ।
वितर्कोऽपि द्वयोरूहः कल्पोऽध्याहरणं च षण् ॥१४७॥
अध्यूहनं विचारश्चाध्याहारश्चापि निश्चयः ।
चर्चा विचारणा संख्या गुञ्जा स्यादथ संशयः ॥१४८॥
स्यात्स्त्रियां विचिकित्सापि[2] संदेहद्वापरौ समौ ।
राद्धसिद्धकृतेभ्योन्तः समौ निश्चयनिर्णयौ ॥१४९॥
आगमः समयस्तुल्यावाप्तोक्ति[3] रपि च स्त्रियाम् ।
कृतान्ता[4] पुंस्यथ गिरा चोद्यगीर्भणितिः स्त्रियाम् ।१५०।
पूर्वपक्षो भ्रमो मिथ्यामतिर्भ्रान्तिरपि स्त्रियाम् ।
मिथ्यादृष्टिस्तु नास्तिक्यं व्यापादो द्रोहचिन्तनम् १५१ ॥

---

१ मनस्कारःCK २ विचिकिस्सा तुB ३ वसोक्तिB ४ कृतान्तःB

अथ मोहः पुनः क्लीबे स्यादज्ञानमपि स्त्रियाम् ।
अहंमतिरविद्याथ[1] नियमाश्रवसंश्रवाः ॥१५२॥
संविदागूः प्रतिज्ञानं समाधिस्तु प्रतिश्रवः ।
अङ्गीकारोऽभ्युपगमोप्यथमोक्षोऽपुनर्भवः ॥१५३॥
महानन्दोऽपवर्गः स्त्री[2]निवृत्तिर्मुक्तिरित्यपि ।
सिद्धिः क्लीबे ब्रह्म शिवं श्रेयो निःश्रेयसामृते ॥१५४॥
निर्वाणमपि कैवल्यमक्षरं च महासुखम् ।
अथ स्युः पञ्च भूतानि व्योमेराग्न्यम्बुभूमयः ॥१५५॥
शब्दस्पर्शरूपरसगन्धा भूतगणाः क्रमात् ।
विषयाः स्युरमी ह्येषामिन्द्रिया[3]र्थश्च गोचरः ॥१५६॥
हृषीकं त्वक्षं [4]विषयस्रोतः करणमिन्द्रियम् ।
खं च श्रोत्रं त्वचा चक्षुर्जिह्वा नासा च पञ्चमी ॥१५७॥
पायूपस्थं हस्तपादं वाक् चैव दशमी पुनः ।
ज्ञानेन्द्रियाणि श्रोत्रादि पञ्च पाय्वादिकानि च ।१५८।
विसर्गानन्दग्रहणगतिवाक्यार्थकानि च ।
मन एकादशं बुद्धिरहंकारस्त्रयोदशः ॥१५९॥
शुक्लः शुभ्रः शुचिः श्वेतो विशदः शितिपाण्डुरौ ।
अमलो धवलः शुक्रो बलक्षो रजतः पुनः ॥१६०॥

१ चB २ निवृंत्तिरिति स्यात् ३ र्थाश्च गोचराःC ४ विषयंB विषयि भ्रम.

[1]वदात उज्ज्वलः [2]श्येतः [3]श्येनः स्याच्छुभ्रमव्ययम् ।
अवदातः सितो गौरो विज्ञेयश्चार्जुनः पुनः ॥१६१॥
हरिणः पाण्डुरः पाण्डुः पाण्डरश्चाथ धूसरः ।
ईषत्पाण्डुः श्यामलस्तु कृष्णो नीलोऽसितोऽपि च ॥१६२॥
शितिः कालो मेचकोऽपि रामश्च मिश्रवर्णके ।
कपोताभः कपोतोऽथ पीतः पीतल इत्यपि ॥१६३॥
गौरो हरिद्रासदृशः सितरञ्जन इत्यपि ।
सितरूपस्तालकाभः पलाशो हरितो हरित् ॥१६४॥
लोहितो रोहितो रक्तः शोणः कोकनदच्छविः ।
मञ्जिष्ठो बालसंध्याभोऽव्यक्तरागोऽरुणोऽपि च ॥१६५॥
श्यावस्तु [4]कपिशश्चाथ श्वेतरक्तस्तु पाटलः ।
धूम्रस्तु धूमलः कृष्णलोहितः कपिशो हरिः ॥१६६॥
बभ्रुः पिशङ्गः कपिलः कापिलः पीतलोहितः ।
कडारः कपिशः पिङ्गः कद्रुश्चित्रस्तु कर्बुरः ॥१६७॥
एतकल्माषशबलकिर्मीराश्चित्रलः पुनः ।
गुणे शुक्लादिकाः पुंसि गुणिलिङ्गास्तु तद्वति ॥१६८॥
कल्पद्रौ केशवकृते भुवःस्कन्धो द्वितीयकः ।
सत्रा नाट्यप्रकाण्डेन सफलः सिद्धिमागतः ॥१६९॥

---

१ उदात्तB २ श्वेतःC ३ श्येतःCK ४ कठिणश्चाथB

सूरः सूर्योऽरुणः पूषा गभस्तिः सविता रविः ।
ब्रध्नो विस्तरणिर्मित्रश्चार्यमेनो दिनप्रणीः ॥१॥
मिहिरोऽर्कोऽशुमानद्रिर्हरिर्हेलिर्विरोचनः ।
गोर्द्यौर्भगः पुनस्त्वष्टा ग्रहमुट् किरणः खगः ॥२॥
तापन[1]स्तपनो विष्णुः कर्मसाक्षी विकर्त्तनः ।
मार्त्तण्डो[2]मिहिरो भानुर्हंसो वेदोदयः पुनः ॥३॥
घृणिःपीथः प्रतिदिवाऽ[3]हर्नटो धरुणोऽपि च ।
खद्योतो वरुणः शूरो विश्वप्साः पद्मलाञ्छनः ॥४॥
[4]काश्यपिः काश्यपेयश्च काश्यपश्च गभस्तिमान् ।
चित्रभानुर्भानुमांश्च [5]ज्योतिष्मज्ज्योतिषौ भगः ॥५॥
विवस्वांस्तरलो भास्वानम्बरीषः प्रजापतिः ।
मन्थः किशोरः कुतपो वासन्तः पुष्करः कपिः ॥६॥
प्रद्योतनो विश्वकर्मा दृग्भू[6]र्भातुः सदागतिः ।
सहस्रात्करपादांशुश्चित्रार्थार्चिः सुरः पपीः ॥७॥
करो दिनप्रभार्थेभ्यो दिनार्थेभ्यो वसुर्मणिः ।
पुष्टश्चापि [7]जगद्दीपः सप्ताश्वार्थश्च भारविः ॥८॥
पतङ्गो[8]देवसैन्यार्थो द्वादशाङ्गस्त्रयीतनुः ।
कालोष्णोभ्यो भृत्कृदर्थो जगन्नेत्रार्थ इत्यपि ॥९॥

---

१ स्तसनोB २ मिहरोKB ३ हर्वटोB हेर्नेटोC ४ कश्यपिःCK ५ ज्योतिषोऽज्यौतिषौB ६ र्भातःCB ७ जगद्दीपःB ८ देवशब्दार्थोCK ९ कालोष्णोभ्योB

बहुरूपो हशानः [1]खो भानेभ्यः कोशवाचकः ।
अह्वाब्जिनीधाम दिनत्विट्पतिर्भानुकेसरः ॥१०॥
वीतिहोत्रः कोकलोकाब्जिनी [2]बन्ध्वर्थ इत्यपि ।
सुग्रीवमनुकर्णानां यमयम्योः शनेः पिता ॥११॥
सरण्यूच्छाययोर्भर्त्ता संवत्सरपथार्थकः ।
जलचौरः खलतिको ब्रह्मा ज्योतिश्च न द्वयोः ॥१२॥
माठरः पिङ्गलो दण्डः सूर्यस्य परिपार्श्वगाः ।
अस्य सूतोरुणोनूरुः काश्यपिर्गरुडाग्रजः ॥१३॥
[3]अश्मनो [4]रमणस्तार्क्ष्यो वैनतेयो जटायुसूः ।
गभस्तिर्ना घृणिः पादः करः प्रग्रह इत्यपि ॥१४॥
अभीशुः किरणोभीषुर्भानुरुस्रश्च दीधितिः ।
रश्मिर्मयूख उद्योतः केतुश्चोपधृतिर्वसुः ॥१५॥
आलोकश्च विरोकश्च प्रकाशोंऽशुः स्त्रियां द्युतिः ।
द्युत्विट् प्रभा रुचिर्दीप्तिर्विभा रुक् च त्विषिश्छविः ॥१६॥
[5]त्विषी रुची मरीची स्त्री द्युती स्यादातपोऽस्त्रियाम् ।
धृष्णि[6]र्भामश्च भासश्च द्योतो भामे च [7]भास् द्वयोः ॥१७
गभस्तिश्च गभस्ती च पुंस्त्रियोः [8]परिकीर्तिते ।
क्लीबे तेजो महर्वर्चो ज्योतिर्धाम [9]वपुः पुनः ॥१८॥

१ खोभनेभ्यः B २ वध्वर्थं B ३ आश्मनो B ४ रसम(न) K ५ त्विषां B ६ र्भाश्च Ck
७ भाद्वयोः B ८ परिकीर्तितौ B ९ वयुः B

रोचिः शोचिः पुनश्चार्चिर्न ना [1]पृश्निः शुचिश्च सा ।
गौर्मरीचि [2]र्नोमनिधिमृगतृष्णा मरीचिका ॥१९॥
परिधिः परिवेशश्च [3]परिवेषश्च पुंस्ययम् ।
परीवेशः परीवेषः [4]परीवेशनमण्डले ॥२०॥
कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति ।
तिग्मं तीक्ष्णं खरं तद्वदुपार्क [5]मंडलं त्रिषु ॥२१॥
त्वाष्ट्री सरण्यूर्योग्या स्यात् सरण्युर्द्युमयीति च ।
वैवस्वतयमयमीपर्यायजननीति च ॥२२॥
एतत्पर्यायतश्छाया सवर्णा [6]प्रतिरूपिणी ।
सावर्णि[7]मन्दतपतीविष्टिपर्यायसूरपि ॥२३॥
एते भार्ये रवेरश्वाः सप्तच्छन्दांसि यानि ते ।
जयो जयन्तो विजयो जयत्सेनो जयद्बलः ॥२४॥
मनोजवो जितक्रोधो [8]हंसश्रेण्यायुजः कलाः ।
तपिनी तापिनी धूम्रा मरीचि[9]र्ज्वलिनी रुचिः ॥२५॥
सुषुम्णा भोगदा विश्वा बोधिनी[10]धारणी क्षमा ।
कल्पद्रौ केशवकृते स्वर्गस्कन्धे तृतीयके ।
सूर्यादिमः प्रकाण्डोऽयं प्रथमः सिद्धिमागतः ॥२६॥

———

१ वृश्निःCK २ नौथ निB ३ परिवेषोपिB ४ परिवेशनेति स्यात् ५ त्मंडलंCk
६ प्रितिB ७ मेद्Ck ८ हंसःB ९ चिज्वालिनीCK १० धारिणीKC

धाता सुरासुरगुरुपर्यायः प्रपितामहः ।
चतुराननपर्यायो [1]विरिञ्चिद्रुहिणो विधिः ॥१॥
स्रष्टा प्रजापतिर्वेधा विधाता कमलासनः ।
स्वभूः कञ्जो[2]ब्जपर्यायर्योन्यर्थः सर्वतोमुखः ॥२॥
विरञ्चो [3]विश्वसृड् ब्रह्मा स्त्रियां संजश्चिरंतनः ।
[4]अष्टश्रवाः शतधृतिः पद्मपर्यायलाञ्छनः ॥३॥
सनाद्धंसरथो विश्वसृगर्थः [5]कमनोऽपि च ।
पुराणगीर्वेदगर्भो धरुजो द्रुघणः पुनः ॥४॥
[6]अजो जन्युः सामयोनिः [7]शम्भुनाभिज आपचः ।
विश्वरेताः सदानन्दो भूतात्मा सनदव्ययम् ॥५॥
[8]वेदीशो मृगयुः प्राण आ विरञ्च्यो विरञ्चनः ।
भवान्तकृदजो हंसपर्यायाद्वाहनार्थकः ॥६॥
कुशकेतुर्भाववृत्तो नाभिर्ना शाश्वतः कविः ।
पुराणगीतः स्थविरः प्रपूज्यः कस्ततः पुनः ॥७॥
आत्मस्वयंस्वपद्मानां पर्यायेभ्यो भुवोर्थकः ।
उर्वेधाश्चापि कंजारस्तत्पुत्रा मानसा इमे ॥८॥
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
भृगुर्दक्षः प्रचेताश्च वसिष्ठो नारदस्तथा ॥९॥

---

१ विरञ्चिB २ ज्यपर्यायCK ३ विश्वसृग्KC ४ अब्दCK ५ कमलोB
६ अज्वोCK अब्जोK ७ शंभुर्नाभिज आयवःB ८ चेदीशोKC

सनकाद्या अपि च ते योगिनो बालरूपिणः ।
मारीचः कश्यपस्त्र्यक्षोऽथास्य पत्न्यस्त्रयोदश ॥१०॥
अदितिश्च दितिश्चापि दनुः कालादनायुषा ।
सिंहिका च मुनिः क्रोधा वरिष्ठा सुरभिर्वशा ॥११॥
कद्रूश्च विनता चैता दाक्षायण्योऽथ तत्प्रजाः ।
दैत्या देवाः खगा नागा गावोऽश्वाद्याश्चनेकशः ॥१२॥
सोमो दत्तश्च दुर्वासा [1]आत्रेयाश्च ततः [2]परः ।
[3]बृहस्पत्यभ्युचथ्याद्या अङ्गिरस्तनया अथ ॥१३॥
पौलस्त्यो विश्रवास्तस्य रावणाद्यास्त आसुराः ।
क्रतोर्यज्ञाश्च कर्माणि [4]मृकण्डो भार्गवः कविः ॥१४॥
वासिष्ठः शक्तिरथ च मनुः [5]स्वयंभुवः सुतः ।
ब्रह्मणस्तस्य राज्यस्य कालं स्यात्तदनन्तरम् ॥१५॥
महिषी शतरूपास्य तद्भवाः [6]सर्वमानवाः ।
[7]पलं दीर्घैः षष्टिवर्णैस्तावद्भिस्तैर्घटी मता ॥१६॥
तावतीभिरहोरात्रं घटीभिर्मानुषं पुनः ।
[8]तावद्भिस्तैर्ऋतुस्तैस्तु षड्भिः संवत्सरस्ततः ॥१७॥
दश सप्त दश द्वे च अष्टौ चत्वारि पञ्च च ।
लक्षायुतानि चत्वारि तदेकस्थं चतुर्युगी ॥१८॥

---

१ चात्रेयाश्चCK २ परेB ३ बृहस्पत्युचथ्याद्याB ४ मृकण्डो भार्गवःB ५ स्वायंभुवःCK ६ सर्वदेवताःB ७ पलदीर्घैःCk ८ इतः पूर्वं किंचित्त्रुटितमिव प्रतिभाति

तैरेकसप्ततिमितैर्भवेन्मन्व[1]न्तरं पुनः ।
चतुर्दश ब्राह्ममहस्तावता रात्रिरिष्यते ॥१८॥
एवं त्रिंशद्दिनो मासस्तेपि द्वादश हायनम् ।
तेषां शतं ब्राह्मणः स्या[2]दायुर्नास्त्यत्र संशयः ॥१९॥
चतुर्दश स्युर्मनवो [3]दिवसेस्मिन्विधेर्मताः ।
स्वायंभुवः [4]स्वारोचिष उत्तमस्तामसस्ततः ॥२०॥
रैवतश्चाक्षुषो वैवस्वतः [5]सावर्णिकः परः ।
दक्षब्रह्मधर्मरुद्ररुचिभूतिसुताःक्रमात् ॥२१॥
अथेन्द्राः स्युर्विपश्चिच्च सुशान्तिश्च शिविर्विभुः ।
मनोजवः पुरंदरो वलिरद्भुत इत्यपि ॥२२॥
शान्तिर्वृष ऋतधामा तथा दिवस्पतिः शुचिः ।
अस्य प्रिया तु सावित्री दुहिता तु सरस्वती ॥२३॥
अपि स्याद्ब्राह्मी[6]गिरा वाक् च स्त्रियां लापः पुमानयम् ।
स्याद्वादरेला धिषणा गौर्जूः श्रीःपद्म[7]लाञ्छना ॥२४॥
लिड्[8]गीर्भाषा वाणिगाथे जिह्वा वाणी द्वयोः पुमान् ।
घोषः स्वरः स्वनोऽपि स्याद्वणो धेनापि [9]कारिका ॥२५॥
तारा महाश्री[10]रोंकारा वसुधारा धनप्रदा ।
[11]सुदूरवासिनी भद्रा [12]वेश्या नीलसरस्वती ॥२६॥

---

१ न्तरद्विजB २ दायुस्तत्परमुच्यतेB ३ याममाले॰विधेर्मताःB ४ स्वारोचिषश्चB ५ सावर्णिकाः परेB ६ दुर्गीर्गिरा चापिB ७ लोचनाB ८ धीर्भावाB ९ चारिकाCk १० राकाराB ११ खदूरवासिनीR १२ वेस्याk

तारिणी विजयानन्ता शिवा लोकेश्वरात्मजा ।
प्रज्ञा पारमिता बुद्धमाता स्वाहा मनोरमा ॥२७॥
शंखिनी श्रीर्महातारा लोचना च त्रिलोचना ।
सैषा चतुर्विधा वाणी परा [1]पश्यन्तिका पुनः ॥२८॥
मध्यमा [2]नाभिकण्ठे च मूर्द्धस्थाने स्थिताः क्रमात् ।
गुप्तस्थानस्थितास्तिस्त्रश्चतुर्थी किल वैखरी ॥२९॥
देवादीनां मनुष्याणां वर्णव्यापारकारिका ।
व्याहारउक्तिर्लपितं भाषितं वचनं वचः ॥३०॥
तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकान्विता ।
श्रुतिस्त्रयी [3]स्त्रियां वेद आम्नाय ऋषिरित्यपि ॥३१॥
निगमश्च पुनः क्लीबे छन्दो ब्रह्माथ बह्वृचः ।
ऋग्वेदः पुंस्यथ क्लीबे यजुः सामापि न द्वयोः ॥३२॥
स्वरपत्तनमुक्थं तदृक् सामयजुषी त्रयी ।
तदुद्धृतिरथर्वास्यादथैषां चरणक्रमः ॥३३॥
एकविंशत्येकशतचतुःपञ्चेति ताः क्रमात् ।
शिक्षा ज्योतिर्निरुक्तं च कल्पो व्याकरणं तथा ॥३४॥
छन्दो नासा दृक् श्रुतिश्च हस्तौ वदनमित्यपि ।
पादौ श्रुतेस्तदर्थानि शाखाभेदः पुनश्च षण् ॥३५॥

---

१ पश्यन्तिको B २ नाभिकण्ठौ च मूर्द्धा Ck ३ स्त्रियौ CK

चरणंचाथ मीमांसा धर्मशास्त्रं विचारणा ।
वेदान्तोऽस्त्री ब्रह्मविद्या स्त्रियामुपनिषत्पुनः ॥३६॥
[1]आन्वीक्षिकी तर्कविद्या न्यायः [2]स्यादर्थशास्त्रयोः ।
पुराणमष्टादशधा [3]तदेवं पञ्चलक्षणम् ॥३७॥
सृष्टिप्रलयवंशाश्च वंशानुचरितानि च ।
मन्वन्तराणीत्यथ च धर्मशास्त्रं स्मृतिः स्त्रियाम् ॥३८॥
अष्टादशविवादानामनुशासनमित्यपि ।
सांख्यं शांख्यं कापिलं स्यादथापि चरकोऽस्त्रियाम् ॥३६
[4]व्याहारउक्तिर्लपितं भाषितं वचनं वचः ।
अपभ्रंशोऽपशब्दः स्यान्म्लेच्छभाषा तु भाषितम् ॥४०॥
म्लेच्छो ना म्लेच्छितं क्लीबे शास्त्रे शब्दस्तु वाचकः ।
वाय्वग्निभूजलाकाशा ह्रस्वा दीर्घाश्च संधिजाः ॥४१॥
विन्द्वन्ताः पञ्च पञ्चापि ह्रस्वदीर्घप्लुताः क्रमात् ।
[5]ऌवर्जास्त उदात्तानुदात्तस्वरितभेदतः ॥४२॥
त्रिविधा अनुदात्तस्तु निघातो नीच इत्यपि ।
उच्चैरुदात्तः स्वरितः समवृत्तिरथोहलः ॥४३॥
स्पर्शाः काद्या मावसाना व्यापका यादिहान्तगाः ।
द्व्यधिका विंशतिरचो दीर्घाभावाल्लृसंज्ञके ॥४४॥

ह्रस्वाभावात्तथैवैचां चत्वारोन्ये यमा इति ।
कुं खुं गुं घुममीषां च समावेशः क्रमाद्यथा ॥४५॥
पदेनन्त्यस्तु प्रथमोन्योन्त्यः [1]स्यात्परतो यदि ।
[2]यथासंख्यो यमावेशस्तयोर्मध्ये मतान्तरम् ॥४६॥
क्लीबेऽक्षरं तु वर्णोर्णो ग्रन्थोद्वात्रिंशदक्षरी ।
अपि प्रबन्धः संदर्भः सूत्रंसूचनकारि यत् ॥४७॥
भाष्यं सूत्रप्रयुक्तार्थकठिनांशप्रकाशकम् ।
उक्तानुक्तदुरूहार्थचिन्ताकारि तु वार्त्तिकम् ॥४८॥
टीका निरन्तरव्याख्या पञ्जिका पदभञ्जिका ।
निबन्धवृत्ती अन्वर्थे संग्रहस्तु समाहृतिः ॥४९॥
चूर्णी चूर्णिरुभेतुल्ये पद्धती पद्धतिः समे ।
इत्येवं प्ररिशिष्टादि पथानेन समुन्नयेत् ॥५०॥
पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना ।
आक्षेपश्च समाधानं व्याख्यानं वर्णनं समे ॥५१॥
कारिका तु स्वल्प[3]वृत्ता बह्वर्थस्य प्रकाशिका ।
कलिन्दिका सर्वविद्या निघण्टुर्नामसंग्रहः ॥५२॥
इतिहासः पुरावृत्तमाख्यानं भारतादिकम् ।
सर्गबन्धो महाकाव्यं तत्स्यादेभिर्गुणैर्यतम् ॥५३॥

---

१ स्यानन्त्यतो यदिB २ यमावेशास्तयोर्मध्ये यथासंख्यो मतान्तरेB ३ वृत्तौK

समस्तैर्वर्णनीयैः स्याद् भूपामात्य[1]पुरोहिताः ।
राजवध्वश्च तत्पुत्राः सैन्यपः सैन्यनिर्गमः ॥५४॥
विषयो नगरं ग्रामः सरित्स्रोतस्विनी वनम् ।
आश्रमो वाटिका[2]मन्त्र ऋतुः समय इत्यपि ॥५५॥
हस्त्यश्वरथचन्द्रार्कास्तोदया विरहो रतम् ।
स्वयंवरस्तथा युद्धं पुष्पावचय इत्यपि ॥५६॥
एतैरन्यैश्च संयुक्तं महारूपकनाटके ।
[3]अथ वाङ्मयभेदाः स्युश्चम्पूः खण्डकथा कथा ॥५७॥
प्रबन्धकल्पना सा स्यात् प्रवह्लिका प्रहेलिका ।
प्रहेलिः प्रश्नदूती च रथ्यावादस्तु वादलः ॥५८॥
समस्या तु समासार्था समाहारस्तु संग्रहः ।
आख्यायिकोपरिकथोपलब्धार्थापि चेष्यते ॥५९॥
आख्यायिकापरिच्छेदे त्वाश्वासोच्छ्वासकौ समौ ।
संदानमनिरुद्धं च प्रकीर्णं गुच्छकादिकम् ॥६०॥
सर्गो वर्गः परिच्छेदो द्योताध्यायाङ्कसंग्रहाः ।
उल्लासः परिवर्त्तश्च पटलः काण्डमस्त्रियाम् ॥६१॥
स्थानं प्रकरणं पर्वाह्निकं तु शीघ्रपाठतः ।
अवान्तरप्रकरणं [4]विश्रामो ग्रन्थसंधयः ॥६२॥

---

१ पुरोहितैःB २ मन्त्रो दूतःB ३ अथवाव्ययभेदाःB ४ विश्रामाB

अथाधिकरणं तद्यदेकन्यायोपपादनम् ।
प्रज्ञप्तिः परिभाषा स्याच्छैली संकेत इत्यपि ॥६३॥
प्रतिवाणिरभिप्रायः समुदाचार इत्यपि ।
प्रतिवचनं [1]संगरिका प्रतिरूपकथापि च ॥६४॥
स्यात्स्वाच्छन्द्यानुमननं प्राकाम्यं चावसर्गकः ।
ऐतिह्यं ना द्वयोर्वार्त्ता किंवदन्ती पुरातनी ॥६५॥
जनश्रुतिः किंवदन्तिर्वार्त्तोदन्तः पुमानयम् ।
वृत्तान्तोऽपि प्रवृत्तिः स्त्री नामधेयं च नाम च ॥६६॥
गोत्रं स्त्रियामभिख्याख्या संज्ञाह्वा ना समाह्वयः ।
लक्षणं लक्ष्मणं क्लीबेऽभिधानमभिधा स्त्रियाम् ॥६७॥
अथाभिमन्त्रणं हूतिः स्त्रियामाकारणं न ना ।
सम्बोधनमामन्त्रणमाह्वानं चाह्वः पुमान् ॥६८॥
आकारणं द्वयोर्हूतिः स्त्रियां सा बहुभिः कृता ।
संहूतिश्च प्रहूतिः स्यादाहूतिरथ वाङ्मुखम् ॥६९॥
उपन्यास उपोद्घात उदाहारः शपः पुमान् ।
शपथः शपनं क्लीबे प्रतिवाक्योत्तरे समे ॥७०॥
कथंकथिकता तु स्यात् पृच्छा प्रश्नोऽनुयोजनम् ।
अनुयोगोप्यथो दैवप्रश्नः स्त्रो स्यादुपश्रुतिः ॥७१॥

चटु चाटु प्रियप्रायं प्रियसत्यं तु सूनृतम् ।
सत्यं तथ्यं समीचीनमृतं सत्यं यथातथम् ॥७२॥
यथास्थितं च सद्भूतेऽलीके तु वितथानृते ।
अथ क्लिष्टं संकुलं च परस्परपरा[1]हृते ॥७३॥
अत्यर्थमधुरं सान्त्वं संगतं हृदयंगमम् ।
परुषं निष्ठुरं रूक्षं विकुष्टं क्लिष्टमस्फुटम् ॥७४॥
लुप्तवर्णपदं ग्रस्तमवाच्यं स्यादनक्षरम् ।
अम्बूकृतं सनिष्ठीवं निरस्तं त्वरितोदिदम् ॥७५॥
आम्रेडितं द्विस्त्रिरुक्तमबद्धं तु निरर्थकम् ।
[2]सोल्लुण्ठनं तु सोत्प्रासं मणितं रतकूजितम् ॥७६॥
सुरते कर्णमूले च [3]व्यक्तदेशीयभाषया ।
दम्पत्योर्जल्पितं मन्दं मन्मनं तं विदुर्बुधाः ॥७७॥
चाटुपूर्वाणि सर्वाणि त्रिष्वमूनि च तद्वति ।
पृष्ठमांसादनं [3]तद्यत्परोक्षे दोषकीर्त्तनम् ॥७८॥
मिथ्याभियोगोभ्याख्यानं ग्राम्यमश्लीलमित्यपि ।
उच्चैर्घुष्टं घोषणा स्त्री संगतं हृदयंगमम् ॥७९॥
परुषं निष्ठुरं रूक्षं विकुष्टं चाप्यथ स्तुतिः ।
वर्णनेडा प्रशंसा स्यान्नुतिः श्लाघा स्तवो नवः ॥८०॥

---

१ हृतम् B २ सोल्लुण्ठनमित्यादि संलापसंकथे इत्यन्तं पञ्चविंशतिरर्द्धानि B पुस्तके नोपलभ्यन्ते ३ यत्तत्परोक्षे Ck

क्लीबे स्तोत्रं चार्थवादः सा तु मिथ्याविकत्थनम् ।
जनप्रवादः कौलीनं वगानं वचनीयता ॥८१॥
स्यादवर्ण उपक्रोशो वादो निःपर्यवात्परः ।
गर्हणा धिक्क्रिया निन्दा कुत्सा क्षेपो जुगुप्सनम् ॥८२॥
आक्रोशाभीषङ्गाक्षेपाः शापः साक्षारणा रते ।
विरुद्धशंसनं गालिराशीर्मङ्गलशंसने ॥८३॥
श्लोकः पुंसि यशः क्लीबे अभिख्या स्यात्समज्ञया ।
यशः क्लीबे स्त्रियां कीर्त्तिः समाख्याता समाज्ञया ॥८४॥
समाख्या कीर्त्तनापि स्यात्समाज्यापि समज्यया ।
त्रिषूत्तरे स्युर्वाग्भेदा रुशती त्वशुभा च वाक् ॥८५॥
उषती चाप्यथ पुनः कल्पा काल्पा शुभात्मिका ।
सैव ज्ञेया चर्चरी च वर्त्तरी च समे इमे ॥८६॥
यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम् ।
आपृच्छालापसंभाषोऽनुलापः स्यान्मुहुर्वचः ॥८७॥
अनर्थकं तु प्रलापो न ना तु परिदेवना ।
उल्लापः स्यात् काकुवागन्योक्तिः संलापसंकथे ॥८८॥
समासप्रायवचनमपि स्याद्दण्डकोऽस्त्रियाम् ।
विप्रलापो विरोधोक्तावपलापस्तु निह्नवः ॥८९॥

अपह्नुतिर्निह्नुतिश्च निह्नुती स्यादपह्नुती ।
सुप्रलापः सुवचनं संदेशगिरि वाचिकम् ॥६०॥
आज्ञा शिष्टिर्निराङ्विभ्यो देशो[1]नियोगः शासनम् ।
अनुवादोप्यथाहूय प्रेषणं प्रतियातनम् ॥६१॥
[2]संवित्संधास्थाभ्युपायः संप्रत्याङ्भ्यः परः श्रवः ।
अङ्गीकारोभ्युपगमः प्रतिज्ञागूश्च संगरः ॥६२॥
वाक्क्रोधगर्भा [3]वैद्योता स्नेहगर्भा तु [4]माल्लुका ।
निर्वेदगर्भा निःसंगा दैन्यगर्भा तु नश्वरी ॥६३॥
[5]कुटिनारी तु या कूटवाग्वैदर्भं च तन्मतम् ।
वर्करस्तु स एवोक्तो यदि द्व्यर्थैः पदैः कथा ॥६४॥
[6]हूत्कार आर्त्तशब्दः स्यादोवल्लिर्व्याघ्रगर्जने ।
मुखघण्टा हुलहुली [7]गल्लवाद्यमथ श्रमात् ॥६५॥
सुखनिद्रादिशब्दो यस्तत्र [8]नन्दीमुखी स्त्रियाम् ।
घुरिका श्वासहेतिश्च बोरिका [9]टरटोऽपि च ॥६६॥
अङ्गुष्ठतर्जनीशब्दः स्त्रियां सा छोटिका मता ।
अङ्गुष्ठमध्यमाशब्दो मदस्फुटिरुदीरिता ॥६७॥
स एव हस्तचटकारोप इत्यभिधीयते ।
कोयष्टिकादेः स्तभनं रोलोऽस्पष्टरवे पुमान् ॥६८॥

---

१ वियोगशासनम् B २ संचित्संधा CK ३ वैद्योता B ४ मल्लुका B ५ कुटिलाटी तु या कूटे B ६ धूत्कार B ७ मल्लवाद्य B ८ नान्दी B ९ ठरटो B

निःसाणोऽनेकवाद्यानामेकदा यो रणो ध्वनिः ।
भेरीशतसहस्राणि तथादशशतानि च ॥९९॥
युगपद्यत्र वाद्यन्ते कोणाघातः स उच्यते ।
शब्दो निनादो निर्घोषो निह्रादो निःस्वनः स्वनः ॥१००॥
[1]स्वानो ध्वानः स्वरो ह्रादो निस्वानो रव इत्यपि ।
नादो घोषः क्वणः क्वाणो निक्वाणो निक्वणः क्वणः १०१
समाविभ्यः परो रावस्तथैव च पुनः स्त्रियौ ।
ध्वनिः स्वनिरपि क्लीबे [2]फणनं चाथ रोदनम् ॥१०२॥
क्रन्दितं रुदितं क्रुष्टं तदपुष्टं तु गह्वरः[3] ।
शब्दो गुणानुरागोत्थः प्रणादः [4]सीत्कृतं नृणाम् ॥१०३॥
पर्दनं गुदजे शब्दे कर्दनं कुक्षिसंभवे ।
कोलाहलः कलरवः संकुलो व्याकुलो रवः ॥१०४॥
मर्मरो वस्त्रपर्णादेर्भूषणानां तु शिञ्जितम् ।
हेषा ह्रेषा तुरङ्गाणां गजानां गर्जबृंहिते ॥१०५॥
कूजितं स्याद्विहङ्गानां तिरश्चां [5]वासितं रुतम् ।
[6]वृषस्य रेषणं रेषा वुक्कनं भषणं शुनः ॥१०६॥
पीडितानां तु कणितं प्रक्वाणः प्रक्वणोऽपि च ।
वीणायाः क्वणिते च स्यान्मर्दलस्य तु गुंदलः ॥१०७॥

१ स्वानो ध्वनिः स्वरो ह्रासो B २ क्वणनं B ३ गाकरः B ४ सीत्कृते B
५ वाशितं B ६ वृकस्येति स्यात् ।

